भेदान्तरं व्याचष्टे—

द्विविधः प्रथमः ॥ ९१ ॥

आद्यो जीवमयः प्रवाहो द्विविधः द्विप्रकारको विज्ञेयः। तस्य प्रवाहस्य शाखाद्वयमवगन्तव्यमित्यर्थः। नदीशाखा इयं परस्परं मिलित्वा सुविपुलैकनदीरूपेण परिणमते, यथा भागीरथी यमुनया मिलित्वा प्राबल्यं धारयति, तथैव जीवमयी धारा शाखाद्वयेन प्रवहन्त्यवसाने ह्येकीभूय ब्रह्मसमुद्रे विलयं गच्छति ॥ ९१ ॥

विज्ञानमिदं स्पष्टयति—

प्राकृतिक एकः स्वतन्त्रो परः ॥ ९२ ॥

एतच्छाखाद्वयरहस्यं सुस्पष्टं विधातुं महर्षिः सूत्रकारः सूत्रमिदमवतारयति। सहजकर्मसम्बन्धिनी प्राकृतिकी, जैवकर्मसम्बन्धिनी तद्भिन्ना स्वाधीना चेति जैवी धारा द्विधा विभज्यते प्राकृतिकी जीवधारोद्भिज्जादेः प्रकटीभूय मनुष्यत्वप्राप्तौ पूर्णरूपेण गुप्ता सती जीवन्मुक्त महात्मनि प्रकटीभवति। स्वाधीना किल धारा मानवीये दैवे च पिण्डे समुत्पद्य गमनागमनचक्रे परिभ्रमन्ती पुनर्मुक्तिभूमिमासाद्य सहजधारायां विलीयते। वस्तुतः शाखाद्वयमप्येतज्जीवमयस्य प्रवाहस्यैवाङ्गभूतमवगन्तव्यम् ॥ ९२ ॥

द्वयोः कार्यमभिधीयते—

मुक्तिबन्धनिमित्ते ॥ ९३ ॥

द्वयोरेतयोः प्राकृतिकी जीवधारा विमुक्तेः स्वाधीना च बन्धनस्य हेतुतामापद्यते। जीवो यदा क्रमशः स्वीयपञ्चकोषपरिपूर्णतां सम्पादयन् मनुष्यत्वमुपैति, तदाऽसौ स्वस्य पिण्डस्याधीश्वरो जायते। तदानीमेव स्वाधीनतामासाद्य निजनूतनवासनाद्वारा नवीनानि

कर्माणि सगृह्णन् आवागमनचक्रस्य स्थितिशीलतां सम्पादयति। स्वतन्त्रेयं जीवधारा बन्धनकारणभूता भवति। द्वितीया किल प्राकृतिकनियमनुसृत्य स्वाभाविकस्वरूपतः प्रवहन्ती गमागमचक्रं विनाश्य मुक्तेर्हेतुतामधिगच्छति। यथा किल तरलतरङ्गा पतितपावनी गङ्गा वस्तुमात्रमेव निजप्रवाहे प्रवाहयन्ती महार्णवं प्रापयति। यदि किञ्चिद् वस्तु मध्येप्रवाहमावर्त्तग्रस्तं चेत्तदपि कालेनावर्त्तान्मोचयित्वा, पुनरपि सरलगत्या वारिधिं नेनीयते, तथैव प्राकृतिकी कर्मधारा प्रथमदशायामुद्भिज्जादितो क्रमोन्नतिं सम्पादयन्ती जीवान् मानवत्वमुपढौकते। तदनन्तरं चावागमनचक्रग्रस्तानपि जीवान् आवर्त्तसहस्रेभ्यो विमोच्य पुनस्तेभ्यो मुक्तिं वितरति॥ ९३॥

प्रथमप्रवाहस्य परिचयोऽत्र दीयते—

## आद्यो देवरक्षितः सारल्यात्॥ ९४॥

प्राकृतिकस्वतन्त्रयो र्द्वयोश्चेतनप्रवाहयोराद्यः प्राकृतिकः सारल्येन हेतुना देवैः संरक्षितः, दैवीमीमांसादर्शने सविस्तरमिदं सिद्धान्तितं यत् सहजपिण्डेषु प्रत्येकयोनिसंरक्षणशीलाः पृथक् पृथग्रूपेण देवाः समाम्नाताः। असौ प्राकृतिकः प्रवाहो गुप्तरूपेण जीवन्मुक्तदशायां प्राकट्यमासादयन् पुनरपि देवसुरक्षितो जायते। जीवन्मुक्तमहापुरुषे तदीयवासनाजालस्य विलीयमानत्वात् स्वेच्छया न किमपि कार्यं सम्पद्यते, स च महात्मा दैवेच्छाप्रेरितो जगत्कल्याणकरंकार्यकलापं विधत्ते, यथा किल स्वेदजाण्डजादिजीवाः स्वस्वप्रकृतिवशगा भोगेषु प्रवर्त्तन्ते, तथैवासावपि प्रारब्धसंस्कारवेगतः कर्मणि प्रवर्त्तमानो वोभवीति। यद्वदज्ञानवशतामुपेत्य मानवेतरजीवाः कर्माणि विदधते, तद्वदेव स्वरूपस्थिता जीवन्मुक्ता महात्मानो जैववासनाविरहिताः प्रारब्धवेगतः क्रियाकलापमनुतिष्ठन्ति। दशायामत्र स्वतः सिध्यति दैवसाहाय्यम्, यतो जड-

कर्मणां चालका देवा एव। अन्यच्च जीवन्मुक्ता ईशकोटिगा यदि जगत्कल्याणनिरताः क्रियमाणकर्मशीलवत् प्रतीयेरन् तर्हीदमवधेयं यत् ते दैवक्रियानिष्पत्तये भगवत्प्रेरिता एवं विदधत इति ॥९४॥

द्वितीयस्य विशिष्टः परिचयो दीयते—

## विभूत्या रक्षितोऽपरो वैपरीत्यात् ॥ ९५ ॥

अपरः स्वाधीनप्रवाहः प्राकृतिकप्रवाहविपरीतत्वाद् विभूतिद्वारा सुरक्षितः सुव्यवस्थापितः। बहुशाखायुक्ते सकामे स्वाधीनप्रवाहे आनन्त्याज्जैवकर्मणस्तत्संरक्षणे समपेक्षितं किल दैवसाहाय्यम्। यतोहि कर्मणः संचालकाः फलदातारोऽपि देवा एव; तथापि मानवपिण्डसमुद्भूतिभिः किल तदीया सदसद्व्यवस्था विधीयते। प्राकृतिकप्रवाहः खल्वेकरसः स्वाधीनस्तु न तथा। दुर्गासप्तशतीप्रतिपादितदेवीमाहात्म्यप्रोक्तरक्तबीजवद् विस्तृतिमापन्ना जैव्यो वासना बहुशाखा ह्यनन्ताश्च। कर्मणो जड़त्वेन हेतुना प्रेरकत्वफलदातृत्वविचारे क्रियमाणे सर्वावस्थासु गौणरूपेण दैव्यां सहायतायां सत्यामपि स्वाधीनप्रवाहे विभूतिसाहाय्यस्य प्राधान्यम्। यतोहि जैववासनाप्राबल्यात् दैवसाहाय्यगौणत्वाच्च मानवलोकसमुत्पन्नविभूतिद्वारा तत्संरक्षणमत्यावश्यकम्। साधारणमानवेतरचतुर्विधभूतसङ्घेषु जीवन्मुक्तमहापुरुषेषु च प्रकृतिवेगेनैव कर्म सम्पद्यते। अतः प्राकृतिकप्रवाहे नितरां विद्यते सारल्यम्। किन्तु स्वाधीनप्रवाहे जीवः स्वातन्त्र्येण सदसत्संस्कारान् संगृह्णन् स्वकीयं वासनाजालं निरन्तरं प्रवर्धयते, अतः किलापरः प्रवाहो विपरीतो बहुशाखासंयुक्तोऽनन्तो जटिलश्च। मानवानां स्वाधीनताऽवलम्बनेन दैवी दृष्टिर्गौणायते, तत्प्रवाहव्यवस्थापनं देवैरुपेक्ष्यते। सुतरां सर्वशक्तिमतः सर्वहितनिरतस्य भगवतः श्रीपरमेशितुरीहया तदीयजगद्धितकरान् नियमानवलम्बमानै-

राजाचार्यगुरुगृहपति-समाजपतिप्रभृतिभिर्विभूतिस्वरूपैः प्रवाहोऽयं संरक्ष्यते। अत एव मानवसमाजे राजानुशासन-शब्दानुशासन-योगानुशासनानां प्रयोजनीयता ॥ ९५ ॥

विज्ञानमिदं सुस्पष्टयति—

**तद्दैवापेक्ष्यं जड़त्वात् ॥ ९६ ॥**

कर्मणोजड़त्वाद्धेतोस्तद्दैवसापेक्ष्यमवधार्यम्। प्रथमं हि कर्मणो विभागत्रयम्, ततो जैवकर्मणः श्रेणीद्वयम्, तत्रापि दैवसाहाय्यस्य गौणत्वं मुख्यत्वं च विचारयतो जिज्ञासमानस्य हृदयस्थां शङ्कां समाधातुं पूज्यचरणो महर्षिः सूत्रकृदभिधत्ते—कुत्रचिन्मुख्यत्वे गौणत्वेऽपि सिद्धान्ततः सर्वकर्ममूलेषु दैवसाहाय्यप्रयोजनीयता स्थायिनी। वस्तुतः कर्मणो जडत्वात्तत्सञ्चालनं चेतनशक्तिसापेक्ष्यम्। यत्तु कैश्चिद्दार्शनिकैरुच्यते यद्विनापि चेतनसाहाय्यं कर्म क्रियाशीलं तदसङ्गतम्। जड़पदार्थास्तच्छक्तयो वा दैवसाहाय्यमन्तरा न नियमेन कार्यमनुष्ठातुमर्हन्ति, जडश्रृङ्खलायाश्चेतनसंसाधितत्वात्। जड़शक्तयोऽपि कुत्रापि स्वयं कार्यकारिण्यो दृश्यन्ते इतिचेन्न, चुम्बकस्य लौहाकर्षणं काचस्य वह्नयुत्पादनं, मेघस्य वज्रनिपातनं चेत्यादि स्वतः क्रियाशीलमपि तन्मूले बुद्धिजीविन्याश्चेतनशक्तेरवश्यं सद्भावोऽन्यथा तत्र श्रृङ्खलाबद्धं कार्यमसम्भवम्, व्यवस्थाश्रृङ्खलाभावात्तदुपयोगस्य नाणीयोऽपि मूल्यम्। अतो लौकिकजड़शक्तीनां बुद्धिमन्मानवचालितत्वेऽलौकिकजड़शक्तिसमष्टीनां देवचालितत्वे तत्तत्सदुपयोगसम्भवः। सुतरां समभ्युपगन्तव्यमेवेदं यज् जडशक्तिसम्पन्नस्य कर्मणश्चेतनशक्तिसम्पन्नानां देवानां सर्वशक्तिकेन्द्रस्वरूपसगुणब्रह्मणः परमेश्वरस्य वा द्वारा चालितत्वं विना तदुपयोगो नितरामसम्भव एव। अतः सिद्धमिदं यत् जड़स्य कर्मणः क्रियाशीलता चेतनसाहाय्यसापेक्षेति ॥ ९६ ॥

सहजस्य कर्मणः सम्बन्धे प्रोच्यते—

**सहजमायत्तं प्रकृतेः ॥ ६७ ॥**

सहजं कर्म प्रकृतेरधीनमित्यर्थः। सहजकर्मणः सविस्तरं स्वरूप-वर्णनं पूर्वमेव प्रतिपादितम्। प्रकृतेस्त्रिगुणतरङ्गसहजातत्वात्सहज-मिति तन्नाम। तेनैतस्य प्रकृतिनिघ्नता स्वतः सिद्धा। सहजकर्म-चिज्जड़ग्रन्थिसमुद्भूतो जीवः स्वत एवोद्भिज्जस्वेदजादिषु बम्भ्रम्य-माणो मानवयोनिमधिगच्छति, सहजकर्मणश्चैतद्गतेर्नास्ति जीवे-प्सितविशेषकारणम्। केवलं प्रकृतेः स्वाभाविकया गत्यैवैतत्स्वतः सम्पद्यते। तरङ्गितायाः प्रकृतेस्तमसः सत्त्वाभिमुखं संसरणादेवेयं क्रिया संवोभवीति ॥ ९७ ॥

पूर्वप्रसङ्गात् तत्फलं निर्दिशति—

**तस्माद्दैवसाहाय्यमपेक्ष्यम् ॥ ९८ ॥**

एतस्माद्धेतो र्देवानां साहाय्यमत्रापेक्ष्यम्। सहजकर्मणः प्रकृति-निघ्नतया, तदीयक्रियया साकं जैववासनासम्बन्धाभावाच्च नूनमिद-मङ्गीकार्यं तत् तद्धि पूर्णरूपेण दैवं साहाय्यं समपेक्षते, जड़त्वाद्यदि कर्म चेतनशक्तिसापेक्ष्यम्, यदि च सहजेन कर्मणा सार्द्धं जैववास-नाया न कोपि सम्बन्धस्तर्हि स्वीकार्यमेवेदं यत् सहजकर्मफलोत्पत्तौ ध्रुवमेव दैवसाहाय्यसम्भवः। कर्मणः सञ्चालनं यदा मानवपिण्डस्य दैवपिण्डस्य चेच्छाशक्तिक्रियाशक्तिसाहाय्यापेक्ष्यं सहजे कर्मणि च मानवीयेच्छाशक्तिसम्बन्धात्यन्ताभावश्चेत्तर्हीदं सिध्यति यत्सहजं कर्म दैवसाहाय्यसापेक्ष्यम् ॥ ९८ ॥

इदानीं जैवकर्मसम्बन्धे प्रणिगद्यते—

**जैवं जीवनिघ्नम् ॥ ६६ ॥**

जैवं कर्म जीवाधीनमित्यर्थः। जैवकर्ममूले पूर्णावयवजीवस्ये-च्छाशक्तिः कार्यकारिणीति हेतोर्जैवं कर्म जीवाधीनमवगन्तव्यम्।

सञ्चितप्रारब्धक्रियमाण-संस्काराणां मानववासनासम्भूतत्वात् तदीय-संस्कारवीजवृत्तस्वरूपस्य जैवकर्मणो मनुष्यवासना समुत्पद्यमानत्व-मवश्यमेवावधेयम्, अतो जैवं कर्म जीवायत्तमिति सिद्धम् ॥ ९९ ॥

प्रसङ्गतस्तस्य दैवसम्बन्धं निदर्शयति—

**अतस्तदर्द्धम् ॥ १०० ॥**

अतः कारणात् तत् जैवं कर्म देवानामर्धं साहाय्यमपेक्षते। सहजे कर्मणि यथा किल देवानाम् इच्छाशक्तिक्रियाशक्तिसम-पेक्षा, न तथा जैवे कर्मणि। तत्रामराणां केवलं क्रियाशक्तिसाहाय्य-मपेक्षितमित्यतस्तत्रार्द्धं दैवसाहाय्यमभ्युपगन्तव्यम्। जैवकर्मसंस्कार-संग्रहस्तद्वासनयैव सम्पद्यमानः। अतो जीवेच्छाशक्तिसम्बन्धा-ज्जैवे कर्मणि जीवस्यार्द्धसम्बन्ध एव वेदितव्यः। अन्यच्च कर्मफल-दातृत्वं दैवाधीनमितिहेतोस्तत्र देवानां केवलं क्रियाशक्तेरपेक्षैव, तस्मात् जैवे कर्मणि सुराणामर्द्धसम्बन्ध एव सिद्धः ॥ १०० ॥

स्थूलप्रपञ्चे कर्मसम्बन्धं निर्दिशति—

**कर्मणाकर्षणविकर्षणे स्थूलसम्बद्धे ॥ १०१ ॥**

कर्मणा हेतुभूतेन स्थूलसम्बन्धयुक्ते आकर्षणविकर्षणशक्ती समुत्पद्येते। कर्मणः प्रभावादेव स्थूलप्रपञ्चेषु प्रोक्तशक्तिद्वयाविर्भावः सूक्ष्मातिसूक्ष्मपरमाणोरारभ्य महीयो ग्रहोपग्रहं यावत् सर्वत्रैव परि-लक्ष्यमाणे आकर्षणविकर्षणशक्ती कर्मजनिते एव। सर्वत्रैव स्थूल-प्रपञ्चे शक्तिद्वयविद्यमानता प्रत्यक्षसिद्धा आकर्षणस्य, विकर्षणस्य तत्समन्वयस्य चेत्यवस्थात्रयं जायते। परस्परमाकृष्टाः परमा-णवः पाषाणादीन् जनयन्त्येषाऽऽकर्षणदशा, विकृष्टाश्च ते तान् विनाशयन्तीतीयं विकर्षणावस्था। उभयोर्मध्ये विद्यमाना समन्वय-स्थितिश्चेत्यवस्थात्रयं निर्विवादमेव। उपर्युक्तं शक्तिद्वयमवस्था-त्रयञ्च सर्वमिदं समष्टिव्यष्टिकर्मजमेव ॥ १०१ ॥

प्रसङ्गतः शक्तिद्वयस्य गुणसम्बन्धो निर्दिश्यते—

## रजस्तमोमूलकमुभयम् ॥ १०२ ॥

उभयमाकर्षणं विकर्षणं च रजोमूलकं तमोमूलकं चावगन्तव्यम् । त्रिगुणात्मकस्यैतस्य प्रपञ्चस्य सर्वाण्यप्यङ्गोपाङ्गानि न त्रिगुणभिन्नानि । संसारप्रपञ्चमूलकारणभूतायाः प्रकृतेस्त्रिगुणात्मकत्वात्तदुत्पन्नाः सर्वेऽपि पदार्था स्त्रिगुणात्मकाः सिद्धाः । एतत्प्राकृतिकनियममनुसृत्याकर्षणं रजोगुणप्रादुर्भूतं विकर्षणं च तमोगुणसम्भूतमनुसन्धेयम् । प्रपञ्चस्यावस्थात्रयं प्रत्यक्षतोऽपि सिद्धम् परमाणूनामन्योन्यमाकर्षणं रजोजनितं ब्रह्मणश्चतुराननस्य सृष्टिकार्यमुच्यते, शक्तिद्वयसमन्वयो हि भगवतः श्रीविष्णोः स्थितिकार्यं, तच्च सत्त्वगुणात्मकमेव, परमाणूनां विकर्षणं पृथग्भाव एव भगवतो रुद्रस्य तमोगुणात्मकं संहारकार्यमवसीयते, सुतरामाकर्षणं राजसिकं विकर्षणं च तामसिकं सिद्धम् ॥ १०२ ॥

सूक्ष्मप्रपञ्चे तत्सम्बन्धं निदर्शयति—

## सूक्ष्मसम्बद्धौ रागद्वेषौ ॥ १०३ ॥

स्थूले प्रपञ्चे आकर्षणविकर्षणवत् सूक्ष्मे किल रागद्वेषौ वेदितव्यौ। वृत्तिराज्ये रागजनिताः सर्वा अपि वृत्तयो रजस्संभूताः, द्वेषोत्पन्नाश्च तमःप्रसूताः । बहिर्जगत्याकर्षणविकर्षणवत् अन्तर्जगति रागद्वेषसमुद्भवा वृत्तयो विज्ञातव्याः । रागदशायामेकस्याकर्षणं द्वेषावस्थायां चापरस्य विकर्षणमुत्पद्यमानं संसारेऽपि प्रत्यक्षं विलोक्यते। सुहृत्सु परस्परमनुरागे समुत्पद्यमाने वार्त्तालापादिक्रियाकलापा अन्योन्यमाकर्षकत्वादुपादेयतां भजन्ते सपत्नेषु द्वेषसद्भावात् त एव पारस्परिकं चित्तं व्यथयन्तो हेयतां प्रतिपद्यन्ते ॥ १०३ ॥

तत्प्रधानफलमाचष्टे—

**सर्गविसर्गनिमित्तम् ॥ १०४ ॥**

अन्तर्जगति वहिर्जगति वा द्वयोरेकं सर्गहेतुकं द्वितीयं च लयमूलकमवधेयम्। वहिर्जगत्यन्तर्जगति चाकर्षणं सृष्टेः, विकर्षणं च लयस्य कारणतां भजेते। सर्गविसर्गयोर्मूले सर्वेष्वपि स्थानेषु सर्वास्वप्यवस्थासु च विद्यमानं मौलिकं तत्त्वमेतदेव। स्थूलजगति परमाणूनामन्योन्यमाकर्षणेनैव सर्वेषां ग्रहोपग्रहादीनामपि सृष्टिः तेषां विकर्षणप्रक्रियया च प्रलयः संजायते। सर्गे किल परमाणुभिराकृष्यमाणैः पञ्चतत्त्वात्मकं स्थूलं जगदुद्बुध्यते, ग्रहोपग्रहाश्च निर्मीयन्ते। विसर्गे च प्रस्तरलौहप्रभृतिस्थूलपदार्थानां विनाशकाले वा परमाणवोऽन्योन्यपार्थक्यं भजन्ते। एतेनैतत्सिद्धं यत् आकर्षणं स्थूलप्रपञ्चानां सर्गस्य विकर्षणं च विसर्गस्य कारणम्। अन्तर्जगत्यपि रागेण सर्गो द्वेषेण च विसर्गोजञ्जन्यते, प्रवृत्तिहेतुभूतेन रागेणैव जनकजन्यानां पतिपत्नीनां च सम्बन्धः सुरक्षितः। तेनैव हि स्त्रीपुञ्जायमाना सृष्टिरुदेति। सुतरां प्रवृत्तेः कारणं रागः, प्रवृत्तिश्च सृष्टेर्हेतुभूता। अन्यच्च द्वेषाद्धि प्रवृत्तावरुचिरुत्पद्यते, तत एव साधकानां विषयेभ्यो वैराग्योत्पत्तिस्ततश्च मोक्षद्वारमपाव्रियते। विषयविद्वेषहेतुना प्रवृत्तेर्नाशो निवृत्तेरुदयश्च, येन विषयपरित्यागपूर्वकमात्यन्तिकविलयक्रियायाः सार्थकता सिध्यति। सुतरामेतदभ्युपगन्तव्यं किल यदाकर्षणाविकर्षणयोराद्यं सृष्टेर्द्वितीयं च लयस्य कारणं चेति ॥ १०४ ॥

प्रसङ्गतः सर्गविसर्गयो नैसर्गिकत्वमुच्यते—

**तावतो नैसर्गिकौ ॥ १०५ ॥**

अतः कारणात् तौ सर्गविसर्गौ स्वाभाविकावित्यर्थः। त्रिगुणात्मिकाया ब्रह्मप्रकृतेः रजस्तमोभ्यामेव पूर्वोक्तशक्तिद्वयसमुदयाद्यदि

सृष्टिलयक्रिया संसाध्यते तर्हीदं स्वतः सिद्धं यत् सर्गविसर्गौ नैसर्गिकौ। ब्रह्मेव तत्प्रकृतिरपि नित्या, तस्या नित्यत्वे त्रिगुण-नित्यता। तथात्वे रजस्तमसोः प्रक्रियाऽपि स्वाभाविकी। सुतरां रजसः सर्गः तमसो विसर्गश्च निस्सन्देहं स्वाभाविकौ सिद्धौ ॥१०५॥

सत्त्वगुणोदयस्य विज्ञानं वर्ण्यते—

**उभयसाम्ये सत्त्वम् ॥ १०६ ॥**

उभयोः रजस्तमसोः साम्ये समतायां सत्त्वमुदेति। कथमिति चेदुच्यते—बहिर्जगत्याकर्षणविकर्षणशक्त्योः समानाधिकारतायाम्-अर्थाद् यदा खलु शक्तिद्वयीयं नाधिका नापि न्यूना तिष्ठति, तदैव सत्त्वगुणोदयमूलिका स्थितिदशा समुदेति। स्थूले संसारेऽत्रा-कर्षणात् पदार्था आकृष्यन्ते विकर्षणाच्च विकृष्यन्ते। उभयोरेव स्वाभाविकयोः शक्त्योः समत्वे ग्रहोपग्रहाः स्वस्वकक्षासु प्रवर्तन्ते। सेयं स्थितिदशा विज्ञायते। अन्तःसंसारे च रागद्वेषसमन्वये सत्त्वगुणोदयाद् विश्वधारकधर्मस्याधिकारः प्रसज्यते ॥ १०६ ॥

तदुदर्को निर्णीयते—

**स्थितिमूलमतः ॥ १०७ ॥**

अतः कारणात् सत्त्वं स्थितिमूलमवगन्तव्यम्। रजसा सृष्टि-स्तमसा विलयः, उभयसाम्यसमुदितेन सत्त्वेन च स्थितिः सम्पद्यते। प्रोक्तद्विविधशक्तिसमन्वयेन चेत्सत्त्वगुणोदयस्तर्हि तयोः समता-यामेव स्थितिरिति निश्चप्रचम्। रजस्तमोनामधेयद्विविधशक्ति समन्वयेन समुदीयमाना सात्त्विकी शक्ति बाह्यान्तरजगतोः, स्थूल-सूक्ष्मयोः, ब्रह्माण्डपिण्डयोश्च सर्वत्रैव स्थानेषु स्थितिमुत्पादयति ॥१०७॥

प्रसङ्गेन धर्मेण सह तत्सम्बन्धं विवृणोति—

**प्रतिष्ठानं धर्मस्य ॥ १०८ ॥**

सत्त्वमेव धर्मस्य प्रतिष्ठानं वेदनीयम्, प्रागेवेदं सिद्धान्तितं यत् सत्त्वगुणवर्धकः क्रियाकलापो हि धर्मशब्दवाच्यः। सत्त्वस्य क्रमा-

भिव्यक्तिर्हि धर्ममूलम् । अतो यद्याकर्षणविकर्षणाख्योभयशक्ति-समन्वयेन सत्त्वगुणोदयस्तर्हि सैवा दशैव धर्मप्रतिष्ठास्थानं सिध्यति । यत्र यत्र रजस्तमोमूलकोभयविधशक्तिसमन्वयस्तत्र तत्र धर्मस्योदयो निश्चितः । यद्यपि मुख्येन गौणेन वा रूपेण राजसिकास्तामसिकाश्च धर्माः प्रतिपद्यन्ते, किन्तु त्रिगुणाधिकारविचारतो निर्णीताः सत्त्व-मूलकधर्मस्यैवैतेऽवान्तरभेदा विज्ञेयाः । वस्तुतस्तु पूर्वोक्तद्विविध-शक्तिसमन्वयसमुद्भूतः सत्त्वगुण एव धर्मप्रतिष्ठास्थानम् ॥१०८॥

सम्बन्धान्तरं प्रतिपाद्यते—

## विद्याक्षेत्रम् ॥ १०९ ॥

तत्सत्त्वं विद्यायाः क्षेत्रम् स्थानमित्यर्थः । विद्यास्वरूपं निर्णीत-पूर्वम् । विद्या ज्ञानजननी सत्त्वगुणमयीति चेत्तर्हि रजस्तमःशक्ति-समन्वयजनितशुद्धं सत्त्वमेव विद्याक्षेत्रमित्यत्र नास्त्यणीयानपि सन्देहावसरः । साधके यावतः सत्त्वगुणस्याधिकारो वर्धिष्यते, तावदेव विद्याया ज्योतिर्विकाशमेष्यति । सत्त्वगुणप्रवृद्धिरेव विद्या-देवीकृपाप्राप्तिः । सत्त्वगुणाभिवृद्धिपूर्वकं क्षेत्रं तन्मलविक्षेपावरण-विनाशेन विद्यादेव्या अधिष्ठानोपयोगितामधिगच्छति ॥ १०९ ॥

अन्यदपि—

## कैवल्यकारणं च ॥ ११० ॥

तत्सत्त्वं कैवल्यस्य निःश्रेयसस्यापि कारणं निदानभूतम् । रजस्तमसोः समन्वयेन तद्द्वयमभिभूय सुप्रतिष्ठितं सत्त्वमेव यथा धर्मप्रकाशकं विद्याक्षेत्रं च, तथैव कैवल्यप्राप्तिनिदानमपि विज्ञेयम् । रजस्तमोऽभिभूय यावान् सत्त्वगुणोऽभिवर्धते तावानेवाधिकाधिको धर्मात्मा भवन् मुमुक्षुरात्मज्ञानमभिवर्धयन् ज्ञानजनन्या विद्यायाः कृपामधिगच्छन् क्रमशस्तत्त्वज्ञानाभिमुखमग्रेसरन् कैवल्यमासाद-यति। तस्मात् पूर्वप्रतिपादिता स्थितिः कैवल्यकारणभूताऽपि ॥११०॥

पुनः प्रकृतविषयमनुसरति—

**कर्मणैव सृष्टिस्थित्यन्ताः ॥ १११ ॥**

कर्मणा खलु सृष्टिस्थितिप्रलया जायन्ते । रजसा सृष्टिः, सत्त्वेन स्थितिः, तमसा च प्रलय इति प्रसिद्धम् । एतद्गुणत्रयाधिष्ठातारः क्रमशो ब्रह्मविष्णुमहेश्वराश्च । परमेतत् क्रियात्रयमूलं कर्मैव । प्रागेवैतत्सिद्धान्तितं यत् प्रकृतेः स्पन्दनेन कर्मोत्पत्तिः, तदेव त्रिगुणकारणतां भजते । अन्यच्च सृष्टिस्थिति-प्रलयाः क्रियान्तर्गता एव । तेषां फलमपि कर्मणैव सम्बद्धम् । सर्वतो महनीयोऽयं विमर्शोयत् पूर्वसंस्कारमनुसृत्यैव सृष्टिस्थितिप्रलयाः सम्भवन्ति । यथा पिण्डस्योत्पत्तिस्थितिलयमूले प्रारब्धसंस्काररूपं कर्मबीजं, तथैव ब्रह्माण्डस्यापि सृष्टिस्थितिप्रलयास्तदीय-प्रारब्धसमष्टेरनुगुणा एव जायन्ते । सुतरां सर्गस्थितिसंहारकारणं कर्मैवेति सिद्धम् ॥१११॥

प्रसङ्गतः सिद्धान्तं निर्णयति—

**तदतो ब्रह्म ॥ ११२ ॥**

अस्मात् कारणात् तत्कर्मैव ब्रह्म, यदि कर्म ब्रह्मणः सृष्टिप्रपञ्चस्य रूपान्तरेण कर्मैव कारणं तर्हि तद् ब्रह्मस्वरूपमपि बोध्यम् । यथोक्तं भगवता गीतोपनिषदि—

"कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्,
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥" इति ॥

वस्तुतो यदि ब्रह्मणि तत्प्रकृतावभेदः, तस्याश्च कर्मणा भेदाभावस्तदा कर्मैव ब्रह्मस्वरूपमिति सिद्धान्तः ॥ ११२ ॥

कर्मविशेषमुपवर्ण्यते—

**यज्ञः कर्म सुकौशलम् ॥ ११३ ॥**

सुकौशलं कौशलपूर्णं कर्म यज्ञशब्दवाच्यम् । यज्ञलक्षण सम्बन्धे, स्मृतावप्युक्तम्—

"एवं यज्ञस्तथा धर्म उभौ पर्यायवाचकौ ।
कथितौ वेदनिष्णातैः शास्त्रज्ञैः शास्त्रविस्तरे" ॥ इति ॥

ग्रन्थे निर्मितिर्विमुक्तिश्च कर्मैव प्रतिपाद्यते । एकया रज्जवो जटिलत्वमन्यया च सौम्यत्वमासादयन्ति । उभयत्रापि करसञ्चालनं कर्म समानमेव । एतावानेव तत्र भेदो यत् सौम्यत्वसम्पादनं सुकौशलपूर्णं कर्म न खलु जटिलत्वापादनम्, एवमेव जीवेन निरङ्कुशतया सम्पादितं कर्म सुकौशलपूर्णत्वाभावादधर्मस्तेन च गमागमबन्धनं जटिलायते । स्वविवेकमनुसृत्य वेदशास्त्रगुर्वाचार्यप्रतिपादितकर्मानुष्ठानेन सुकौशलपूर्णत्वाद् गतागतबन्धनं शिथिलायते । तादृशं कर्मैव धर्मो यज्ञो वा । शक्तिविचारतो धर्मक्रियाविचारेण च यज्ञ उच्यते । वैदिकयज्ञाः स्मार्तयज्ञा तपोदानोपासनायोगज्ञानयज्ञाश्चेत्यादयःशास्त्रोक्ता विविधप्रकारा यज्ञा निर्दिष्टाः॥११३॥

इदानीं महायज्ञलक्षणं निर्दिशति—

**समष्टिसम्बन्धान्महायज्ञः ॥ ११४ ॥**

समष्टिसम्बन्धेन हेतुना सुकौशलपूर्णं कर्म महायज्ञस्वरूपतां भजते । यज्ञमहायज्ञयोर्विभेदमाख्यातुं सूत्रकृन्महर्षिः सूत्रमिदमाविरभावयत् । यज्ञेन सह महाशब्दस्य पूर्वसंयोगो नार्थवादपरो निरर्थकः । जीवस्य व्यष्टिगतमभ्युदयनिःश्रेयसप्रदं सुकौशलपूर्णं कर्म तु यज्ञोऽभिधीयते, यस्तु जीवसमष्टिहिताधायकेन ब्रह्माण्डकल्याणसाधकेन वा सुकौशलपूर्णकर्मणा धर्मः संसाध्यते, स हि महायज्ञः प्रोच्यते । स्वार्थग्रहग्रस्तसाधारणमानवान्तःकरणे नैव महायज्ञमहिमा स्थानमधिगच्छति । साधको हि क्रमशः स्वार्थप्रवणतायाः ह्रासेन परार्थपरतोदारतादिप्रवृद्धया च महायज्ञाधिकारी जायते । यथा च प्रतिपादितम्—

"अयं निजः परोवेति गणना लघुचेतसाम्"
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥
माता च पार्वती देवी पिता देवो महेश्वरः
बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥

एवं हि भुवनत्रयमेव स्वकुटुम्बकं मन्यमानैरुदारचित्तमहापुरुषैरेव महायज्ञानां महत्त्वमवगन्तुं शक्यते, तदधिकारिता चासाद्यते । जैवस्वार्थराहित्यात् परोपकारभावसम्बलितत्वात् समष्टिसमुन्नतिसहायकत्वात् भगवत्कार्यरूपत्वाच्च तादृशं धर्मकार्यं महायज्ञ इत्युच्यते ॥ ११४ ॥

तदधिकारवर्णनमारभते—

## उदारमनुष्ठेयस्तुरीयेऽप्येषः ॥ ११५ ॥

तुरीये चतुर्थाश्रमेऽप्येष महायज्ञः उदारतापूर्वकम् अनुष्ठेयोऽनुष्ठातुं योग्यः । उदारान्तःकरणवन्तो महापुरुषाः किल महायज्ञानुष्ठानेऽधिकृता इति पूर्वं प्रतिपादितम् । महायज्ञस्योदारतायुक्तत्वादौदार्यादिगुणाभ्यासनिरतानां गृहाश्रमवासिनां का कथा, चतुर्थाश्रमाणां संन्यासिनां कृतेऽपि महायज्ञानुष्ठानं विहितम् । चतुर्थाश्रमे कर्मणां यागादिसाधनानां परित्यागे शास्त्रविहितेऽपि निरतिशयसमुन्नतत्वात् तत्रापि महायज्ञसाधनं कल्याणदं सर्वलोकहितकरं च । तुरीयाश्रमे निवृत्तेश्चरितार्थता भगवद्भावापन्नं चान्तःकरणम्, अतः समुन्नतदशायाम् उदारतायाः पराकाष्ठाधिगमाय तत्रापि महायज्ञानुष्ठानं विहितम् । अतो हि चतुर्थाश्रमवन्तो महात्मानस्तत्त्वज्ञानिनो लोकहिताधायके कार्यकलापे निरता दृश्यन्ते । तादृशमहात्मनां व्रतानि, जगदाध्यात्मिकसमुन्नतिचिन्तनानि, कर्मयोगसद्ग्रन्थप्रणयन-जिज्ञासुहितसाधकोपदेशदानादीनि महायज्ञपरिचायकान्येव ॥ ११५ ॥

अन्यच्च—

**महीयांस्ततोऽसौ ॥ ११६ ॥**

अतः कारणादसौ महायज्ञो महीयान् सर्वश्रेष्ठ इत्यर्थः। उदारचरितमहापुरुषा हि केवलं महायज्ञाधिकारिणः। सम्पूर्णरूपतः कर्मणां परित्यागोपदेशात् तुरीयाश्रमेऽपि महायज्ञानुष्ठाननिदेशः। सर्वमिदं महायज्ञस्य महिम्नो विजृम्भणम्। गृहस्थाश्रमेऽपि पञ्चमहायज्ञानुष्ठानशिक्षा प्रारभ्यते। पञ्चमहायज्ञानुष्ठानाभावे गृहस्था महादोषभागिनो जायन्ते। सर्वमिदं महायज्ञमाहात्म्यसूचकम्। ज्ञानाधिष्ठातॄणाम् ऋषीणां संवर्द्धननिमित्तकं वेदशास्त्रमननं ब्रह्मयज्ञः, कर्मसञ्चालकदेवतासंवर्धनहेतुकं हवनादिकं देवयज्ञः, आधिभौतिकसृष्टिसंरक्षकाणां पितॄणां तृप्तिसाधकं श्राद्धतर्पणादिकं पितृयज्ञः, समस्तप्राणिसंरक्षकनानारूपनैमित्तिकदेवता - सम्वधर्नपूर्वकं सर्वजीवमंगलकामनया क्रियमाणं भूतेभ्यो वलिसमर्पणं च भूतयज्ञः, निखिलमानवसमाजसमीपकृतज्ञताप्रकाशहेतुकं स्वाश्रमसमागतेभ्यश्चाण्डाभ्योऽपि नारायणबुद्ध्या भोजनादिदानं नृयज्ञ इत्युच्यते। तत्प्रमाणं शास्त्रेष्वपि लभ्यते। तथाहि—

पाठो होमश्चातिथीनां सपर्य्या तर्पणं वलिः।
एते पञ्च महायज्ञा ब्रह्मयज्ञादि नामकाः॥
दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च।
एते पञ्च महायज्ञा ब्रह्मणा निर्मिता पुरा॥ इति ॥११६॥

द्वयोः परिणतिमभिधत्ते—

**ताभ्यामभ्युदयनिःश्रेयसे ॥ ११७ ॥**

ताभ्यां यज्ञमहायज्ञाभ्यामभ्युदयनिःश्रेयसे ज्ञातव्ये। यदि व्यक्तिगतं धर्मसाधनं यज्ञस्वरूपं तर्हि तेन जीवस्याभ्युदयो निर्विवाद एव।

व्यक्तिगतजैवस्वार्थराहित्यात् जगत्कल्याणधिया साध्यमानत्वाच्च महायज्ञेन मोक्षसिद्धिर्नूनं सम्भवा । जैवाहङ्कारजनितस्वार्थबुद्धिर्हि केवलं मौलिकं बन्धनकारणं चेत्महायज्ञे तत्सम्बन्धाभावस्तं हि महायज्ञेन निःश्रेयसाधिगमे कः सन्देहः। किं यज्ञसमूहः केवलमभ्युदयप्रद एव नासौ मोक्षप्रदः ? यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म, इति सिद्धान्तचरितार्थता कथं स्यादिति जिज्ञासुशङ्कासमाहितये स्वयमुक्तं भगवता श्रीगीतोपनिषदि, तथाहि—

"यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर ॥
तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पुरुष" इति ॥

तात्पर्यमिदं यत् यथा महायज्ञेन निःश्रेयसप्राप्तिस्तथैव यज्ञेनापि तदधिगमः सम्भवः, किन्त्वसौ निष्कामभावेन फलाभिसन्धित्यागपूर्वकं क्रियमाणो यज्ञो महायज्ञवन्निःश्रेयसप्रदाता । अन्यथाऽसावभ्युदयद एव ॥ ११७ ॥

प्रसंगतोऽभ्युदयनिःश्रेयसयोः पूर्णाधिकारप्रदोऽयमार्यधर्मः पूर्णचन्द्रेणोपमीयते—

**षोऽशकल आर्यधर्मः पूर्णचन्द्रवत् ॥ ११८ ॥**

अस्यार्थः सुस्पष्टः ।

प्रथमकला निरूप्यते—

**तत्र प्रथमा सदाचारो व्यापकत्वात् ॥ ११९ ॥**

षोडशकलासु प्रथमा सदाचार एव यतोऽसौ व्यापकः ॥ ११९ ॥

तद्वैशिष्ट्यं प्रणिगद्यते—

**अतः आर्यसंस्कृतेर्महत्त्वम् ॥ १२० ॥**

अतः कारणादेवार्यसंस्कृतेर्महत्त्वं विद्यते । धर्मानुकूलः शारीरिको व्यापारकलापः सदाचार उच्यते । मनोबुद्धिवचनशरीरव्यापारभेदेन

चतुर्विधं कर्म मानवैरनुष्ठीयते । नहि कश्चित् क्षणमपि जातु तिष्ठत्य-कर्मकृदितिगीतोक्तिः । अतोधर्मवर्धकः शारीरिको व्यापार एव सदाचारः ॥ १२० ॥

द्वितीयकलास्वरूपं निर्णीयते—

**सद्विचारोद्वितीयार्यजातेः शिखासूत्रधारित्वात् ॥ १२१ ॥**

आर्याणां शिखायज्ञोपवीतधारित्वात् सनातनधर्मस्य द्वितीया-कला सद्विचारः। यथा हि धर्मानुकूला शारीरिकी चेष्टा सदाचारस्तथैव धर्मानुकूलो मानसिको व्यापारः सद्विचार इत्युच्यते। यथोक्तं गीतोपनिषदि—

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥

विवेकयुक्तेन मनसा जीवमुपर्युत्थापयेत्। इन्द्रिययुक्तं मनोनीचैर्नि-पातयेत्, विवेकेन संयुक्तं मनोजीवस्य मित्रं तद्भिन्नं तदीयः शत्रु-रितिनिर्गलितार्थ एव सद्विचारतात्पर्यमवगन्तव्यम्। आर्यजातीया सर्वविधापि चेष्टा विवेकसंयुक्ता । अतः सद्विचारशीलोधार्मिको व्यवह्रियते। शिखासूत्रमप्येतद्द्योतकमेव। शिरसि ब्रह्मरन्ध्रस्थाने गोखुरसमानकेशपुञ्जसंवर्धनं शिखेत्युच्यते । वामस्कन्धमाश्रित्य दक्षिणबाहुनिम्नभागे कटिपर्यन्तं लम्बायमानं परमं पवित्रं विलक्षण-प्रभावोत्पादकं पूर्णायुः प्रदम् शास्त्रविधिनिर्मितं नवतन्तुषु नवदेवा-श्रयस्वरूपम् प्रवरर्षिचिह्नितम् ग्रन्थित्रये च त्रिदेवाश्रयभूतम्, द्विजाति-भिरुपनयनसमये धारितं यज्ञसूत्रमित्युच्यते। द्विजानां सर्वविधशरीर-मनोव्यापाराणां धर्मरूपयज्ञमयत्वात् कदापि द्विजैर्न तत्त्याज्य मितिशास्त्रनिर्देशः, उक्तं च स्मृतिशास्त्रे—

"सदोपवीतिना भाव्यं सदा बद्धशिखेन च
विशिखोव्युपवीतश्च यत्करोति न तत्कृतम्" ॥ इति ॥

अतोवर्णाश्रावलम्बिभिरार्यैं ध्रियते किल शिखासूत्रम् सुतरामार्यधर्मस्य द्वितीया कला सद्विचार एव ॥१२१॥

शिखासूत्रोदर्कमाचष्टे—

**शिखा देवमन्दिरस्य सूत्रं त्रिभावशुद्धेः ॥ १२२ ॥**

शिखा देवमन्दिरस्य शिखर यज्ञसूत्रं त्रिभावशुद्धेः सूचकम्। शिखायाःकारणेनार्यंजातेरुत्तमाङ्गं शिरो देवमन्दिरस्य विशिष्टं स्थानमवगम्यते, शिखास्वरूपमन्दिरप्रदेशे ब्रह्मविष्णुशिवादिदेवानां निवासः। शिखा किलार्याणां विशिष्टं चिन्हं, तया द्विजातेर्बुद्धि निर्मलत्वमापद्यते। देवमन्दिरे शिखरमिवार्यशरीररूपमन्दिरस्य शिखा शिखरमभ्युपगन्तव्यम्। शिखाबन्धनमन्त्रो यथा—

ब्रह्मवाणीसहस्रेण शिववाणीशतेन च।
विष्णुवाणीसहस्रेण शिखाबन्धं करोम्यहम् ॥

शिखामूले सर्वदेवनिवासः। त्रिभावशुद्धिद्योतकं यज्ञोपवीतम्, अध्यात्माधिभूतत्रिविधशुद्धिस्मृतिसंरक्षणत्वात् यज्ञमयजीवनयापनत्वाच्चार्याः त्रिगुणितं यज्ञसूत्रं धारयन्ति ॥ १२२ ॥

तृतीयां कलां व्याचष्टे—

**वर्णधर्मस्तृतीयाऽतस्तत्पूर्णा ॥१२३॥**

वर्णधर्मस्तृतीया कला, तयैवार्यजातिः पूर्णा त्रिविधभावशुद्धिः पूर्णेत्यर्थः।

तस्या महत्त्वमभिधत्ते—

**चिरजीविनी च ॥१२४॥**

वर्णधर्मादार्यंजातौ रजोवीर्यशुद्धिरितिहेतोः सा चिरजीविनी सदैव जीवितुं शक्नोतीत्यर्थः। आसृष्टेरिदानीं यावदियं विद्यमाना, किन्त्वनेका अन्या जातय कालकवलतामाप्ताः। अत आर्यजातिजीवनहेतुर्वर्णधर्म एव ॥ १२४ ॥

सोपपत्तिकं चतुर्थी कला निरूप्यते—

**चतुर्थी सतीत्वं नार्याः पूर्णत्वात् ॥१२५॥**

नार्याः पूर्णत्वात् नारीधर्मस्य परिपूर्णत्वादित्यर्थः सतीत्वं चतुर्थी कला विज्ञायते। सतीत्वेनैव नारीधर्मस्य परिपूर्णता। यत्र जातौ नार्यः सतीत्वधर्मतपश्चर्यापरायणास्तस्या एव जगति महत्त्वं विलोक्यते। आर्यजातावस्यां सतीत्वपरिपूर्णता त्रिकालाबाधिता ॥१२५॥

आर्यमहिलामहत्त्वमुच्यते—

**अतस्त्रिलोकपावनी ॥१२६॥**

अतः सतीत्वकारणादेवार्यस्त्रियस्त्रिलोकपावन्यः समाम्नाताः। सतीत्वधर्मपरिपूर्णताऽऽर्यजातेरन्यत्र नासाद्यते। सतीत्वबलेनैवार्यस्त्रियस्त्रिलोकेऽपि पूज्यन्ते। ऊर्द्ध्वं स्वर्गादिलोकस्य अधः पातालप्रभृतिलोकस्य मध्ये च भारतवर्षापरनामकमृत्युलोकस्य चेतिवृत्ताध्ययनेनेदं प्रतीयते यत् सतीत्वमहत्त्वं सर्वत्रैव परिगीतमिति ॥१२६॥

आर्यधर्मचन्द्रस्य पञ्चमी कला निर्दिश्यते—

**पञ्चम्याश्रमधर्मः प्रवृत्तिनिवृत्तिपूर्णत्वात् ॥१२७॥**

प्रवृत्तेर्निवृत्तेश्च पूर्णत्वाद् आश्रमधर्मः पञ्चमी कला निर्दिष्टा। ब्रह्मचर्याश्रमे प्रवृत्तेः शिक्षणम्, गार्हस्थ्ये च शास्त्रोक्तायास्तस्याः परिपालनम्, वानप्रस्थाश्रमे निवृत्तेः शिक्षा, संन्यासे च निवृत्तेः परिपूर्णतोपदिष्टा। अत उभाभ्यामेव प्रवृत्तिनिवृत्तिभ्यां पूर्णतयाऽऽश्रमधर्ममहत्त्वम्। सुतरामाश्रमधर्म आर्यधर्मचन्द्रस्य पञ्चमी कला समाम्नायते ॥ १२७ ॥

आश्रमधर्मफलमभिधीयते—

**जीवन्मुक्तिप्रादुर्भावः ॥१२८॥**

प्रवृत्तिनिवृत्तिधर्मयोः परिपूर्णतयाऽऽश्रमधर्मे जीवन्मुक्तिरुदेति। यत्र प्रवृत्तिपूर्णता सैव संस्कृतिः क्रमाभिव्यक्तेरधिकारे पूर्णतामधि-

करोति। मानवक्रमाभिव्यक्तिपरिपूर्णता जीवन्मुक्तिपदप्रापिका। आश्रमधर्मवन्नान्यत्र कुत्रापि समभ्युदयक्रमो दृष्टः। निवृत्तेरन्तिमाधिकारस्य संन्यासस्य कुटीचकबहूदकहंसपरमहंससंज्ञकानि चत्वारि सोपानानि ज्ञेयानि परमहंसावस्था जीवन्मुक्तिप्रदा। श्रीमद्भगवद्गीताप्रोक्तौ सांख्ययोगौ समानाधिकारौ। कस्याप्याश्रमस्याधिकारी मानवः कर्मयोगेन जीवन्मुक्तिपदमधिगन्तुं शक्तः। संन्यासधर्मक्रमस्तूपरि निर्दिष्टः। अतः सुकौशलपूर्णकर्मणा वा ज्ञानार्जनद्वारा वाऽऽर्यजातीयाश्रमधर्मावलम्बनेन जीवन्मुक्तिपदमधिगन्तुं शक्यते ॥१२८॥

पष्ठीकला कथ्यते—

षष्ठी दैवजगच्छरणमास्तिकत्वात् ॥१२९॥

दैवस्य जगतः शरणग्रहणम् आर्यधर्मस्य षष्ठी कला निरूपिता। दैवजगति तदीयनानादेवपदधारिषु विश्वास आस्तिकत्वमुच्यते। स्थूलजगतो रक्षकाश्चालकाश्च देवा निर्दिष्टाः ॥१२९॥

एतत्कलाया महत्त्वमुच्यते—

त्रिविधसङ्घानुग्रहः ॥१३०॥

अस्मादेव हेतो स्त्रिविधस्य त्रिप्रकारकस्य देवर्षिपितृसङ्घस्यानुग्रह आर्यजातौ। शास्त्रेषु त्रिविधसंघसम्बन्धि-देवपदधारिणां वर्णनमुपलभ्यते। आस्तिकत्वादेव आर्येषु तदीयदयाधिगमः। विशालस्य दैवजगत एकसहस्रांशभागोऽपि नायं मदीयो मृत्युलोकः। चतुर्दशभुवनानां त्रयो विशिष्टा देवपदधारिणः। तदधीनास्त्रयस्त्रिंशत्संख्याका मुख्यतो देवपदाधिकृताः सुरा विलसन्ति। देवर्षिपितृसङ्घा अन्ये चानेके देवपदाधिकारिणः सन्ति ये किल प्रतिमन्वन्तरं परिवर्त्तन्ते आस्तिकत्वात् श्रद्धाविश्वाससद्भावाच्चार्यजातौ सर्वेषां कृपा सन्तिष्ठते ॥१३०॥

धर्मस्य सप्तमी कला प्रोच्यते—

**सप्तम्यवतारनिष्ठा धर्मसामञ्जस्यात् ॥१३१॥**

धर्मस्य सामञ्जस्यात् समन्वयहेतोरित्यर्थः, अवतारेषु निष्ठा विश्वासः सप्तमी कला प्रतिपादिता । स्वयमप्युक्तं भगवता श्रीकृष्णचन्द्रेण गीतोपनिषदि—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

ऋषीणां देवानामप्यवताराः सम्भवन्ति । श्रीमद्भगवतस्तु कलाभेदेन बहुप्रकारा विज्ञातव्याः । श्रीभगवतो ह्यवतारेषु द्वे शक्ती कार्यकारिण्यौ । यत्र केन्द्रेऽवताराविर्भावस्तत्पूर्वजन्मप्रारब्धकर्मशक्तिरेका, द्वितीया किल भगवदाविर्भावप्रयोजनशक्तिश्च ।

"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥"

इतिगीतोक्तैतद्भगवद्वचनमनुसृत्य प्रथमा शक्तिः सिध्यति । भगवच्छक्तिसिद्धिविषये तु श्रीकृष्णचन्द्रस्य व्रज-द्वारका-महाभारतादिलीलाविलासो विज्ञातव्यः । श्रीमतो भगवतः शैशवावस्थायां स्वाभाविकहस्तपादसञ्चालनेन शकटवधः, उलूखलबन्धनावसरे यमलार्जुनवृक्षयोरुद्धारः, कनिष्ठिकायां गोवर्धनपर्वतमुद्धृत्य व्रजमण्डलसंरक्षणं, महारासे च गोपीनां सम्मोहनं कुमारावस्थायां श्रीकृष्णबलरामयोर्मथुरायामागत्य पर्वताकारकुवलयापीडगजराजस्य दन्तोद्घाटनपुरस्सरं मारणं, महामल्लानामपराजेययोर्मुष्टिकचाणूरयोर्वधः, महापराक्रमशालिनोऽपि सम्राजः कंसस्य सर्वगतं प्रत्यक्षं सभामध्ये संहारश्चेत्यादीनि

अतिमानुषकर्माणि भगवदिच्छाशक्ति निदर्शकानि वेद्यानि। श्रीभगवानपि स्वविरचितशृङ्खलायां सुबद्धः। भीमसेनवध्यस्य जरासन्धस्योत्पातं प्रवर्धमानमवलोक्य देवकुलरक्षाहेतवे पश्चिमीयसमुद्रतटे कोटिमानवनिवासयोग्यां द्वारकानाम्नीं महानगरीं विरच्य्य मथुरातः समागत्य तामेव स्वराजधानीं कृत्वा षोडशसहस्रं स्त्रियः परिणीय ताभिः सह पृथक् पृथग्रूपैः क्रीडनमेतदादीन्यतिक्रान्तमानवकर्माणि भगवच्छक्तिद्योतकान्येव। लीलासंवरणकाले समागते, पारस्परिकसंपरायेण यादवकुले विनष्टे भगवतः स्वधामप्रस्थानघटनाऽपि विद्यते रहस्यपरिपूर्णा। कोटिवर्षेभ्यः पूर्वं रामावताररूपेण वृक्षेष्वात्मानं गोपयित्वा बाणेन घातितो बालिः। जन्मान्तरे वालिरूपं बिभ्रतः किरातस्य शरेण श्रीकृष्णेन स्वीया लीला समापिता। सर्वमेतद् विज्ञाय कस्य न चित्रीयते चेतः? सन्देहनिराकरणहेतवे प्रोच्यते यत् उपर्युक्त स्वरूपमवतारीयं द्विविधं कर्म पूर्वजन्मार्जितम् अवतारसम्बन्धि च। रामावतारकर्मफलं कृष्णावतारे प्राप्तम्। तदेतत्पूर्वजन्मार्जितमेव न व्यक्तिगतम्। रामकृष्णौ समानाधिकारौ अवतारयोः समानाधिकारयोरेवं भवितुं शक्नोति। श्रीकृष्णविग्रहस्यान्तकालः समुपस्थितः, वालिजनितस्वकर्मभोगसमयोऽपि समागतः। अत एव वालिना किरातरूपेण प्रतिशोधो विहितः, श्रीकृष्णोऽपि नैजं धाम प्रतस्थे। दर्शनशास्त्रेण भगवतः षोडशकलानामवताराः संसाधिताः। ते च यथा—उद्भिज्जादिचतुर्विधभूतसंघेषु यथाक्रमं कलाचतुष्टयविकासः, ततश्चासभ्यसभ्यमनुष्येषु तथैव। तदनन्तरं च नवमीमारभ्य षोडशीं कलां यावत् श्रीमतो भगवतोऽवतारेषु विकसन्तीमामनन्ति दर्शनशास्त्रविदः। अतो नैकविधा अवतारश्रेणयः। श्रीकृष्णावतारः षोडशकलापरिपूर्ण इति महाभारतभागवतादौ समुपवर्णयता श्रीव्यासदेवेन सम्पूर्णमेव मानवं जगत् धन्यतां नीतम्। धर्मसामञ्जस्य संरक्षणसिद्धयेऽवताराः समुत्पद्यन्ते।

उपर्युक्तप्रकारभगवदवतारेषु कृतनिष्ठाऽऽर्यजातिः। अतोह्यार्यधर्मस्यावतारनिष्ठा सप्तमीकला सिद्धा ॥१३१॥

अवतारसम्बन्धतो भारतखण्डस्य महिमानं व्याहरति—

**भगवदवताराविर्भावभूमिः ॥१३२॥**

भगवतोऽवताराणामाविर्भावस्य भूमिः स्थानं भारतखण्ड एवेति शेषः। अवताराणां महिम्नः प्रसङ्गतस्तदीयविज्ञानदार्ढ्याय भगवदाविर्भावभूमेर्भारतस्य महत्त्वं सर्वाधिकम्। ब्रह्माण्डेऽत्र कर्मसम्बन्धेन श्रेष्ठः किल जम्बूद्वीपः। तत्र नव वर्षाणि तेषु मृत्युलोकापरनामकं भारतवर्षं गरीयः। तत्र च भारतखण्डः (हिन्दुस्थानम्) श्रेष्ठतमः। आदिमानवसृष्टि र्भारतखण्डस्यैतस्य कश्मीरप्रान्तीयदेविकानदीतीरे समुदभूदिति सर्वशास्त्रसम्मतम्। अयमेव देशः षण्णामपि ऋतूनां वैभवस्थानम्। चातुर्वर्ण्यमत्र निभाल्यते, ब्राह्मणक्षत्रिय-वैश्यशूद्रभूमयोऽत्रैव लभ्यन्ते। सर्गस्य सर्वा अपि विभूतयोऽत्र दृष्टिगोचरतामापद्यन्ते। अन्यच्च सृष्टेरादौ प्रत्येकसत्ययुगारम्भे चात्रत्यानामेव महर्षिणामन्तःकरणेषु वेदाः शब्दशः श्रूयन्ते, वेदसम्मतानि शास्त्राणि चाप्यत्रैव समुद्यन्ति। अत्रैव देवयजनपावनभूमौ अन्तर्जगत्सम्बन्धि-ज्ञानप्राप्तिहेतुभूतानि सप्तदर्शनानि योगसाधनोपयोगीनि चत्वारि सोपानानि धर्माधर्मनिर्णायकस्मृति पुराणादिग्रन्थसमूहाः समुदेयिवांसः, अतोहि भगवदवताराणामाविर्भावभूमिर्भारतखण्ड एवेति पुराणादिशास्त्रसम्मतम् ॥ १३२ ॥

अष्टमीकला निरूप्यते—

**योगभक्तिद्वयाङ्गोपासनाष्टमी पूर्णत्वात् ॥१३३॥**

पूर्णत्वात् परिपूर्णस्वरूपत्वाद योगस्य भक्तेश्चेतिद्वयस्य अङ्गानां प्रत्येकविभागानां सम्यगुपासनाऽऽर्यधर्मस्याष्टमी कलाऽभ्युपगन्तव्या। उपसमीपे जगदीश्वरसन्निधाने आसनमुपवेशनमुपस्थानं गमनमिति-

त्युपासना । परमेश्वरसमीपगमनोपायो वा उपासनेत्युच्यते । तस्याः शरीरं योगः, प्राणाश्च भक्तिरिति । सर्वविधा अपि योगसाधनपद्धतयो भक्तिविभेदाश्चार्यधर्मे समुपलभ्यन्ते । द्वयोरनयोः परिपूर्णत्वात् तत्पालनेनान्यधर्मावलम्बिनोऽपि स्वीयां समुन्नतिमनुष्ठातुं प्रभवः ॥१३३॥

तदुपयोगित्वमुदीर्यते—

**अनुकृतेयं सर्वैः ॥१३४॥**

इयं योगभक्तिप्रणाली सर्वैः सर्वधर्मावलम्बिभिरनुकृता । तस्याः सर्वैं विधर्मिभिरपि स्वेषु स्वेषु धर्मेष्वनुकरणं कृतमित्यर्थः । आर्याणामुपासनापद्धतयो योगस्य भक्तेश्चाङ्गोपाङ्गैः परिपूर्णत्वात् सर्वहिताधायिकाः सर्वाङ्गपूर्णाश्च । एतदीयान्युपासनाङ्गानि जागतिकसर्वमतमन्तान्तरसाहाय्यकराणि, तानि च सर्वैरेव यथासम्भवं स्वधर्मेषु सन्निवेशितानि ॥१३४॥

नवमी कला निर्दिश्यते—

**नवमी पीठपूजा शक्तिविश्वासात् ॥१३५॥**

शक्तौ परमेश्वरशक्तौ विश्वासात् पीठपूजा देवाविर्भावस्थानसमर्चा आर्यधर्मस्य नवमी कला वर्तते, मृच्छिलामयेषु देवपीठेषु सर्वव्यापकस्य भगवतः पूजनमार्याः प्रकुर्वते । उपवेशनस्य वा आविर्भावस्य वा स्थानं पीठमित्युच्यते । यत्र भगवतः शक्तिराविर्भवति तदेव पीठम् । यथाऽऽग्नेयशिलायां व्यापकसूर्यकिरणाकर्षणादग्निः प्रादुर्भवति, तथैव पीठेऽपि व्यापकस्य भगवतः शक्तयो मन्त्रबलेन समाकृष्टाः कार्यकारिण्यः सम्पद्यन्ते । नैवार्याः केवलं मृच्छिलादीनामर्चनमनुतिष्ठन्ति । अनन्तकोटिब्रह्माण्डीयसृष्टिप्रपञ्चे श्रीजगदीश्वरो विराजमानो विद्यते । तत्प्रतिनिधयः प्रतिब्रह्माण्डं भिन्ना ब्रह्म-विष्णु-रुद्राः सृष्टिस्थितिप्रलयान् सम्पादयन्तो विज्ञेयाः । तदंशभूताश्चानेक-

श्रेण्यो देवा, देव्यश्च स्वे स्वे कर्मणि निरता विद्यन्ते। निखिला एव यथोचित स्थानेषु पीठत्वमापन्नेषु समाविर्भवन्ति। तत्र दैवकर्मनिष्पत्ति-हेतवे वशिष्ठादि महर्षि संघाः, इन्द्रादिदेवसंघाः, अर्यमादिपितृसंघाश्च नित्यस्वरूपाः, कर्मनियन्ता जीवशुभाशुभ कर्मफलदाता यमो धर्मराजः जगत्प्रकाशको भगवान् सूर्यदेवश्चेत्यादयो देवपदधारिणो निमितेषु यथोचितपीठेषु प्राकट्यं प्राप्नुवन्ति।

सृष्टिप्रपञ्चे चात्राकर्षणविकर्षणरूपे द्वे शक्ती कार्यकारिण्यौ। शक्तिद्वयसमन्वयेन पीठमुत्पद्यते। उदाहरणरूपेणेदमवधेयं यत् द्वे बालिके परस्परं करौ गृहीत्वा यदा गोलभ्रमणीं क्रीडतस्तदा तयोर्गोलाकारचङ्क्रमणेनैकं केन्द्रमुत्पद्यते, येन नैते पततः। परन्तु तदानीं तयोरन्योन्यहस्तयोः शैथिल्ये जाते निपातेन तयोर्हस्तपादप्रभृत्यङ्गानि चूर्णितानि स्युः, एवमेवाकर्षणविकर्षणशक्तिद्वयसमन्वयेन दैवीनां शक्तीनामाविर्भावः सिद्धः। ग्रहनक्षत्रादयोऽप्येतयोर्द्वयोरेव कारणात् स्वासु कक्षासु परिभ्राम्यन्ति। टेबलरेपिङ्ग सर्किलाप्रभृति-ष्वाङ्गलभाषाप्रोक्तप्रक्रियासु पीठोत्पत्तिं भौतिकाः परलोकविज्ञान-वेत्तारोऽपि समामनन्ति। तादृशक्रियाकलापैः पीठोत्पत्तौ जड़-पदार्था अपि चेतनवत् कार्यकारिणो दृश्यन्ते। शालिग्रामशिलायां वाणलिङ्गेऽपराजितापुष्पादौ पीठमिदं स्वाभाविकमपि। आवाहना-भावेप्यत्र पूजनं क्रियते। विसर्जनस्यापि नास्त्यावश्यकत्वमत्र। भगवच्छक्तिविश्वासनिरताऽऽर्यजातिः पीठेषु देवान् समर्चति। अत आर्यधर्मस्य नवमी कला पीठपूजैव ॥१३५॥

हेतुसहितं मूर्त्तिपूजनं समर्थ्यते—

**प्रतीकाश्रयः ॥१३६॥**

प्रतीकस्य, कस्यचिदाधारस्याश्रयोऽवलम्बनं क्रियते, दैवी-शक्तीनां पीठद्वाराऽऽविर्भावादेवार्यजातौ मूर्त्तिप्रभृतिपीठावलम्बने-

नोपासना पद्धतिः प्रसृता। अव्यक्तस्य निराकारस्योपासनं नितरां कठिनमिति भगवान् श्रीकृष्णो गीतोपनिषदि स्वमुखेनैव व्याजहार। साकारोपासनायै विविधप्रतीकाश्रयणमार्यशास्त्रेषु समाज्ञप्तम्। बहुविधपाषाणधातुनिर्मित - मूर्त्तिस्थण्डिल - चित्रभित्तिरेखा - यन्त्र - जलकुम्भ-वह्नि-प्रभृतिप्रतीकावलम्बनेन मनसो धारणायां साहाय्यमुपलभ्यते। वेदपुराणतन्त्रशास्त्रेषु विज्ञानमिदं सविस्तरमुपवर्णितम्॥ १३६॥

दशमी कला निर्दिश्यते—

शुद्ध्यशुद्धिस्पृश्यास्पृश्यविवेको
दशमी पञ्चकोषसम्पर्कात् ॥१३७॥

पञ्चानां कोषाणां सम्पर्कात् सम्बन्धात् शुद्ध्यशुद्ध्योः स्पर्शास्पर्शयोश्च विवेक आर्यधर्मस्य दशमी कला बोध्यते। आत्मनः स्वरूपं पञ्चभिः कोषैराच्छादितम्। आर्याः किल पञ्चकोषपरिशुद्धये दैवराज्यसम्बन्धस्थापनद्वारा शुद्धाशुद्ध – स्पर्शास्पर्शविवेकसाधनं विदधते। एतदीयं सविस्तरं सुविवेचनमत्रैव क्रियापादे पूर्वमनुष्ठितमास्ते॥१३७॥

तदुदर्क उदीर्यते—

दैवानुकम्पाशालिनी ॥१३८॥

देवानामनुकम्पा दया तया शोभनशीलाऽऽर्यजातिरिति शेषः। उपर्युक्त सूत्रप्रोक्तधर्मानुष्ठानेनार्यजातिरियं दैवीं कृपामधिगच्छति। शुद्धाशुद्धस्पर्शास्पर्शविचारपरिपालनेनाधिभूताधिदैवाध्यात्मशुद्धीनामधिकाराः प्राप्यन्ते। एवं सति स्वीयशृङ्खलाव्यवस्थापने देवैः साहाय्यमधिगम्यते। अत इयमार्यजाति दैवीं कृपां प्राप्नोति॥१३८॥

एकादशी कला निर्दिश्यते—

**यज्ञमहायज्ञावेकादशी परस्परसम्बन्धात् ॥१३९॥**

यज्ञमहायज्ञेषु विश्वास आर्यधर्मस्यैकादशी कला विज्ञातव्या, यत एतद्द्वारा देवानां मनुष्याणां च परस्परसाहाय्यसम्बन्धः संस्थाप्यते । यथोक्तं गीतोपनिषदि—

"देवान् भावयताऽनेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥"

भगवत्कृपामधिगत्य येन धर्माङ्गसाधनेन दैवराज्यसम्बर्द्धनं क्रियतेऽसौ यज्ञः । येन यज्ञसम्बन्धीयेन कर्मणा व्यक्तेः कल्याणं सम्पद्येतैष यज्ञः, समष्टिजातिजगत्कल्याणाय क्रियमाणं यज्ञीयं धर्मकार्यं महायज्ञ इत्युच्यते ॥१३९॥

तत्परिणामो निरूप्यते—

**धर्मप्राणा ॥१४०॥**

निजजीवनस्य यज्ञमयत्वादाध्यात्मिकोन्नतिशीलेयमार्यजातिर्धर्मप्राणा, धर्म एव प्राणा यस्या इति तथा भूता । शरीरवाङ्मनोबुद्धिकृतकर्मणां धर्ममूलकत्वात्तदीयं जीवनं यज्ञमयम् । प्रत्यक्षमिदं यत् आर्यजातौ प्रत्येकस्यापि कृते प्रतिदिनं पञ्चमहायज्ञसाधनं शास्त्रैराज्ञप्तम् , अतोऽस्या धर्मप्राणता स्वाभाविकी ॥१४०॥

द्वादशी कला प्रतिपाद्यते—

**वेदशास्त्रविश्वासो द्वादशी नित्यत्वात् ॥१४१॥**

वेदेषु शास्त्रेषु च विश्वास आर्यधर्मस्य द्वादशी कला प्रोक्ता । वेदशास्त्राणां भगवदाज्ञास्वरूपेण नित्यत्वादित्यर्थः ॥१४१॥

वेदशास्त्रनित्यत्वकारणं व्याचष्टे—

**प्रथमः शब्दरूपत्वाद् भावरूपत्वाद् द्वितीयम् ॥१४२॥**

प्रथमो वेदः शब्दस्वरूपत्वेन नित्यः, द्वितीयं शास्त्रं किल भावस्वरूपतया नित्यमित्यर्थः। वैदिकाः शब्दराशयो यथातथ्येन श्रूयन्ते। अन्यानि शास्त्राणि तु भावरूपेण महर्षिणामन्तःकरणेषु प्राकाट्यं भजन्ते। पुनश्च मुनयो महर्षयश्च तान् भावान् स्वशब्दैः संगमय्य शास्त्ररूपतः प्रकटयन्ति। वैदिकविज्ञानस्यायं सिद्धान्तो यद् वेदशब्दाः कदापि न परिवर्त्तन्ते। ते नित्यस्वरूपा ब्रह्मलोके विद्यमानास्तिष्ठन्ति। मानवकर्मानुसारं मृत्युलोके तेषामाविर्भावतिरोभावौ जायेते।

जडविज्ञानेनापीदं साधितं यत् शब्दाः सर्वव्यापक आकाशे नित्यास्तिष्ठन्तो रेडियोयन्त्रद्वारा प्राकट्यमासादयन्ति। एवमेव ब्रह्मलोके नित्यस्थितिशीला वेदाश्चतुर्युगव्यत्यये सत्ययुगारम्भकाले च संयमशीलसमुन्नतान्तःकरणमहर्षिणामन्तःकरणेषु याथातथ्येन संश्रुताः प्रकाशमवाप्नुवन्ति, अत एव श्रुतिर्हि वेदस्यापरं नामधेयम्। स्मृत्यादीनि शास्त्राणि तु प्रशान्तयोगयुक्तमहर्षिहृदयेषु यथासमयं भावस्वरूपतः प्रकाश्यन्ते। पुनश्च वेदानुकूलानि तानि ते मुनिमहर्षयः स्वशब्देषु प्रकटयन्ति। इदमेव वेदशास्त्रनित्यत्वरहस्यमवधेयम् ॥१४२॥

आर्यधर्मस्य त्रयोदशी कला कीर्त्यते—

**संस्कारकर्मश्रद्धा त्रयोदशी बीजाङ्कुरवत् ॥१४३॥**

बीजं च अङ्कुरश्च बीजाङ्कुरौ तद्वत् संस्कारकर्मणी वेदितव्ये, संस्कारो बीजं कर्म च तदङ्कुरस्वरूपं, तयोरुपरि श्रद्धा विश्वासो ह्यार्यधर्मस्य त्रयोदशीकला वेद्या। वैदिके कर्ममीमांसादर्शने चात्र संस्कारस्यानेके त्रिभेदाः, संस्कारजनिता ऊर्द्ध्वाधोगतयः, वैदिक-

संस्काराणां रहस्यम्, कर्मणोऽलौकिकं विज्ञानम्, सहजैशजैवकर्म-भेदाश्चेत्यादीनि सविस्तरमन्यत्र वर्णितानि ॥१४३॥

तत्फलमभिदधाति—

**चतुर्वर्गफलप्रदा ॥ १४४ ॥**

पूर्वोक्ता संस्कारकर्मणोः श्रद्धा त्रयोदशी कलाऽऽर्येभ्यश्चतुर्वर्ग-फलप्रदा विद्यते। कामार्थधर्ममोक्षाश्चतुर्वर्गेऽन्तर्भवन्ति। अत्रैवाभ्युद-निःश्रेयसयोः समावेशः। यदि संस्कारकर्मणी यथाधिकारे प्राप्येतां तर्हि जीवः सर्वमप्यधिगन्तुं शक्नुयात्, इदमेतत्सूत्रतात्पर्यम् ॥१४४॥

चतुर्दशी कला प्रोच्यते—

**आवागमनचक्रजन्मान्तरवादविश्वासश्चतुर्दश्यभ्युदय-निमित्तत्वात् ॥ १४५ ॥**

जीवस्य निरन्तरमभ्युदयकारणत्वादावागमनचक्रे जन्मान्तर-वादे च विश्वास आर्यधर्मस्य चतुर्दशी कलाऽभ्युपगन्तव्या। समु-त्पद्यमानो जीवः सहजपिण्डाख्ये चतुर्विधभूतसंघे क्रमशः अग्रेसरन् यदैव मानवपिण्डमधिकरोति तत एवाऽऽगमनचक्रे निरन्तरं भ्राम्यति। जीवः समुत्पद्यमानो म्रियमाणश्च प्रेतलोकनरकलोकस्वर्गलोकादिषु बम्भ्रम्यमाणः पुनर्मृत्युलोकमायातीत्येतदेवावागमनचक्रभ्रमण-तात्पर्यम्, जन्मान्तरवादस्य तु स्पष्टोऽर्थः। एतदावागमनचक्र-जन्मान्तरकारणेन जीवः प्रथममभ्युदयमन्ते च निःश्रेयसमधि-गच्छति ॥ १४५ ॥

विज्ञानमिदं परिपोषयति—

**विवाहदायश्राद्धतर्पणचतुर्व्यूहसुरक्षिता ॥१४६॥**

चतुर्दशी कला विवाहेन, दायेन, श्राद्धेन, तर्पणेन चेति चतुर्व्यूहेण सुरक्षिता विद्यते। आवागमनचक्रजन्मान्तरवादसंरक्षणं हि

चतुर्व्यूहप्रयोजनम् । विवाहसंस्कारः, दायभागव्यवस्था, श्राद्धं, तर्पणं चेति चत्वारि व्यूहेनोपमितानि । आवागमनचक्रे समाटास्यमानस्य जीवस्य साहाय्यप्रदानाय श्राद्धं तर्पणं दायभागव्यवस्थापनं च दृढतापूर्वकमवलम्बनीयमास्ते । यतो ह्येतैः परलोकप्रस्थितस्य जीवस्य सहायता दीयते । सृष्टिकार्ये विवाहः सर्वतः सुमहत्त्वशाली । आर्यैस्तत्पवित्रता सदा संरक्ष्यते । अतो रजःसमुद्गमात् पूर्वमेव विवाहसंस्कारेण कन्याचेतः पवित्रं सुरक्षितं च क्रियते । वरकन्ययोः सम्बन्ध उभयलोकव्यापी जन्मान्तरव्यापी वा विधीयते । दायभागापरनामकं सम्पत्तिविभाजनमपि परलोकगतस्यात्मनस्तृप्तिसाधकमेव । श्राद्धादिना परलोकगतस्य जीवाय शास्त्रीयमधिकारमाश्रित्य येन सहायता दीयते तस्मा एव सम्पत्तिप्रदानं शास्त्राण्याज्ञापयन्ति नान्यस्मै । एतत्कार्यसुसिद्धये विस्तृतं लघु चेति विधिद्वयं शास्त्रेणोपदिष्टम् । तत्र विस्तृतं श्राद्धं तर्पणं च लघु सुलभमित्यर्थः । एवं हि पूर्वोक्तसिद्धान्तश्चतुर्व्यूहेन परिपुष्टतां नीतः ।। १४६ ।।

धर्मस्य पञ्चदशी कला निर्णीयते—

**सगुणनिर्गुणोपासना पञ्चदशी सर्वशक्तिमत्त्वात् ।।१४७।।**

सर्वशक्तिमत्त्वात् परमात्मनो निर्गुणसगुणोपासनव्यवस्थाऽऽर्यधर्मस्य पञ्चदशी कला । सर्वशक्तिमान् भगवान् सर्वमनुष्ठातुं प्रभुः । तेन कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यते । निर्गुणो निराकारोऽप्यसौ भक्तहितार्थं सगुणत्वं साकारत्वं वा भजते ।। १४७ ।।

तत्कारणमुदाह्रियते—

**अधिकारिभेदाद्व्यवस्था ।। १४८ ।।**

आर्यधर्मे उपासनार्थमधिकारिभेदव्यवस्था वर्त्तते । यथाधिकारं साधकेभ्य उपासनोद्देशो निर्णीतः । आर्यधर्मे तामसिकी भूतप्रेतादीनामुपासनामारभ्य निर्गुणब्रह्मोपासनां यावद् विधानमवलोक्यते ।

सर्वश्रेणिगा उपासका निर्गुणनिराकार-भगवद्भावस्य धारणां कर्त्तुं नैव प्रभवः। अतः आर्यधर्मे सगुणस्य निर्गुणस्येति प्रकारद्वयस्योपासना व्यवस्थापिता यतो भगवान् निराकारः साकारो वा निर्गुणः सगुणोऽपि च ॥ १४८ ॥

आर्यधर्मस्य षोडशीं कलामभिधत्ते—

**कैवल्याधिगमः षोडशीपूर्णत्वात् ॥१४६॥**

पूर्णत्वात् जीवस्य क्रमोन्नतिक्रमस्य परिपूर्णत्वात् कैवल्याधिगमो मोक्षप्राप्तिरार्यधर्मस्य षोड़शीकला निर्दिष्टा। जीवक्रमोन्नतेरन्तिमं पदं कैवल्यप्राप्तिरेव, सर्वेष्वपि वैदिकदर्शनेषु स्वाधिकारमनुसृत्य मुक्तेः स्वरूपमभिहितम्। जीवस्याभ्युदयस्य पन्थानो वहवो भवितुमर्हन्ति, किन्तु तदन्तिमसीमा कैवल्यमेव। आर्यधर्म एव मुक्तेरधिकारो निर्णीतः तमधिकृत्यैव जीवः कृतकृत्यतां भजते। अत आर्यधर्मेऽस्य षोडशकलात्वेन निर्देशः संगत एव ॥१४६॥

आर्यधर्मस्य महत्त्वं व्याकुरुते—

**जगद्गुरुत्वमार्यजातेः ॥१५०॥**

आर्यधर्मस्य षोडशकलापरिपूर्णत्वादेवास्या आर्यजातेर्जगद्गुरुत्वं प्रसिद्धम्। अत एव भगवान् मनुराज्ञापयति—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥

सर्वत्रापि भूमण्डले समुत्पन्नाः विद्वांसः सभ्यपुरुषाः स्वेषु स्वेषु ग्रन्थेषु जगद्गुरुत्वं प्राचीनानामार्याणामैकमत्येनाङ्गीचक्रुः। तपःस्वाध्यायनिरतत्यागशीलसमस्तजगन्माङ्गलहित—धृतजीवनानां ब्राह्मणानां महत्त्वेनैवार्यजातिगौरवमिति द्योतयितुं मनुना ब्राह्मणशब्दोपादानमनुष्ठितम् ॥१५०॥

आर्यजातिमहत्त्वमुदीर्य स्वसिद्धान्तं पोषयति—

**यज्ञमयजीवनं च ॥१५१॥**

अतः कारणादेवार्यजातिजीवनं यज्ञमयम्। यज्ञमहायज्ञलक्षणं दर्शनेऽत्र नैकत्र निर्दिष्टम्। आर्येभिन्नासु जागतिकासु कास्वपि जातिषु यज्ञमयमेतादृशजीवनं न दृश्यते ॥१५१॥

यज्ञस्य विशिष्टमहिमानं द्योतयति—

**सहयज्ञा प्रजासृष्टिः ॥१५२॥**

यज्ञेन साकमेव प्रजायाः सृष्टिः क्रियते। धर्मयज्ञयोः पर्याय-वाचकत्वात् यज्ञेन सह प्रजासृष्टिः स्वतः सिद्धा। धर्मो यदि जगद्धारकः, जगतः स्थितिमूलं धर्म एव, धर्मेण जीवाः क्रमशोऽभ्यु-दयमधिगच्छन्तो निःश्रेयसाभिमुखमग्रेसरन्ति, तर्हि धर्माभिन्नेन यज्ञेन सह प्रजासृष्टिरपि सम्भवैव, अन्यथा प्रजाया रक्षा क्रमोन्नतिश्च न सम्भवेत्। योहि प्रजास्थितिमूलम्, यतः सृष्टिसंरक्षणं, येन चाभ्युदयनिःश्रेयसाधिगमः स च भगवच्छक्तिस्वरूपः प्राकृतिको नियमो धर्मो यज्ञस्वरूपः, तेन सहैव प्रजासृष्टिरुत्पद्यतेऽत्र किं चित्रम्? गीतोपनिषद्यपि प्रोक्तम्—

सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१५२॥

अन्यच्च—

**प्रजादेवयोरन्योन्यं सम्वर्द्धनम् ॥१५३॥**

यज्ञेनैव प्रजादेवयोर्मनुष्यदेवयोरित्यर्थः परस्परं सम्वर्धनमुप-कारकत्वम्। यथा चोक्तं गीतोपनिषदि—

देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तै र्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥

यज्ञस्येदमपि महत्त्वं यत् धर्मस्वरूपोऽयं सृष्टिं दधाति तस्याश्च क्रमाभ्युदयस्य हेतुतां भजते। यदि कर्मणो जड़त्वाच्चेतनचालकमन्तरेण कर्मफलोत्पत्तेरसम्भवात् सृष्टिसंरक्षणं क्रमाभ्युदयश्च देवैरेव क्रियते चेत्तर्हि स्वीकार्यमेवेदं यद्यज्ञस्य देवानां च पारस्परिकः सम्बन्धो वर्तत इति। अन्यच्च धर्मोत्पन्नकर्मणो याथातथ्येन सुव्यवस्थापनं तस्य यथोचितं फलप्रदानं च देवाधीनम्, यज्ञद्वारा च देवकार्ये साहाय्यमधिगम्यते, यतो यज्ञस्वरूपो धर्मो विश्वधारकस्तर्हीदमभ्युपगन्तव्यमेव यद्देवानां यज्ञेन सम्बर्द्धनमपि समुचितमेव। यज्ञाभावात्सृष्टिसंरक्षणमसम्भवं जीवानामभ्युदयनिःश्रेयसप्राप्तिरप्यसम्भवा, तथैव देवाश्चापि स्वकर्त्तव्यपालनं कर्त्तुं नैव क्षमन्ते। जीवनजीविकयोर्यज्ञसम्बन्धत्त्वाद् देवानां च यज्ञैः सह सम्बन्धनिबन्धनत्वात् सिध्यतीदं यत् यज्ञैर्देवा संवर्द्धिताः परिपुष्टाः परितुष्टाश्च जायन्ते इति। एवं सम्बर्द्धितैस्तैरपि प्रजायाः पोषणं तोषणं च कर्त्तव्यमेव, यदिदं तदीयं कर्म ॥ १५३ ॥

विज्ञानस्यैतस्य पोषणं क्रियते—

## साम्राज्यवत् ॥ १५४ ॥

साम्राज्यवत्, साम्राज्यमिव। यथा साम्राज्ये राजप्रजासम्बन्धस्तथैव देवमानवसम्बन्धोऽपि वेदितव्यः। राज्ञा प्रजा इव मनुष्यादिसृष्टिर्देवैः सुरक्ष्यते। यथा हि प्रजा धनजनबलादिद्वारा राजानं परिपोषयति, तथैव मानवा अपि धर्मसाधनं द्वारीकृत्य दैवराज्यं समृद्धिशालि पुष्टं तुष्टं च विदधते। राज्ञः प्रजायाश्च कल्याणमन्योन्याधीनम्, तथैव मानवसमाजस्य धार्मिकत्वाभावे दैवराज्यपरिपुष्टिरसम्भवा, तया विना च मृत्युलोकाभ्युदयोऽप्यसम्भव एव। निरङ्कुशाऽसन्तुष्टा

राजविरोधिनी च प्रजा यथा नैव राजकल्याणकारिणी, तथैवासंयमी स्वार्थपरः प्रजाहितविमुखो राजा प्रजाभ्युदयं साधितुं न क्षमः। एवमेव मनुष्यलोकेऽत्र धर्मानुष्ठाने नष्टे देवलोको निर्बलतां कर्त्तव्य-शिथिलतां च भजते तदानीमासुरं बलं प्रवर्द्धते। अवस्थायामेतस्यां मृत्युलोके सर्वविधतापसन्तापाशान्तिप्रभृतीनां प्रवर्द्धमानत्वात् प्रजा-बहुविधान् क्लेशाननुभवति। सुतरां देवमनुष्ययोः परस्परसम्बर्द्धन-मपि साम्राज्यवदेव ॥ १५४ ॥

कर्मणः फलानुसन्धानकरो भेदः प्रदर्श्यते—

**द्विविधं कर्म शुभमशुभं च ॥१५५॥**

कर्म द्विप्रकारकं वेद्यमेकं शुभमपरमशुभं च। क्रियया सह प्रतिक्रियाऽपि नूनं भाविनी। करोत्थापनानन्तरं करनिपातोऽपि भवत्येव। प्रतिक्रिययैव कर्मणः फलमुत्पद्यते। यद्येको मानवोऽपरं हन्यात् तदा तत्कर्म परिपाकावस्थायां जन्मान्तरे समुद्भूयमान-प्रतिक्रियया घातकोऽपि मृतव्यक्तिजन्मान्तरगृहीतशरीरद्वारा घात्यते, कर्मणो वा रूपान्तरत्वे घातकोऽल्पायुष्ट्वमापद्यते। एवं हि प्रत्येक क्रियायाः प्रतिक्रियावस्थायामवश्यमेव फलमुत्पद्यते। यथोक्तं शास्त्रे—

"अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्"

सत्त्वगुणवर्द्धकं मङ्गलवासनासमनुष्ठितं च कर्म शुभफलमुत्पाद-यति, तद्विपरीतं तमोगुणवर्द्धकमशुभं फलं प्रयच्छति। शुभेन कर्मणोर्द्ध्वगतिःसुखप्राप्तिश्च विपरीतेनाधोगतिर्दुःखाधिगमश्च ॥१५५॥

प्रसङ्गतस्तत्कारणं निर्णीयते—

**सर्गद्वन्द्वनिमित्तं तत् ॥१५६॥**

सृष्टेर्द्वन्द्वतैव तत्कारणम्। सृष्टेर्द्वन्द्वता पूर्वमुपवर्णिता। दिन-रात्रिभेदेन कालो द्विविधः। छायाज्योतिर्भेदतो रूपमपि द्विप्रकारम्।

सृष्टेरपि द्वन्द्वत्वं स्वाभाविकम्। एतत्स्वाभाविकभेदमनुसृत्य फलोन्मुखस्य कर्मणोऽपि भेदद्वयं न काल्पनिकं स्वभावसिद्धमेव ॥१५६॥

प्रसङ्गतो गतिद्वयमुपवर्ण्यते—

## गतिद्वयनिबन्धनं च ॥१५७॥

सृष्टेर्द्वन्द्वं द्विविधाया गतेरपि कारणम्। स्वाभाविकं नियममिममनुसृत्यैव पूर्वोक्तकर्म द्वैविध्याज्जीवगतेरपि द्वैविध्यमाम्नातम्। एका जीवमूर्द्ध्वमुन्नयति द्वितीयाऽधो गमयति। पितृलोक-स्वर्गलोकादि-समुन्नतभोगलोकावाप्तिः, सहजगति जीवन्मुक्तदशा शुक्लगतिश्चेत्यादिकमूर्द्ध्वगतेरुदाहरणम्। अधोगतेरुदाहरणं यथा—मृत्युलोके पुनरावर्तनपूर्वकदुःखदयोनिलाभः, प्रेत-नरकादिलोकाधिगमश्च। मृत्युलोके राजत्वलाभः, ब्राह्मणत्वाधिगमः, संन्यासदीक्षा चेत्यादि, देवलोके च यमत्वम्, इन्द्रत्वं, ऋषित्वं ब्रह्म-विष्णु-शिवत्वमित्यादीन्यूर्ध्वगतावन्तर्भवन्ति। राक्षसत्वं पिशाचत्वमारभ्य तिर्यग्योनिप्राप्तिश्चेत्याद्यधोगतेरुदाहरणमवधेयम्। सुतरामावागमनचक्रं द्वारीकृत्यैवेदं गतिद्वयमग्रेसरं वोभवीति ॥१५७॥

तत्स्वरूपं निरूप्यते—

## ते सुकृतदुष्कृते ॥१५८॥

ते ऊर्ध्वाधोगती सुकृतदुष्कृते स्तः। ऊर्द्ध्वगतिशीलः प्रवाहः पुण्यम् अधोगतिकारकश्च पापमिति निर्गलितार्थः। वेदस्मृतिपुराणादि-शास्त्रेषु समुपवर्णितः पुण्यपापकर्मकलापः पुण्यात्मपापात्मजीवन-चरित्रं चेत्यादि विवेचनं गतिद्वयनिबन्धनमेव। सुतरां सत्त्वगुण-वर्द्धकं मङ्गलकरं कर्म पुण्यम्, ऊर्द्ध्वगतिशीलम्, तमोगुणवर्धकम-मङ्गलकरं कर्म पापमाख्यायते, तदेवाधोगतिशीलम्, एतदेव सर्व-शास्त्रोपवर्णितं सर्वसम्प्रदायसम्मतं पुण्यपापरहस्यमवधेयम् ॥१५८॥

तत्परिणामः प्रोच्यते—

सुखदुःखोपलब्धिस्ताभ्याम् ॥ १५६ ॥

ताभ्यां पूर्वनिरूपितपुण्य-पापकर्मभ्यां क्रमशः सुखदुःखयोरुपलब्धिर्जायते। सत्त्वगुणवर्द्धकेन पुण्येन कर्मणा सुखस्य तमोगुणवर्द्धकेन पापेन कर्मणा दुःखस्य चोत्पत्तिर्भवति। सत्त्वगुणप्रभावत आत्मोन्मुखेऽन्तःकरणे आत्मन आनन्दसत्तायां प्रतिफलितायां सुखमुत्पद्यते। अन्यच्च रजस्तमःप्रभावत आत्मनो वैमुख्यमापन्नेऽन्तःकरणे परमानन्दमयस्य परमात्मनः सम्बन्धाभावत्वात् समुत्पद्यमानः क्लेश एव दुःखमभिधीयते। यद्यपि वैषयिकसुखदुःखोपभोक्ता दार्शनिकरहस्यपरिज्ञानाभावात् योगिजनवेद्यमिदं नानुभवति, परन्तु सुखदुःखानुभवे स्वत एवान्तःकरणपरिणामस्तादृशो बोभूयते। विषयसुखमनुभवतोऽज्ञानिनोऽपि तन्मात्रावलेन शान्तिमापद्यतेऽन्तःकरणम्। यतस्तदानीं तन्मात्रासु सत्त्वगुणप्राधान्येन प्रशान्तिमापन्नेऽन्तःकरणे आत्मानन्दसत्तायाः प्रतिफलनमेव वैषयिकानन्दस्य मौलिको हेतुः। यतस्तदानीं अन्तःकरणस्य स्वाभाविकी गतिरात्मनोऽभिमुखीभवति। वैषयिकदुःखानुभवकाले तद्वैपरीत्याद् रजस्तमसोः प्रभावाच्चाञ्चल्यप्रमादादिसद्भावेन तन्मात्राभिरन्तःकरणमशान्तं क्रियते। फलतश्चञ्चलमन्तःकरणमात्मनो ह्यानन्दसत्तायाः प्रतिविम्बं न गृह्णाति, अन्तःकरणगतिः केवलमधोगामिनी जायते। एतदेव दुःखानुभवकारणम्, पुण्यपापजनितयोः सुखदुःखभोगयोरेतदेव दार्शनिकं रहस्यमवधेयम् ॥१५६॥

प्रसङ्गतो मानवस्य विशेषाधिकारो वर्ण्यते—

मानवस्तद्भाक् स्वातन्त्र्यात् ॥१६०॥

मानवो मनुष्यः स्वातन्त्र्यात् स्वतन्त्रताधिगमेन हेतुना तयोः पुण्यपापयोर्भाग् अधिकारी भवतीत्यर्थः। मानवाधस्तनयोनीनां

सविस्तरम् सम्पूर्णत्ववर्णनं प्रागेवोक्तम्। मानवयोनिः सर्वयोनिषु श्रेष्ठा। अत्रैव जीवः पूर्णावयवतामधिगच्छति। मनुष्यशरीरादेव जीवो दैवीं योनिं प्रतिपद्यते। अत्रैव मानवयोनावुन्नतेः पराकाष्ठा, अतो मानवयोनावेव जीवः पुण्यपापाधिकारी भवन्नावागमनचक्र-केन्द्रतामापद्यमानः पुण्यपापफलोपभोगाय नानालोकेषु यातायात-मनुतिष्ठति। अतएवोक्तं स्मृतिशास्त्रे—

मानुषेषु महाराज धर्माधर्मौ प्रवर्त्ततः।
न तथान्येषु भूतेषु मनुष्यरहितेष्विह ॥
सम्पूर्णावयवा जीवा मर्त्यपिण्डं गतास्ततः ॥ इति १६०॥

तन्निमित्तमुच्यते—

चतुर्दशलोकप्राप्तिनिमित्तं तत् ॥१६१॥

तत् मानवपिण्डं चतुर्दशलोकानां प्राप्तेः निमित्तं कारणं प्रोक्तम्। चतुर्दशलोकास्तदवान्तरलोकाश्च सुखदुःखभोगमयाः। भूर्लोकान्तरगतपितृलोकमारभ्योपरिस्थिताः सर्वेऽपि षड्लोका दैव-सुखमयाः, अधःस्थिताश्च सप्तासुर—सुखभोगनिलया वेद्याः। वस्तुतस्ते सर्वेऽपि लोकाः सुखभोगहेतुका एव। केवलं सुख-तारतम्यमेषु तिष्ठति। मृत्युलोकस्तूभाभ्यां सुखदुःखाभ्यां परि-पूर्णः। यतोऽयं लोकः कर्मभूमिरावागमनचक्रकेन्द्रं च, प्रेत-नरक-लोकास्तदवान्तरलोकाश्च केवलं दुःखोपभोगस्थानानि, अतः पुण्यं पापं च चतुर्दशलोकप्राप्तिनिदानम्। पुण्यात्मनो दैवसुखमुपभोक्तुं देवलोकमुपढौकन्ते, आसुरसुखमुपभोक्तुकामा आसुरलोकं व्रजन्ति। केवलं पापफलस्वरूपदुःखोपभोक्तारो नरकादिलोकं प्रयान्ति, ये तु कर्मानुष्ठानलब्धस्वातन्त्र्या उभयोरेव पुण्यपापयोरुपभोक्तारस्ते मृत्युलोकमासादयन्तीति ॥१६१॥

अन्यदपि—

## जात्यायुर्भोगहेतुः ॥१६२॥

चतुर्दशभुवनप्राप्तिहेतुभूतं द्विविधं कर्म जात्यायुर्भोगानामपि कारणम्। पूर्वमेवैतन्निर्णीतं यत् प्रारब्धसंस्कारद्वारैव जात्यायुर्भोगाः प्राप्यन्ते। जात्यायुर्भोगाधिकारेणैव पिण्डस्योत्पत्तिस्थितिनाशा जायन्ते। सुतरां शुभाशुभभोगमूलकं पुण्यं पापं च पिण्डकारणभूतानां जात्यायुर्भोगाणामपि कारणं सिद्धमेव ॥१६२॥

अन्यदप्युच्यते—

## चित्ताकाशकारणं च ॥१६३॥

तत् द्विविधं कर्म चित्ताकाशस्यापि कारणमवगन्तव्यम्। चित्ताकाशचिदाकाशमहाकाशेतिभेदेन आकाशस्त्रिधा विभिद्यते। एकजीवान्तःकरणावच्छिन्नश्चित्ताकाशः, एकस्य ब्रह्माण्डस्यान्तःकरणसमष्टिभूतश्चिदाकाशः, अनन्तकोटिब्रह्माण्डव्यापको महाकाश इति। आकाशशब्देनात्र पञ्चभूतान्तर्गत-प्रथमतत्त्वस्य सम्बन्धो नावगन्तव्यः। अयं देशात्मक आकाशोऽन्य एव। अयं किल संस्कारधारकः कर्माशयसम्बन्धनिबन्धनः। चित्ताकाशचिदाकाशभेदावधारणार्थमुदाहृतिरियं यत् एकस्य मनुष्यस्य मननशक्तिर्यदा तस्यैवान्तःकरणेन सम्बद्धा भवति तर्हि तत् किल चित्ताकाशस्य कार्यमवगन्तव्यम्। यदाऽसौ मानवः साधको भूत्वाऽन्यमानवान्तःकरणे संयममनुष्ठाय किञ्चित् कार्यं विदधाति, अथवा भक्तो भूत्वा स्वीयां हार्दिकीं भावनाशक्तिं स्वकीयहृदयनाथस्येष्टदेवस्य लोकं गमयित्वा स्वेष्टदेवचरणसरसीरुहेषु किञ्चिन्निवेदयति, यदि वा योगी भूत्वा चतुर्दशभुवनवृत्तान्तमवगन्तुमिच्छति, तदा तदीयं मानसिकं कार्यंक्षेत्रं चिदाकाश इत्यभिधीयते, इदमेव चित्ताकाश—चिदाकाशयोरहस्यमवगन्तव्यम्, महाकाशस्तु महा-

कालवदनादिरनन्तो विभुश्च । एतदाकाशत्रयरहस्यमनवधार्यान्यमतावलम्बिनां केषांचन मनस्सु भ्रमपूर्णा धारणोत्पद्यते । तेऽभिदधते यत् स्थूलं शरीरमिव सूक्ष्ममपि शरीरं नाशशीलम्, मनुष्यो भूत्वा जीवो न पुनरुद्भिज्जाण्डजादियोनिं प्राप्नोतीत्यादि । एतादृशभ्रमनिवारणाय चित्ताकाशचिदाकाशरहस्यमवश्यमेव विज्ञातव्यम् । एकस्य मनुष्यस्य देहो यावत्तिष्ठति तावत् खलु तदीयश्चित्ताकाशोऽपि तिष्ठत्येव, एकस्य ब्रह्माण्डस्य यावत् स्थितिस्तावच्चित्ताकाशस्यापि सत्ता तिष्ठति । ब्रह्माण्डे प्रलयं गते केवलं महाकाश एवावशिष्यते । महाकालस्वरूपशिववत् महाकालस्वरूपिणी शिवाऽपि सर्वानेव स्वाङ्गविलीनान् विदधाति । मानवशरीरविनाशो मृत्युरभिधीयते । ततश्च जात्यायुर्भोगफलोत्पत्तिसमाप्तौ अपरजात्यायुर्भोगसमुत्पत्तिसमये समागते जीर्णवस्त्रमिव देही नैजं देहं परित्यजति । तदानीं नूतना जात्यायुर्भोगोत्पादनोपयोगिनः संस्काराः पुनश्चिदाकाशतश्चित्ताकाशे समाकृष्यन्ते । यथा किल तैलं कस्यचन जलाशयस्याभ्यन्तरे स्थापितं जलाशयस्योपरि समागच्छति, तथैव चिदाकाशतो नवीनाः संस्काराश्चित्ताकाशमधिवृत्य नूतनान् जात्यायुर्भोगान् प्रापयितुं नवीनं मानवं वा सहजं वा दैवं वा पिण्डं प्रापयन्ति । नवीनैराकृष्टसंस्कारैः सूक्ष्मशरीरे ईषत्परिवर्त्तने सत्यपि स्थूलशरीरवन्न तस्य विनाशो जायते । सुतरां केषाञ्चिन स्थूलशरीरविनाशविचारः प्रमादमूलक एव न सत्यः । अन्यच्च जात्यायुर्भोगोपयोगी नूतनः संस्कारसमूहो यदा चिदाकाशतश्चित्ताकाशे समाकृष्टो जायते, तदाकर्षणमपि जीवस्य कस्यचिदेकस्य प्रबलसंस्कारस्याधीनो भवति, चिदाकाशे च सर्वविधा अपि संस्कारास्तिष्ठन्ति तदा पूर्णवयः प्रबलसंस्कारोत्पादनदक्षो मानवो महात्मा भरत इव एकस्य जन्मनः कृते मृगपिण्डमपि धारयितुमर्हतीत्यत्र नास्ति सन्देहलवोऽपि । अवनतिरियं क्षणिका न स्थायिनी ।

एतत्सूत्रोक्तविचारतात्पर्यमिदमेव यत् पुण्यपापफलप्रदशुभाशुभ-कर्माणि नूतनं चित्ताकाशं पुनः पुनरुत्पादयन्ति ॥१६३॥

अन्यच्चापि—

**प्रकृतिप्रवृत्तिशक्तिसंस्काराणाञ्च ॥१६४॥**

पूर्वोक्तं द्विविधं कर्म प्रकृति-प्रवृत्तिशक्तिसंस्काराणाञ्च कारण-त्तामभ्युपैति। जन्मान्तरकाले बहुकालव्यापिनः संस्कारराशेः केचन कर्मबीजस्वरूपाः संस्काराः कर्मशृङ्खलानियममनुसृत्य जीवस्य चित्ताकाशमाश्रयन्ति। त एव प्रारब्धकर्मनाम्ना प्रोच्यन्ते। तान्येव कर्माण्यनुसृत्य जीवानां जात्यायुर्भोगाः समुत्पद्यन्ते इत्येतन्निर्णीत-पूर्वम्, एतद्व्यतिरिक्तमपि जीवप्रकृति-प्रवृत्ति-शक्ति-संस्काराश्च प्राप्यन्ते। अत एव प्रत्येकस्यापि जीवस्य ते भिन्ना भवन्ति। एकयोरेव पित्रोः समुत्पन्नसन्तानेषु प्रकृति-प्रवृत्तिशक्तिसंस्काराः परस्परं विभिन्नत्वं वैचित्र्यं चावहन्ति। प्रकृतिशब्देनात्र स्वभावो ग्राह्यो न मूलप्रकृतिः। संस्कारोऽप्यत्र न कर्मजनकः, प्रत्युत स्थितिसमुत्पन्नो विज्ञेयः। एवं किल मानवो जात्यायुर्भोग-प्रकृतिप्रवृत्तिशक्तिसंस्कारैः सह जन्म गृह्णन् तदनुकूलफलभोक्ता जायते ॥१६४॥

प्रसङ्गतस्तदभावं व्यनक्ति—

**नान्ये तदभावात् ॥१६५॥**

तस्य स्वातन्त्र्यस्य अभावात् राहित्यात् अन्ये उद्भिज्जादयो मनुष्यनिम्नयोनयो नैवं भवन्ति। अर्थात् स्वातन्त्र्यराहित्यहेतुना मनुष्येतरयोनिषु प्रकृतिप्रवृत्यादीनां जन्मना सह सम्बन्धो नास्ती-त्यर्थः, मानवतोऽधोगासु योनिषु पारतन्त्र्यात् पूर्णताऽभावात् शक्तेरभाव इति पूर्वमेव विवेचितम्। मनुष्यादधःस्थिता योन-योऽपूर्णावयवा अतो नैवासु शक्तेः सम्पूर्णता। अतो न वा

पूर्णशक्तिविशिष्टमनुष्याधिकारं प्राप्तुं शक्नुवन्ति। यत्र पदार्धिकारस्तत्र तस्योत्तरदायित्वमपि दीयत एव। यत्र पदाधिकारो नास्ति, तत्र प्रतिभाव्यस्याप्यभावः। पूर्णावयवसम्पन्नमानवदेवादिषु धर्मेण समुन्नतिरधर्मेणावनतिः, पुण्येन सुखस्य पापेन च दुःखस्य प्राप्तिर्दृश्यते। परमुद्भिज्जादिचतुर्विधभूतसंघेषु पराधीनतयाऽसम्पूर्णतया च पुण्यपापसम्बन्धदायित्वं नास्ति। कर्मानुष्ठाने स्वातन्त्र्याभावात् उद्भिज्जादयो न स्वकर्मणामुत्तरदायिनः। अत्र शङ्कते—ननु चतुर्विधभूतसंघेषु चित्ताकाशसम्बन्धो वर्त्तते न वा, वर्त्तते चेत्तर्हि सदसत्संस्कारसंग्रहः कथं न? न वर्त्तते तदा कथं तेषां जीवत्वसिद्धिः? कथं वा योगिनस्तेषु स्वीयामिच्छाशक्तिं परिचालयन्ति? महात्मनां सन्निधाने पशूनां वैरत्यागः कथं वा सिध्येत्? समाधत्ते—चतुर्विधभूतसंघेषु विद्यते किल चित्ताकाशस्य सत्ता। जातायां चिज्जडग्रन्थौ व्यापकस्याकाशस्य विच्छिन्नताऽवश्यम्भाविनी। विच्छिन्नतायां सत्यां चित्ताकाशस्य प्राकट्यम्। किन्तूद्भिज्जादयो जीवा अपूर्णाः अतएव तेषु चित्ताकाशशक्तेरपूर्णता तिष्ठति। अतएव ते स्मृत्यादीनां क्षणिकसंस्कारं धारयन्ति। पुण्यपापसंग्रहकारिणां भविष्यति काले चादृष्टफलोत्पादकसंस्काराणां संग्रहे तेषामसामर्थ्यम्। ते हि केवलं सहजकर्मणां स्वाभाविकसंस्काराणां चाधीनत्वं भजन्तः क्रमाभ्युदयं प्राप्नुवन्ति। अतस्तदीयं शरीरं सहजपिण्डमित्युच्यते ॥१६५॥

प्रसङ्गतः कोषा वर्ण्यन्ते—

## कोषाः पञ्च ॥१६६॥

कोषाः पञ्च भवन्ति। एतेषामवलम्बनेनैवानुतिष्ठन्ति जीवाः कर्माणि। एतैरेव जीवानां जीवत्वम्। एतेषां पूर्णतयैव जीवानामपि पूर्णता। अतस्ते पञ्च कोषा विविच्यन्ते। तथाहि स्मृतिशास्त्रे—

एतदेवास्ति वेदेषु वर्णितं च क्वचित्क्वचित् ।
पञ्च कोषाभिधानेन देवाः ! आवरणं ननु ॥
पञ्चभ्यः स्थूलभूतेभ्यः कोषो ह्यन्नमयो भवेत् ।
कोषादन्नमयादेव स्थूलमुत्पद्यते वपुः ॥
केवलोन्नमयः कोषः पतेन्मृत्युक्षणे सुराः ।
कोषस्यान्नमयस्यैव निरीक्ष्य परिवर्त्तनम् ॥
आख्यातं जीववर्गस्य मृत्युमाहुर्विनाशकम् ।
मिलिताः पञ्च प्राणा मे सूक्ष्मशक्तिस्वरूपिणः ॥
पञ्च कर्मेन्द्रियैः सार्द्धं कोषः प्राणमयो भवेत् ।
असावेव सुपर्वाणः ! कोषः प्राणमयो महान् ॥
युष्माकं खलु लोकस्य सम्बन्धं पितृलोकतः ।
अवस्थापयते नूनं द्वयोर्हि स्थूलसूक्ष्मयोः ॥
मिलित्वा मनसा सार्द्धं पञ्चज्ञानेन्द्रियाण्यहो ।
नाम्ना मनोमयं कोषं जनयन्तेतरां सुराः ॥
स्याद् विज्ञानमयः कोषो बुद्धिज्ञनेन्द्रियैः समम् ।
देवाः ! मनोमयः कोषः कोषः प्राणमयस्तथा ॥
विज्ञानमयकोषोऽपि सम्भूयैतत्त्रयं सह ।
शरीरं प्राणिनां सूक्ष्मं समुत्पादयते तराम् ॥
शरीरं सूक्ष्ममेवाहो दशामेत्यातिवाहिकीम् ।
भविलोकान्तरं सर्वं शक्नुयाद् भ्रमितुं सुराः ॥
कारणाख्यवपुर्भूताऽविद्यायां नन्वस्थितः ।
प्रियमोदप्रमोदैर्हि भावैरेभिः समन्वितः ॥
आत्मस्वरूपावरको देवाः ! मलिनसत्त्वकः ।
नाम्नाऽऽनन्दमयः कोषः कथ्यते वेदपारगैः ॥इति १६६॥

चतुर्विधभूतसंघपारस्परिक सम्बन्धप्रदर्शनार्थमुच्यते—

उद्भिद्यन्नमयविकाशः ॥१६७॥

उद्भिदि गुल्मलतावृक्षादौ अन्नमयस्य कोषस्य विकाशो भवति । उद्भिज्जजीवेष्वपि विद्यन्ते पञ्चकोषाः, यतः पञ्चकोषासद्भावे न सिध्यति जीवत्वं जीवस्य। किन्तु तेषु केवलमन्नमयस्य कोषस्यैव सम्यग् विकाशो जायते। अन्ये कोषा गौणरूपेण तेषु तिष्ठन्ति ॥१६७॥

तदेवं सिद्धान्तयति—

तत्पिण्डखण्डान् नवपिण्डोत्पत्तिः ॥१६८॥

तत्पिण्डखण्डत नवपिण्डस्योत्पत्तिर्जायते। अतएव उद्भिज्जपिण्डस्य छिन्ना शाखा अन्यत्र विरोपितुं शक्यते। तेन च नववृक्षस्य प्रादुर्भावो भवति ॥१६८॥

एवं च—

अन्नप्राणमययोः स्वेदजे ॥१६९॥

स्वेदजश्रेणीषु जीवेषु प्रधानरूपेण अन्नमयप्राणमययोः कोषयोः विकासो वेदितव्यः। अन्ये कोषास्तत्र गौणरूपेण तिष्ठन्ति ॥१६९॥

तदीयशक्तिं वर्णयति—

उद्भिज्जननार्हत्वमप्यस्यातः ॥१७०॥

अतःकारणात् स्वेदजस्य उद्भिज्जननार्हत्वमपि दृश्यते। स्वेदजजीवेषु अन्नमयप्राणमयकोषविकासकारणात कुत्र कुत्रचिदेवमपि दृश्यते यत् स्वेदजाङ्गेषु उद्भिज्जत्वलक्षणमपि विद्यमानं दृश्यते। कश्चित् स्वेदजो जीवः एवमपि दृश्यते यत् तदीयमर्धाङ्गे स्वेदजमुद्भिज्जं च। वस्तुतः एतादृशस्वेदजे द्वौ जीवौ विद्यमानौ

भवतः। उद्भिज्जेऽपि उद्भिज्जप्रादुर्भावः। यथा परगाचानामको वृक्षः। एवं विज्ञातव्यम्—यत् परगाछानामकोऽपि एकः स्वतन्त्र उद्भिज्जो जीवः। तस्य बीजानि पक्षिभ्रमरादिद्वारा आनीय दुर्बल-वृक्षकोटरादिषु स्थापितानि अङ्कुरोत्पत्तिं जनयन्ति, तदङ्कुराः परिवर्धन्ते च। वस्तुतः परगाछावृक्षः तद्वृक्षतो नोत्पद्यते। स्वेदजेऽपि द्वयो र्जीवयोर्लक्षणं दृश्यते। तौ द्वौ जीवौ स्वतन्त्रौ भवतः। विषयोऽयं योगिजनवेद्यः। कुत्रचन यन्त्रसाहाय्येनापि द्रष्टुं शक्यते ॥१७०॥

अण्डजे कस्य कोषस्य विकास इति निरूप्यते—

**अण्डजेऽन्नप्राणमनोमयानाम् ॥१७१॥**

अण्डजजीवेषु अन्नमयप्राणमयमनोमयानां त्रयाणाम् कोषाणाम् विशेषरूपेण विकासो जायते। शिष्टौ द्वौ कोषौ गौणरूपेण तिष्ठतः ॥१७१॥

एतस्य विशेषत्वमुपवर्ण्यते—

**तस्मात्ततः स्वेदजोद्भिज्जजीवा अपि ॥१७२॥**

तस्मात् कारणात् ततः अण्डजात् स्वेदजोद्भिज्जजीवा अपि उत्पद्यन्ते। अण्डजश्रेणीजीवानां शरीरेषु कुत्रचित् उद्भिज्ज-स्वेदजयोर्जीवयोरपि उत्पत्तिर्दृश्यते। यदा उत्तरोत्तरम् उन्नतिशीलाः त्रयः कोषा यत्र देहे पूर्णताम् प्राप्नुवन्ति तत्र निम्नस्य कोषद्वयस्य विकासशालिनो जीवाः अपि समुत्पद्यन्ते, युक्तिसंगतं चैतत्। अत्र शङ्कते, स्वेदजजीवाः प्रायः दर्शनेन्द्रियगोचरतां नापद्यन्ते, परन्तु उद्भिज्जजीवाः प्रत्यक्षतो दृश्यन्ते। ते लघुकाये अण्डजजीवे कथमुत्पन्ना भवितुमर्हन्तीति? समाधत्ते—उद्भिज्जजीवा बहवो यथायथं दृष्टिगोचरतां न प्राप्नुवन्ति। यत्र कश्चिदुत्पद्यते, तत्र पूर्वं न किंचि-

दपि दृश्यते किन्तु निम्नश्रेणिरुद्भिज्जः प्राकट्यमासादयति। किञ्चिद्दिनानन्तरं स प्रत्यक्षतो दृश्यते। एतादृशा निम्नश्रेणयोऽनेके उद्भिज्जजीवा अतिसूक्ष्मा भवन्ति। ते अन्यजीवशरीरेष्वपि समुत्पत्तुं शक्नुवन्ति। अतः किल अण्डजशरीरे उद्भिज्जस्वेदज-जीवयोः समुत्पत्ति र्न भवितुमर्हतीति युक्तिविरुद्धा ॥१७२॥

जरायुजशरीरे केषाम् कोषाणां विकास इति निर्णीयते—

**जरायुजेऽन्नप्राणमनोविज्ञानमयानाम् ॥१७३॥**

जरायुजश्रेणीजीवेषु अन्नमय-प्राणमय-मनोमय-विज्ञानमय-कोषाणां पूर्णविकासो जायते। परन्तु आनन्दमयकोषो गौणरूपेण तिष्ठति ॥१७३॥

तद्वैशिष्ट्यं निदर्शयति—

**अतस्ततोऽण्डजस्वेदजोद्भिज्जाश्च ॥१७४॥**

अतो हेतोर्जरायुजजीवात् अण्डजस्वेदजोद्भिज्जजीवानाम् उत्पत्तिर्दृश्यते। अन्यतमस्य समुन्नतकोषस्य विकासेन हेतुना जरायुजश्रेणीजीवशरीरे उद्भिज्जस्वेदजाऽण्डजानां त्रयाणामपि जीवानाम् आश्रयो न विज्ञानविरुद्धः ॥१७४॥

सम्प्रति मनुष्यशरीरमुद्दिश्य व्याख्याति—

**सर्वप्राणिप्रसवो मानवः पूर्णत्वात् ॥१७५॥**

मानवशरीरं सर्वतः परिपूर्णम्, अतः तस्मात् सर्वप्राणिसमुत्पत्तिः। मानवपिण्डं सर्वशरीरश्रेष्ठत्वात् परिपूर्णं सामाम्नातम्। अतस्तद्वैशिष्ट्यकारणात इदं वक्तुं शक्यते यत् मनुष्यशरीरे अन्ये सर्वे निम्नश्रेणयो जीवाः आश्रयमधिकर्तुं शक्नुवन्ति। मानवशरीरे दद्रुप्रभृतिरोगरूपेण उद्भिज्जजीवानाम्, चर्मणि रक्ते च

वहुविधरोगकीटाणुस्वरूपस्वेदजजीवानाम , बहिर्लोमकूपेषु अभ्यान्तरिकविष्ठादिषु अण्डजजीवानाम् सृष्टिर्जायते । जरायुजसर्गस्य पूर्णापूर्णसर्वविधसृष्टीनां मानवपिण्डं आकर एव । दूषितेन मनसा मानवपिण्डाश्रयेण मलिनमलिना समुन्नतेन मनसा समुन्नता सृष्टिर्मानवपिण्ड एव सम्भवा । मानवपिण्डं पञ्चभिः कोषैः पूर्णावयवम् । अतो ज्ञानानन्दपरिपूर्णतापि मानवपिण्ड एव सम्भवति । स्वकीयायाः असद्धारणायाः पूर्णतया मानवः पशुर्भवितुं शक्नोति । सद्धारणायाः परिपूर्णतया देवोऽपि भवितुमर्हति । एतदेव मनुष्यपरिपूर्णतावैचित्र्यम् ॥१७५॥

पञ्चकोषपरिपूर्णमानवशरीरस्य विशेषान्तरं निर्दिशति—

**पिण्डेश्वरोऽसौ ॥१७६॥**

असौ मानवो जीवः पिण्डस्य ईश्वरो भवति । उद्भिज्जादिसहजपिण्डजीवो न कदापि पिण्डेश्वरः, असम्पूर्णत्वात् । तेषु यथाक्रमम् एकैककोषाधिकविकासो जायते, तच्च पूर्वोक्तमेव । वस्तुतः तेषु पञ्चकोषाः विराजन्ते, यतः सर्वेष्वपि जीवेषु सर्वकोषाणां सर्वेन्द्रियाणां च लक्षणानि विद्यन्ते । परन्तु पूर्वोक्त विज्ञानमनुसृत्य यथाक्रमं कोषाणाम् असम्पूर्णता अवश्यं तिष्ठति, अतस्ते असम्पूर्णपिण्डाधिकारित्वात् स्वपिण्डाधीश्वरा न भवितुमर्हन्ति । सर्वप्रकारपरिपूर्णत्वात मानवो जीवः स्वपिण्डस्याधीश्वरो नूनं भवति । विशेषतो मानवो देवत्वमधिगच्छति मोक्षाधिकारी च जायते । अतो मनुष्यः स्वपिण्डेश्वर इत्यत्र नास्ति सन्देहावसरः ॥१७६॥

अन्यदपि माहात्म्यं तस्य निर्दिशति—

**अत ऐशीविकाशार्हत्वमस्य ॥१७७॥**

अतः कारणात् तत्र ऐशीनां शक्तिनां विकासः । मानवपिण्डस्य

वैशिष्ट्यमुपवर्ण्य आधिभौतिकविशेषतारूपपिण्डेश्वरत्ववर्णनानन्तरम् आधिदैविकविशेषता निरूप्यते। मनुष्यशरीरे तपोयोगबलेन विविधानाम् दैवीनाम् ऐशीनां शक्तीनां विकासो जायते। परकायाप्रवेश—दूरश्रवण—दूरदर्शनप्रभृतयो दैवशक्तयः अणिमलघिमादय ऐशविभूतयोऽपि तत्र विकसन्ति। वस्तुतस्तु अध्यात्माधिदैवाधिभूतसहजाख्यानां चतुर्विधश्रेणीसिद्धीनां विकासस्थलं मनुष्यशरीरमेव इत्यत्र नास्ति सन्देहः। एतदेव तद्वैशिष्ट्यम्। भगवान् पतञ्जलिरप्याहः—"जन्मसंस्कारमन्त्रौषधिसमाधिजाः सिद्धयः" इति ॥१७७॥

अन्यदप्युच्यते—

## निःश्रेयसाधिगमश्च ॥१७८॥

अतः कारणात् मनुष्येण निःश्रेयसः अधिगम्यते। आध्यात्मिकी विशेषता प्रतिपाद्यते। मानवपिण्डे एव निःश्रेयसः प्राप्यते। मृत्युलोकः कर्मभूमिः स एव चतुर्दशभुवनानां केन्द्रमपि। मृत्युलोके एव मनुष्यत्वप्राप्तेरनन्तरं जीवो देवत्वमासाद्य ऐशकर्मसहायतया- क्रमशः त्रिमूर्तिपदं प्राप्य ब्रह्मीभवति, अथवा जैवकर्मसाहाय्येन शुक्लगतिद्वारा सूर्यमण्डलं भेदयन् विमुच्यते। सहजगत्या तु मानवशरीरे एव जीवो मुक्तिमासादयति, मानवपिण्डस्य एतत् विशिष्टं माहात्म्यम् ॥१७८॥

प्रकारान्तरेण महत्त्वं निर्दिशति—

## लौकिक्यलौकिकी च शक्तिः ॥१७९॥

मानवशरीरे लौकिक्यलौकिकीति द्विधा शक्तिः समुत्पद्यते। मानवपिण्डस्य वैलक्षण्यमिदं यत् तत्र लौकिकी अलौकिकी चेति द्विविधा शक्तिर्विकसति। देवानाम् अधिकारो मनुष्यतः श्रेष्ठः, किन्तु

ते यदि लौकिकं कर्म कर्त्तुं वाञ्छेयुः तर्हि तैः अत्रत्यं लौकिकं केन्द्रं नूनमवलम्बनीयम्। उदाहृत्यानया इदमभ्युपगन्तव्यं यत् कस्यचित् व्यक्तिविशेषस्य वधावसरे मेघस्थितवज्रद्वारा सर्पादि जीवप्रेरणया च ते वध-कार्यमनुष्ठातुं प्रभवः। एवं हि कस्यचित् कल्याणसम्पादनावसरे अन्येषाम् अन्तःकरणे तदीयान्तःकरणे वा प्रेरणया तत्कल्याणं कर्त्तुं शक्यम्। देवाः प्रकारान्तरेण मनुष्य-दर्शनेन्द्रियगोचरस्थूलशरीराणि धारयन्तोऽपि स्थूलशरीरसाध्यं सर्वं लौकिकं कार्यं न यथावत् कर्तुम् पारयन्ति। किन्तु मनुष्ये द्विविधा योग्यता विद्यते। योगशक्तिद्वारा मानवो मारण-मोहन-वशीकरणोच्चाटनादिकार्यं तथा च लौकिकरूपेण अन्यदपि कार्यजातं कर्त्तुं शक्नोति। संयमद्वारा दैवकार्यं, लौकिकपुरुषार्थद्वारा लौकिकं विधेयमपि विधातुं शक्नोति ॥१७६॥

अन्यच्चाभिधत्ते—

## लौकिकमलौकिकञ्च प्रत्यक्षम् ॥१८०॥

मानवे लौकिकम् अलौकिकं च प्रत्यक्षम्। मनुष्येभ्यो निम्न-योनिषु लौकिकप्रत्यक्षोपयोगिदर्शनेन्द्रियाणि। मनुष्योपरिस्थ-देवादियोनिषु अलौकिकदिव्यप्रत्यक्षसाधनानि। किन्तु सर्व-पिण्ड-मध्यवर्त्तित्वात् अधिकारस्वातंत्र्ये विचारदृष्टेः सर्वाधिकत्वात् मनुष्येषु लौकिकालौकिकोभयप्रत्यक्षशक्तिविद्यते। मनुष्यः साधारणतया स्वीयनेत्रगोलकसाहाय्येन अथवा अण्वीक्षण-दूरवी-क्षणादियन्त्रसहायतया बहूनाम् अपि स्थूलपदार्थानां प्रत्यक्षीकरणे समर्थः, स्वीययोगशक्त्या नैजं तृतीयं ज्ञाननेत्रम् उद्घाट्य अलौकिकं प्रत्यक्षं एतावद् वर्धयति यत् सर्वातीतस्य भगवतोऽपि दर्शनं कर्त्तुं समर्थः। अलौकिकप्रत्यक्षयुक्तयो योगदर्शने सांख्यदर्शने च समीचीनरीत्या पूर्वाचार्यैः सुनिरूपिताः ॥१८०॥

प्रसंगतो योनिषु आश्रयस्थलनिर्णयं करोति—

उद्भिज्जमर्त्यौ जीवाश्रयौ ॥१८१॥

सर्वप्रकारयोनीनाम् आश्रयसम्बन्धविचारे क्रियमाणे इदमेव निश्चितं, यत् उद्भिज्जमनुष्ययोनी सर्वविधयोनीनाम् आश्रयस्थलरूपे। उद्भिज्जयोनीनाम् आश्रयेण मनुष्यलोकस्य अन्याः सर्वाः योनयो जीवनं धारयन्ति। उद्भिज्जानाम् आत्मसमर्पणेन ये मृगा जीवन्ति तेषाम् एव नाशेन व्याघ्रप्राणरक्षा मनुष्यपर्यन्ताः प्राणिनो मनुष्यलोके स्थायिनः। मृत्युलोकः उद्भिज्जानाम् सहायतया स्थितिशीलः। मनुष्याणां साहाय्येन चतुर्दशभुवनानि सुरक्षितानि। मनुष्यस्यासद्भावे मृत्युलोकसुव्यवस्था न स्यात्। मनुष्यलोकाभावे प्रेतनरकादिलोकानाम् आवश्यकत्वं न भवेत्, उच्चदेवलोकानां सम्वर्धनमपि न जायेत। यतः यज्ञद्वारा देवाः संवर्ध्यन्ते मानवाभावे देवास्तित्वसंरक्षणमप्यसम्भवम्। यतो मानवा एव कालान्तरे देवत्वमासादयन्ति ॥ ८१॥

तदीयो हेतुरुच्यते—

अवधिद्वैविध्यात् ॥१८२॥

जीवप्रवाहस्य द्वे परिधी एका उद्भिज्जसम्बन्धिनी, द्वितीया मनुष्यसंबद्धा। उद्भिज्जतः प्रवहमानः प्रवाहः जीवनमुक्ते विलीयते। मुक्तेः सर्वविधा अपि अवस्थाः मनुष्ययोनिसापेक्षाः। अन्यच्च चिज्जड़ग्रन्थि प्रथमदशा जीवावस्थारम्भ इति यावत् उद्भिज्जयोनितः सम्बन्धं रक्षति। अतः उद्भिज्जो मानवश्च योनिद्वयमिदं जीवप्रवाहस्य परिधिद्वयमित्यत्र नास्ति सन्देहः ॥१८२॥

शङ्कां समाधत्ते—

जीवत्वजनिरुद्भिदः ॥१८३॥

उद्भिदः उद्भिज्जीवा जीवभावस्य उत्पत्तिस्थानम्। अत्र जिज्ञासुः शङ्कते यत् जीवत्वप्रारम्भिकी परिधिः किन्तु उद्भिज्ज-भिन्ना भवितुं नार्हति ? ह्रसन्ता वर्धमानाश्च अनेके पदार्थाः कथं न परिधिभूताः ? इत्यादि शङ्कासमाधानार्थमेव पूज्यपादो महर्षिः सूत्रकारः सूत्रमिदम् आविरभावयत्। सूत्रेणैतेन इदं निर्णीतं यत् उद्भिज्जत एव जीवत्वप्रारम्भः। यतोहि पञ्चकोषाणां ज्ञानेन्द्रियाणां च विकासलक्षणमुद्भिज्जपिण्डे एव प्रकटो भवति। स्मृति-शास्त्रेऽपि निर्णीतम्—

उष्णतो म्लायते वर्णं त्वक् फलं पुष्पमेव च।
म्लायते शीर्यते चाऽपि स्पर्शस्तेनाऽत्र विद्यते॥

वाय्वग्न्यशनिनिर्घोषैः फलं पुष्पं विशीर्यते।
श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः॥

वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति।
न ह्यदृष्टेश्च मार्गोऽस्ति तस्मात्पश्यन्ति पादपाः॥

पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि।
अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः॥

पादैः सलिलपानाच्च व्याधीनाञ्चापि दर्शनात्।
व्याधिप्रतिक्रियात्वाच्च विद्यते रसनं द्रुमे॥

वक्त्रेणोत्पलनालेन यथोर्द्ध्वं जलमाददेत्।
तथा पवनसंयुक्तः पादैः पिबति पादपः॥

सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च विरोहणात्।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते॥

विज्ञानमिदं पुनः परिपोषयति—

**परिणामतस्स्वपि न प्रस्तरादिषु॥१८४॥**

प्रस्तरादिषु परिणामत्स्वपि तेषु जीवत्वं नास्ति। अत्र शङ्कते—प्रस्तरादिपदार्थान् वर्धमानान् विलोक्य कथं न तत्र जीवत्वस्वीकारः? समाधत्ते—कुत्रचन वालुकाभिर्मृत्तिकाभिः, आग्नेयपर्वतप्रश्रवणान्निर्गलितपदार्थेभ्यः प्रस्तराणि समुद्भवन्ति, तानि च परिवर्धमानानि विलोक्यन्ते। सुवर्णरौप्यहीरकमाणिक्यरत्नादयो हरिताल प्रभृत्युपधातवश्च नूनं परिवर्धन्ते। किन्तु सर्वेषां तादृशपदार्थानां निर्माणं परिवर्धनं च न जीवपिण्डसमानम्। तेषु परिणामेनैव बृद्धिर्जायते। वैद्युतिकशक्तेः तादृशप्राकृतिकस्थूलशक्तिविशेषतरंगाणां प्रभावात् तत्तत्पदार्थनिकट-परमाणु पंचतत्त्व सहायतया तेषु तेषु पदार्थेषु परमाणवो बृद्धिमुपयान्ति, तेन कारणेन ते ते पदार्थाः क्रमशः परिवर्धन्ते। मानवसहजादिपिण्डेषु प्राणमयकोषसाहाय्येन अन्नस्य च सहायतया यथा अन्नमयः कोषो वर्धते न तथा तेषु पदार्थेषु। पूर्वोक्तरूपेण यादृशज्ञानेन्द्रियलक्षणानि उद्भिज्जेषु दृश्यन्ते न तथा प्रस्तरादिपदार्थेषु। अतः कारणात् प्रस्तरादिषु जीवत्वशंका युक्तिविज्ञानविरुद्धा प्रस्तरादिपदार्थेषु समष्टिरूपेण अधिदैवसद्भावो नूनम्, नदीसमुद्रादिषु यथा अधिदैवरूपेण देवताविशेषः तथैव पर्वतप्रस्तररत्नधातुविशेषेषु पृथक्-पृथक् देवाः अधिदैवरूपेण विराजन्ते, प्रत्येक ब्रह्माण्डे तत् सामञ्जस्यसंरक्षणं विदधते च ॥१८४॥

अन्यच्च—

## तच्छक्तिमत्त्वमधिदैवसम्पर्कात् ॥१८५॥

अधिदैवसम्बन्धेन तेषां शक्तिमत्त्वम्। जीवत्वाभावे कथं तेषु असाधारणशक्तिविकास इति शंकासमाहितये निरूच्यते यत् जीवेषु पूर्वं प्रपञ्चितसिद्धान्तानुसारं असाधारणशक्तीनां विकासो नूनं, परन्तु धातुरत्नप्रभृतिजडभूतपदार्थसमूहेषु यः किल

असाधारणशक्तिविकासः, सच तत्तत्पदार्थरक्षकाधिदैव-साहाय्येनैव सम्पद्यते । उदाहरणरूपेण विज्ञेयं यत् जलाग्नि-पर्वतादीनां स्वाभाविका गुणाः स्वभावत एव समुत्पद्यन्ते परन्तु तेषां द्वारा यथासमयं असाधारणशक्तिविलासः । यथा वायुद्वारा महावातप्रकोपः, जलद्वारा च घोरजलप्लावनादि कार्यं तत्तत-पदार्थसम्बन्धयुक्ताधिदैवसमीहाशक्तितः सम्बध्नन्ति ॥ १८५ ॥

प्रसंगत उच्यते—

## चराचरे सप्तधातुनिमित्तम् ॥१८६॥

चराचरेषु सप्तधातवः स्थितेः कारणानि । प्रकृति-सहजात सप्त-विभागसम्भृताः सहज-कर्मसम्बन्धयुक्तसप्तधातवः स्थूलसर्गस्य स्थितेर्हेतुभूताः । स्थावरे सुवर्णलौहादयः जंगमे मांसरक्तादि-सप्तधातवः, सुवर्णादिसप्तधातवः सर्वव्यापकाः सन्ति । तेषामेव परस्परसम्मलनेन अनेके उपधातवो निर्मीयन्ते । सूक्ष्मदृष्ट्या सम्यक्तयेदं दृश्यते यत् पृथिव्याः सर्वत्र विभागे पृथिव्यन्तर्गत-जलेऽपि सुवर्णादिसप्तधातूनां सम्मेलनं निभाल्यते, त एव सप्तधातवः प्रकारान्तरेण स्थावरपदार्थानां स्थितिकारणत्वं भजन्ते । यावत्किल प्रस्तरादिषु तेषां सप्तधातूनां सम्बन्धः, तावत् प्रस्तरादीनाम् अस्तित्वमपि । यद्यपि पदार्थविद्याद्वारापि तत्प्रत्यक्षसिद्धिर्न स्यात, किन्तु सर्वेष्वपि स्थावरपदार्थेषु सप्तधातुविद्यमानता विज्ञानसिद्धा । तेषां सप्तधातूनां, क्षयेणैव प्रस्तरादीनां क्षयः समुत्पद्यते । तत् परमाणवश्च विकृष्टाः प्रणश्यन्ति । एवं हि मानवपिण्डादिषु रक्तमांसास्थि-प्रभृति-सप्तधातवः तत्पिण्डस्थितिकारणतां व्रजन्ति । आयुर्वेद-शास्त्रेण सर्वथा सिद्धमिदं यत् रक्तमांसादिसप्तधातूनां क्षये समुत्पन्ने मनुष्यशरीरं क्षीणतामापद्यते । सप्तधातुषु एकस्यापि क्षये जाते शरीरं प्रणश्यति । रक्तादि सप्तधातवः स्त्रीषु पुरुषेषु च समानाः सन्ति ।

स्त्रीषु केवलं वीर्यस्य विभागद्वयम् , अतएव आयुर्वेदाचार्या इदमामनन्ति यत् स्त्रीषु अष्टौ धातवः सन्तीति । वस्तुतः सृष्ट्युत्पादकं रजः कान्तिशक्तिवर्धकमिति सप्तमधातोर्विभागद्वयं स्त्रीशरीरे वेद्यम् ॥१८६॥

द्वितीयं फलमभिधत्ते—

**तेनोभयत्र परिणतिः ॥१८७॥**

तेन हेतुना उभयत्र परिणामः । सप्तधातुतो द्वितीयं किं फलमिति सहजकर्मगतिनिदर्शनार्थमुच्यते । स्थावरे जंगमे वेत्युभयत्र परिणतिः सप्तधातूनामेव कार्यम् ॥१८७॥

तदुदाह्रियते—

**स्थावरे प्रस्तरादिकं जंगमे जरादिकम् ॥१८८॥**

स्थावरे प्रस्तरादीनाम् जंगमे च जरादीनाम् परिणामः सप्तधातुजनित एव । यदा किल वालुकाभिः मृत्तिकाभिर्वा प्रस्तराणि कंकरादयः अन्ये खनिजपदार्था वा जायन्ते तदा तादृशाः सर्वेऽपि परिणामाः पूर्वकथित सप्तधातूनां परिणामत एव सम्भवन्ति । अन्यच्च जंगमपिण्डेषु वृद्धत्व-स्थूलत्व-कृशत्वादयः परिणामाः पूर्वोक्तसप्तधातुपरिवर्तनसमुद्भूताः ॥१८८॥

तत्प्रधानहेतुरभिधीयते—

**त्रैगुण्यात् ॥१८९॥**

प्रकृतित्रैगुण्यकारणादेव स्थावरजंगमेषु सप्तधातुद्वारा परिणामाः सम्भवन्ति । सप्तधातूनां स्थावरजंगमेषु परिणामस्य किं मौलिकं कारणम् ? सप्तधातूनां स्थितिकारणतायां सिद्धायां तद्द्वारा स्वतः परिणतिः कथं न ? एतादृशशंकासमाधानाय पूज्यपादेन महर्षिणा सूत्रकारेण सूत्रमिदम् आविष्कृतम् । वस्तुतः सप्तधातुद्वारा स्थावरजंगमेषु समुत्पद्यमानपरिणामस्य मौलिकं

कारणं प्रकृतेस्त्रैगुण्यमेव । प्राकृतिकेषु स्वभावसिद्धा यदा एकस्या-नन्तरम् अपरस्य समुदयो जायेत तदा गुणपरिणाममनुसृत्य धातुष्वपि परिणतिर्जायते, तथा च स्थावरजंगमात्मकः परिणामः समुत्पद्यते ॥१८९॥

सम्प्रति स्थूलं कारणम् अभिधत्ते—

**शक्तिप्राधान्यतश्च ॥१९०॥**

त्रिगुणद्वारा परिणामगतिर्नूनं संसाध्यते । आपरमाणोर्ब्रह्माण्ड-पर्यन्तं सर्वत्रैव बोभूयमानस्य सृष्टिस्थितिलयानां परिणाम-क्रमस्य मौलिको हेतुः त्रयो गुणा एव, किन्तु पदार्थानां स्थूलदशायां परिणामस्य गतिद्वयं समाम्नातम् । एका वास्तविकावस्थासंरक्षिणी, द्वितीया च रूपान्तरमनुष्ठाय संरक्षिणी । विज्ञानमिदं, सुस्पष्ट-मवधारयितुम् अवगन्तव्यं यत् समुत्पद्यमानं मानवशरीरं रजो-गुणस्य, स्थितिशीलं सत्त्वगुणस्य नाशशीलं तमोगुणस्य च कार्यं वेद्यम् । पिण्डसृष्टिषु सर्वाविधक्रियाणाम् उपरि विचारे क्रिय-माणे नूनमेव तादृशाः परिणामा अवगन्तुं शक्यन्ते, किन्तु पिण्डस्य अस्तित्वदशायां शक्तिद्वयस्य प्राधान्यं अङ्गीकर्त्तव्यमेव । ते द्वे शक्ती रयिः प्राणश्च । श्रुतावप्युक्तम्—"तस्मै स होवाच प्रजा-कामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पा-दयते रयिं च प्राणं चेत्यतो मे बहुधा प्रजा करिष्यत इति । आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः । रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिश्च रयिः मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेत ऋषयः शुक्ल इष्टं कुर्वन्तीतर इतरस्मिन् । अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते ।"

यथा किल पूर्वमेव निर्णीतं, कार्यब्रह्मणः प्रत्येकस्मिन् अंगे त्रया-

णाम् अपि गुणानां स्वाधीनाः साधारणक्रियाः सम्भवन्ति। एकस्य ब्रह्माण्डस्य पिण्डस्य समुत्पत्तिः, तत् पूर्णावस्थायां स्थितिः, पुनः—तन्नाशश्चेति तिस्रः क्रियाः त्रिगुणानुसारं साधारणरूपतः सम्भवन्ति। किन्तु पिण्डस्यैकस्य ब्रह्माण्डस्य वा प्रारम्भदशा नाशावस्था च सृष्टि-वैभवप्रकाशानुपयोगिनी। तदर्थं केवलं पिण्डब्रह्माण्डयोर्मध्यावस्था—या पूर्णावस्था, सैवोपयोगिनी। तदीयपूर्णावस्थायां तदस्तित्वसंरक्षणाय यत् प्रतिक्षणव्यापि स्थितिमूलकं परिणामकार्यं, तत्र उभयोरेव रयिप्राणयोरुपयोगिता। प्रकारान्तरेण रयिः स्वभावतः परिणामिषु भूतेषु यथायोग्यं परिणामं समुत्पाद्य तद् रक्षां विदधाति। प्राणश्च तत्र जीवनिकाम् शक्ति समुत्पाद्य तद्रक्षणं विधत्ते। इमामेव द्विविधां प्रक्रियां अवलम्बमानाः भक्तिमार्गस्य आचार्या एवमभिदधते यत् सृष्टौ समुत्पन्नायां सत्यां भगवतो ब्रह्मणः कार्यं समाप्येत भगवतः शिवस्य विष्णोश्च कार्यं चिरस्थायि तिष्ठति। इमामेव वैज्ञानिकीं भित्तिमनुसृत्य भगवतो ब्रह्मणः पूजनं पुराणैर्नाधिकमुदीरितं केवलं तदीयशक्तिरूपिण्याः वेदमातुः समर्चा समधिकमुपवर्णिता। एको देवः केशवो वा शिवो वा इत्युक्त्वा विष्णुशिवयोः समधिकपूजनं प्रचारितम्। अतः रयिप्राणयोः रहस्यं सृष्टेरस्तित्वेन सह मौलिकरूपेण सम्बन्धितमित्यत्र न सन्देहः। रयिमवगन्तुम् अन्नस्य उदाहरणं समुचितम्। अन्नं किल स एव पदार्थः यस्य भक्षणेन मनुष्यो जीवति। वृक्षस्यापि अन्नं तदेव यदाहारतो वृक्षो जीवितः तिष्ठति। अन्नस्य उदरस्थितिः तस्य परिपाकः, तेन च सर्वधातूनां परिपोषणम् इति सर्वं परिणामजनकमपि रक्षामूलकम्। ब्रह्माण्डपिण्डयोरस्तित्वसंरक्षणहेतुः प्राणशक्तिरेव। प्राण एव जीवनशक्तिः। रयिप्राणयोः परस्परं क्रियासाहाय्यमपि। तत्साहाय्यं परिणामजनकमपि रक्षामूलकमवगन्तव्यम् ॥१६०॥

प्रसङ्गतो द्वन्द्वविज्ञानं विवृणुते—

**उद्भिदादयो नाशकाः पोषकाश्च ॥१६१॥**

उद्भिदादयो जीवस्य नाशकाः परिपोषकाश्च भवन्ति। द्वन्द्वक्रियाया स्वाभाविकता समीचीनरीत्या पूर्वमेव समुपवर्णिता। तमेव मौलिकं नियममनुसृत्य सर्वत्रैव द्वन्द्वशक्तेः विद्यमानतया उद्भिज्जादिषु अमृतस्य विषस्य चेति क्रियाद्वयं परिदृश्यते। विषवृक्षाः, आम्रादयः अमृतवृक्षाश्च उद्भिज्जेषु, रोगहराः रोगोत्पादकाश्च कीटाणवः स्वेदजेषु, मयूरसर्पादयः अण्डजेषु, गोव्याघ्रप्रभृतयो जरायुजेषु च। एभिरुदाहरणैः चतुर्विधभूतसंघेषु द्विविधशक्तिस्थायिताप्रमाणमुपलभ्यते। एष किल सृष्टेः स्वाभाविको नियमः ॥१६१॥

इदानीम् प्रकृतविषयं अभिदधाति—

**कर्मापि द्वन्द्वधर्मं द्विविधशक्तिमत्त्वात् ॥१६२॥**

द्विविधशक्तिमत्त्वात् हेतोः कर्मापि द्वन्द्वधर्मविशिष्टम्। इदं तु प्रतिपादितपूर्वं यत् प्रकृतिस्पन्दनेन समुत्पन्नं शक्तिविशेषं कर्म प्रोच्यते। यदि कर्मशक्तिविशेषं तर्हितत् उभयत्र प्रवाहशीलं भवेत्। प्रत्येकशक्तेः स्वभावोऽयं यत् सा उत्तरवाहिनी दक्षिणप्रवाहिनी उर्ध्वमधश्च प्रवहणशीला भवितुमर्हति। यदा कर्म सत्त्वगुणमाश्रयत् पुण्यमयं स्रोतो धारयति तदा तत् उर्ध्वगामि, यदा च तमोगुणमाश्रयत् पापस्रोतः प्रवाहयति तदा तत् अधोगामि प्रणिगद्यते। कर्मणो द्वन्द्वमिदं स्वभावसिद्धम् ॥१६२॥

द्वयोः किं सेवनीयमित्युच्यते—

**सेव्यं सुकृतमभ्युदयनिमित्तत्वात् ॥१६३॥**

अभ्युदयस्य कारणभूतत्वात् पुण्यं कर्म सेवनीयम्। यदि कर्मणः स्वाभाविकद्वन्द्वतया धर्माधर्मौ उभौ एव प्राकट्यमासादयतः,

तर्हि द्वावेव कथं न सेवनीयौ ? इति शंका-समाहितये सिद्धान्त-परिपोषणाय च एतत्सूत्राविर्भावः। नास्त्यत्र सन्देहो यत् प्राकृत-द्वन्द्वतया जीवस्य सर्वाण्यपि कर्माणि श्रेणीद्वयेन विभक्तुं शक्यते। ऊर्ध्वगामिकर्म धर्मः, अधोगामि च अधर्मः। शक्तिविचारतो उभय-मपि समानमेव। यतो धर्मः, प्रथमावस्थायाम् ऐहलौकिकमभ्युदयं द्वितीयावस्थायां पारलौकिकमभ्युदयं, तृतीयदशायां च अभ्युदयं सम्पादयन् उन्नतेः परां काष्ठां ब्रह्मपदं प्रापयति। अयं किल धर्मशक्तेः प्रबलतायाः संक्षिप्तो दृष्टान्तः। अन्यच्च अधर्मोऽपि धर्मतो नाल्प-शक्तिविशिष्टः। अधर्मोहि जीवं प्रेतत्वं नरकत्वं, स्थावरत्वमपि प्रापयितुं शक्नोति। अधर्मः अधोगामिनीं प्रवृत्तिं परिवर्धयन् जीवम् अतिनिम्नां गतिं प्रापयति। मानवानां का कथा यमलार्जुनवत् देवान् अपि स्थावरत्वं गमयति। अतः कारणात् शक्तिरूपतो उभयो-रपि धर्माधर्मयोः अधिकारे समानेऽपि धर्म एव सेवनीयो नाधर्मः। अधर्मो यदि उन्नतेः परिपन्थी धर्मश्च नियमितरूपेण समुन्नतिसम्पा-दकः, तर्हि धर्म एव सेवनयोग्यो नाधर्म इति सिद्धम् ॥१६३॥

मनुष्ये तदधिकारो निर्णीयते—

## स्वातन्त्र्यादुभयप्रातिभाव्यं मानवस्य ॥१६४॥

स्वाधीनत्वात् हेतोर्मनुष्यस्य उभयोरेव प्रातिभाव्यम् उत्तर-दायित्वमित्यर्थः। मनुष्यतो निम्नश्रेण्यो जीवाः कथमिव प्रकृति-सम्बन्धतः पराधीना इति पूर्वमेव सम्यक् विवेचितम्। सुतरां परा-धीनतया न तेषु धर्माधर्माधिकारः सम्भवः। अतः पराधीनाः न प्रतिभुवः। पराधीनतासम्पादकेष्वेव तेषाम् उत्तरदायित्वं स्वतः सिद्धम्। अतः स्वतन्त्रतारहितेभ्योऽन्यजीवेभ्यो धर्माधर्मशृङ्खला न भवितुं शक्नोति। फलतः पञ्चकोषपरिपूर्णतया पूर्णावयवः, अन्तःकरणपूर्णतया संस्कारसंग्रहसमर्थः, अतएव स्वाधीनो मानव एव

धर्माधर्मशृङ्खलारक्षणे समर्थः । अतो मानवस्य अधर्मेणावनतिः, धर्मेण च समुन्नतिर्निश्चप्रचा ॥१९४॥

मानवसुरक्षोपायमभिदधाति—

अनुशासनत्रयादवनम् ॥१९५॥

अनुशासनत्रयेण मानवस्य रक्षणम् । मानवयोनिम् आसादयन् जीवो धर्माधर्मशृङ्खलादायित्वं प्राप्नोति । तदानीम् अधर्मतो निवर्तनार्थं धर्मे च प्रवर्त्तनाय त्रिविधस्य अनुशासनस्य प्रयोजनीयता सम्पद्यते । राजानुशासनं, शब्दानुशासनं, योगानुशासनं, चेत्यनुशासनं त्रिविधम् । त्रिगुणभेदेन मनुष्या अपि त्रिविधा भवन्ति । तामसिकस्याधिकारिणः कृते राजानुशासनं कल्याणकरम् । समाजदण्ड-राजदण्डेति भेदेन राजानुशासनं द्विधा विभक्तम्, राजसिकस्याधिकारिणो हितसम्पादनाय शब्दानुशासनमुचितम् । शास्त्रोपदेशेन गुरूपदेशेन च शब्दानुशासनमपि द्विविधम् । सात्त्विकाधिकारिणो महापुरुषस्य कृते योगानुशासनं वेदसम्मतम् । एतस्यापि अपरोक्षानुभूतिपरोक्षानुभूतिभेदेन भेदकथनम् । विपरीतज्ञानवान् मानवो राजदण्ड-समाजदण्डभयेन विना न धर्मपथमारोढुं शक्नोति । तद्वदेव सन्देहात्मक-बुद्धिसम्पन्न-राजसिको जीवो गुरुशास्त्रसाहाय्यमन्तरा धर्माधर्मनिर्णयेन अभ्युदयाभिमुखं नाग्रेसरो भवति । सात्त्विकबुद्धिसम्पन्नो महापुरुषो वानप्रस्थाश्रमो वा, संन्यासी वा योगानुशासनसाहाय्येन आत्मानात्मसदसद्विचारपरायणो भवति । अतः अभ्युदयनिश्रेयःसाधनाय कस्याप्यनुशासनस्य नूनमावश्यकत्वम् । अनुशासनहीनस्य मानवस्य धर्ममार्गो निष्कण्टको न भवितुं शक्नोति ॥१९५॥

तत्कारणमाचष्टे—

बुद्धित्रैविध्यात् ॥१९६॥

मानवस्य बुद्धिः त्रिगुणमनुसृत्य त्रिविधा भवति। सत्याश्रय-युक्ता निश्चयात्मिका बुद्धिः सात्त्विकी, सन्देहात्मिका सा राजसिकी, विपरीतज्ञानोत्पादिका तामसिकी चोच्यते। त्रिविधबुद्धेरनुसारेण अधिकारस्य स्वभावसिद्धत्वात् अनुशासनमपि त्रिविधं स्वभाव-सिद्धमेव। श्रीगीतोपनिषदि त्रिविधबुद्धिलक्षणं भगवता श्रीकृष्णेन स्वयमुपवर्णितम्।

तथाहि—

प्रवृत्तिञ्च निवृत्तिञ्च कार्याकार्ये भयाभये।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी॥
यया धर्ममधर्मञ्च कार्यञ्चाकार्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी॥
अधर्मं धर्ममिति या मन्यते तमसावृता।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी॥१९६॥

प्रसंगतः क्रियानियामकं प्रतिपादयति—

**नैसर्गिकक्रियानियामकौ देशकालौ ॥१९७॥**

नैसर्गिक्याः क्रियाया नियामकौ देशकालौ भवतः। अनुशास-नाधीनकर्मानुष्ठानेन मनुष्यस्य निर्बाधक्रमोन्नतिरिति पूर्वमेव सिद्धान्तितम्। इदानीं देशकालविचारः कर्त्तुमावश्यकः। यतो देशकालौ कर्मनियामकौ। प्राकृतिकस्पन्दनतः कर्मसमुत्पत्तिरतः कर्म स्वाभाविकम्। एवं सत्यपि देशकालौ कर्मनियामकौ। प्राकृतिकं स्पन्दनं न्यूनाधिकरूपतो देशकालौ दधाति। यतः प्राकृतिकः परिणामो देशकालपरिच्छिन्नः। यद्यपि मूलप्रकृतेः स्वरूपं देशकाल-तोऽपि सूक्ष्मम्, किन्तु यदा किल प्रकृतिः वैषम्यावस्थां प्राप्ता परि-णामिनी तदा सा गुणवती सती देशकालद्वारा परिच्छिन्ना भवति।

एतादृशपरिच्छिन्नत्रिगुणमयप्रकृतिस्पन्दनं यदि कर्म, तदा तदपि देशकालपरिच्छिन्नमेव । अतः देशकालयोः कर्मनियामकत्वं स्वतः सिद्धम् । स्थूलरूपेणाऽपि उदाहरणेन विज्ञानमिदमवगन्तुं शक्यते यत् सर्वमपि कर्म सर्वयोर्देशकालयोः कदाप्युपयोगि भवितुं नार्हति । दिवानिद्राशीलो मानवोऽल्पायुर्भवति । रात्रिनिद्रात्यागी चापि । अतो रात्रौ निद्राप्राकृतिको नियमः । एवमेव देशोऽपि वेदितव्यः ॥१९७॥

एतेन किमित्युच्यते—

**तस्मादाद्यन्तवत्ता कर्मणः ॥१९८॥**

तस्मादेव कारणात् कर्मण आद्यन्तवत्ता । यदा हि कर्मणो नियामकौ देशकालौ कर्म च देशकालपरिच्छिन्नम्, तदा कर्मणः सादिसान्तता स्वतः सिद्धा । यदि देशकालपरिधेरन्तर्गतत्वं कर्मणः सिद्धम्, तदा तस्य सादिसान्तत्वं सिद्धमेव ॥१९८॥

प्रसंगतो देशकालविज्ञानमुपवर्ण्यते—

**देशकालौ प्रकृतिब्रह्मात्मकौ ॥१९९॥**

देशकालौ प्रकृतिब्रह्मणोः प्रतिकृतिरूपौ । ब्रह्मणि विलीना प्रकृतिः ब्रह्मतः पृथग् भवन्ती द्वैतभावं प्रकटयति, तदा सर्वप्रथमं देशकालौ प्रादुर्भवतः । कालो ब्रह्मस्वरूपः, देशः प्रकृतिरूपश्च । कालानुभवे चित्सत्ता प्राधान्यम् । इमावेव देशकालौ यावद्दृश्यप्रपञ्चमाच्छादयन्तौ नैजमनादित्वमनन्तत्वपरिदर्शयन्तौ यथाक्रमं ब्रह्मप्रकृत्योर्महत्त्वं घोषयतः । अतोहि कालो ब्रह्मात्मकः देशश्च प्रकृतिस्वरूपः इति स्वीकृतिर्न विज्ञानविरुद्धा ॥१९९॥

अन्यदपि—

**तयोरनाद्यनन्तत्वं विराड्वत् ॥२००॥**

अनन्तकोटि-ब्रह्माण्डमयकार्यब्रह्मरूपिणो भगवतो विराड्रूपमिव देशकालौ अनाद्यनन्तौ। पिण्डरूपाया अधिभूतसृष्टेः, ब्रह्माण्डस्वरूपाया अधिदैवसृष्टेश्च सादिसान्तत्वे सत्यपि अनन्तब्रह्माण्डमयसृष्टिप्रवाहरूपिण्या अध्यात्मसृष्टेः अनाद्यनन्तत्वमिति पूर्वमेव सुसिद्धम्। इदमपि प्रागेव सुसिद्धान्तितं यत् ब्रह्मणो ब्रह्मप्रकृतेर्महामायायाश्च साक्षात् प्रतिकृतिरूपौ यथाक्रमं कालदेशौ ज्ञातव्यौ। सर्गस्य सर्वाण्यपि वस्तूनि देशकालपरिच्छिन्नानि। सुतराम् अनन्तकोटिब्रह्माण्डमयस्य भगवतो विराड्मूर्तिरूपयोराद्यन्तरहितत्वं देशकालयोरवश्यंभावि। अतः श्रीभगवतो विराड्मूर्तिरिव उभौ कालदेशौ आद्यन्तरहितौ ज्ञातव्यौ ॥२००॥

द्वयोरेतयोः कर्मणि कीदृशः प्रभाव इत्युच्यते—

## तदनुबन्धिक्रिया तारतम्यात् ॥२०१॥

देशकालानुसारं क्रियायास्तारतम्यं बोध्यम्। कर्मणो देशकालपरिच्छिन्नत्वे, सर्गस्य सर्वविधेषु पदार्थेषु देशकालयोः पूर्णप्रभावे सिद्धे देशकालानुसारतः कर्मणोरूपान्तरत्वं स्वतःसिद्धम्। अतोहि देशकालस्थित्यनुसारं धर्मस्य तदङ्गोपाङ्गानां च स्वरूपतारतम्यम्। केवलं तदीयसाधनेष्वेव नहि, किन्तु फलेष्वपि तारतम्यं वेद्यम्। यज्ञीयायाः अयज्ञीयायाश्च भूमेः आचारेषु, आर्यायाः अनार्यायाश्च धराया धर्मसाधनेषु तारतम्यं विद्यते। तीर्थेषु अन्यत्र वा कृतस्य कर्मणः फलेषु महदन्तरमिति स्मृत्यनुमोदितम्। मरुस्थलपार्वत्यसमतलसुन्दरभूमिनिवासिनां धर्मसाधनक्रियासिद्धांशे तारतम्यं स्वाभाविकम्। एवं हि कालधर्मोऽप्यपरिहार्यः आश्रमधर्मस्य मूलभित्तिः कालधर्मसम्बद्धा निर्णीता। मानवानामायुरनुसृत्य ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-संन्यासधर्मा निर्णीताः। शोभने काले, यत् कर्म अनाचाररूपेण अधर्मरूपेण च वेदशास्त्रेषु समाम्नातं तदेव दुर्भिक्षमहामारी-

राज्यविप्लवादिकाले आपद्धर्मानुसारं निन्दनीयं नास्ति। एवं-प्रकारेण देशकालयोः प्रभावस्य धर्मे तदङ्गोपाङ्गेषु च परिपातेन क्रियास्वरूपतारतम्यमवश्यंभावि ॥२०१॥

सुतराम्—

## अतो धर्मवैचित्र्यम् ॥२०२॥

अतः कारणात् धर्मे वैचित्र्यम्। स्मृतिशास्त्रे धर्मस्य महिमानं वदता व्यासमहर्षिणा प्रोक्तम्—

यं पृथग् धर्मचरणाः पृथग् धर्मफलैषिणः।
पृथग् धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः॥

अतः कारणादेव वैदिको धर्मः सर्वधर्मापेक्षया व्यापको वैचित्र्य-पूर्णो विविधाङ्गोपाङ्गविभक्तश्च। कुत्रचित् लौकिके सिद्धान्ते अप्रतिष्ठितत्वात् लोकोत्तरापौरुषेयसिद्धान्तेषु स्थितत्वात् च वैदिको धर्मः स्वाभाविक वैचित्र्यपरिपूर्णः। यदा हि देशकालपात्रपार्थक्यं स्वाभाविकम्, तर्हि तदनुसारतः क्रियास्वरूपफलयोः पार्थक्यं स्वभावसिद्धम्। पात्रसमावेशो अन्ययोर्द्वयोरेवान्तर्गतः प्रथमतः स्थूलशरीरं दर्शनशास्त्राचार्यैर्देशान्तर्गतमङ्गीकृतम्। यतो ब्रह्माण्ड-मिव पिण्डमपि देशपरिचायकम् द्वितीयतः स्थूलशरीरेण काल-धर्मस्य साक्षात् सम्बन्धत्वात स्थूल एव वपुषि कालप्रभावः प्राकट्य-मापद्यते। अतो हि देशकालपात्रेषु देशस्यैव प्राधान्यम्। पात्रस्य विचारो देशकालयोरेवान्तत्वर्गतत्वात् पूज्यपादो महर्षिसूत्रकारः केवलं देशकालद्वारैव धर्मस्य वैचित्र्यपूर्णत्वमङ्गीकृतम्। धर्मकर्त्तव्य-सदाचारादिनिर्णयप्रसङ्गे देशकालविमर्शो विज्ञानसिद्धः। अतो हेतोः साधारणतया साधारणधर्मो ब्रह्माण्डपिण्डधारकः सर्वजीव-हितकारी च। किन्तु विशेषधर्मो विशेषाधिकारहितकरश्च। पूर्णा-वयवो मानवो जीवः कर्मसंग्रहे स्वाधीनः अतस्तत्र रुचिवैचित्र्य-

मधिकारवैचित्र्यं च निभाल्यते। अतः किल "यं पृथग् धर्मचरणाः" इत्युक्तो महर्षिभिर्धर्मो नमस्कृतः । वेदानां शाखाभेदेन पुराण-तन्त्रादीनामुपासनाभेदेन आचारवैचित्र्यं नियमितरूपेण समभ्यु-पगम्यते। सम्प्रदायभेदतश्च बह्वो मतभेदाः प्रतीयन्ते। अतोहि भगवता वेदव्यासेन महाभारते प्रोक्तम्—

'वेदा विभिन्नाः श्रुतयो विभिन्नाः ।
नाऽसौ मुनिर्यस्य मतं न भिन्नम् ।।' इत्यादि

अनेनैव हेतुना आर्यानार्यधर्मभेदः । जागतिकानि बहुविधानि धर्ममतान्तराणि उत्पद्यन्ते उत्पत्स्यन्ते च ।।२०२।।

सम्प्रति महर्षिषु मतभेदः प्रदर्श्यते—

**अतो महर्षिप्रस्थानेषु भेदप्रतीतिः ।।२०३।।**

कारणेनैतेन महर्षीणां प्रस्थानेषु भिन्नता प्रतीतिः। आब्रह्माण्डात् पिण्डपर्यन्तम् आग्रहोपग्रहात् परमाणुपर्यन्तं पृथक्पृथग्रूपेण सर्वस्य धारणमेव धर्मकार्यम्। अन्यच्च स्थूलसृष्टिवत् सूक्ष्मसृष्टावपि धर्मस्य पृथक् पृथगाधिपत्यम्। हेतोरस्मात् धर्मस्वरूपमतभेदप्रतीतिः साधनानुसारं भेदश्च स्वतः सिद्धः । अपरिहार्य्यकारणेनैतेन धर्म-विषये मुनीनाम् ऋषीणां च मतभेदः प्रतीयते ।।२०३।।

इदानीं धर्मलक्षणविषये प्रथमं मतभेदमाचष्टे—

**विहितकर्म धर्मेति जैमिनिः ।।२०४।।**

वेदविहितं कर्मैव धर्मशब्दवाच्यम् इति जैमिनिमतम्। महर्षि-जैमिनिः यत्र यत्र धर्मलक्षणं प्रोक्तवान् तत्र तत्र एतन्नियमानुसारेणैव धर्मं लक्षितवान्। वेदस्त्रिकालज्ञः। प्रत्येकस्य कल्पस्य सर्वोऽपि ज्ञान-समूहः सृष्टेरादौ तत्कल्पप्रकाशितवेदे प्राकट्यमासादयति। अन्यानि वेदसम्मतशास्त्राणि वेदस्यैव भाष्यरूपाणि। अतो वेदाः

तत्सम्मताः शास्त्रसमूहाश्च येषां कर्मणामनुष्ठानाय आज्ञां प्रकुर्वते तत्सर्वाण्येव जैमिनिमुनिमते धर्मस्वरूपाणि। अतो जैमिनिमहर्षिमते वेदशास्त्रानुमोदितं कर्मैव धर्मः, वेदशास्त्रनिषिद्धकर्माधर्मः। वेदप्रोक्ताः स्मृतिप्रतिपादिताश्च कर्मकाण्डादयः क्रियाकलापाः सिद्धान्तमिममेवानुसरन्ति। उपासनाप्रवर्तकेषु सर्वेष्वपि तन्त्रशास्त्रेषु साधनशैलीनिर्देशाय यावन्त आचाराः सन्ति तेषु त्रयाणामेवाचाराणां प्राधान्यम्। एतन्मतपरिपोषणायोदाह्रियते यत् तन्त्रेषु प्रचलितो दक्षिणाचार इममेव सिद्धान्तं पोषयति ॥२०४॥

द्वितीयं मतं प्रदर्शयति—

## विधिसाध्यमानमिति नारदः ॥२०५॥

नारदेन महर्षिणा विधिसाध्यमानं कर्मैव धर्म इति निर्दिष्टम्। धर्माधर्मनिर्णयविषये आचार्यगुरुमहाजना अनुकरणीयाः। धर्माधर्मनिर्णयप्रसङ्गे आचार्याणाम् वेदशास्त्राणामपि मते भेदप्रतीतिः। अत आत्मज्ञो गुरुः शास्त्रज्ञ आचार्यः कुलसम्प्रदायपरम्पराप्राप्ता महाजनाश्च यं मार्गं निर्दिशन्ति स एव धर्मस्य पन्थाः। ये महापुरुषा अविद्यां नाशयितुं विद्यामधिगन्तुं च शिक्षन्ते ते आचार्याः, ये चाभ्युदयनिःश्रेयसप्राप्तये साधनशिक्षां विदधते ते गुरवः प्रोच्यन्ते। एतादृशा आचार्या गुरवश्च नूनमेव वेदशास्त्रतत्त्वज्ञा आत्मज्ञाश्च भवन्ति। तैः किल यो विधिरुपदिश्यते साधककृते स एव धर्म इति देवर्षिनारदमतम्। भक्ताग्रगण्यो देवर्षिनारदो निजभक्तिदृष्ट्या आचार्ये गुरौ वा ज्ञानसूर्योदयं मन्यते, अतो धर्माधर्मनिर्णये आचार्यगुरुप्रदर्शितं विधिमेव धर्ममङ्गीकरोति। सिद्धान्तमिममनुसृत्यैवानेके वैदिका अवैदिकाश्च सम्प्रदाया उपासनासम्प्रदायाश्च प्रचलिताः प्रचरिष्यन्ति च। अतः साम्प्रदायिकेषूपासकेषु कर्मविधिषु च पार्थक्यं विलोक्यते। तत् तत् सम्प्रदायानां कृते तत्तत्सर्वमुपादेयमेव ॥२०५॥

तृतीयं मतं वक्ति—

**आत्मोन्मुखमिति गौतमः ॥२०६॥**

पूज्यपादमहर्षिगौतममते मानवमात्मोन्मुखं नयत् शारीरिकं वाचनिकं मानसिकं च कर्म धर्म इति। स्वतः सिद्धमिदं यत् मानवान्तकरणम् इन्द्रियोन्मुखं सत् जीवम् अतिनिम्नावस्थां प्रापयति। अतः कर्मसमूहो जीवं यावदिन्द्रियोन्मुखं नयति तावानेवाधार्मिको भावः समुत्पद्यते। सुतरां यत् कर्म जीवम् आत्मविमुखं विदत्ते तदधर्मः। अन्यत्र धर्मस्योर्द्ध्वगतिः सदा आत्माभिमुखशीला जीवम् अभ्युदयात्मोन्मुखस्रोतसि प्रवाहयतो अन्ते निःश्रेयसस्वरूपात्मपदं प्रापयति। अतो महर्षिगौतमस्य धर्माधर्मनिर्णयविषये मतमिदं विज्ञानानुमोदितम्। ज्ञानाज्ञाननिर्णायकानि तत्त्वज्ञानप्रकाशकानि यावन्ति ज्ञानकाण्डमतानि, तानि सर्वाण्येव अस्यामेव मौलिकभित्तौ स्थितानि। वैदिकानि तान्त्रिकाणि मिश्राणि च उपासनाकाण्डकर्मकाण्डयोः त्रिविधसाधनानि, सकलान्येव तानि यदा तमेव मौलिकं सिद्धान्तमाश्रयन्ति, तदैव तानि वैदिकानि प्रोच्यन्ते ॥२०६॥

चतुर्थं मतं विविनक्ति—

**अभ्युदयनिःश्रेयसकरमिति कणादः २०७॥**

महर्षिकणादमते अभ्युदयनिःश्रेयसकरं कर्मैव धर्मः। मानवधर्मधारिकायाः शक्तेः प्रभावतो मनुष्यः प्रथमम् ऐहलौकिकमभ्युदयं समीहमानस्तं प्राप्नोति ततः किञ्चिदुन्नतावस्थां प्राप्तः पारलौकिकमभ्युदयमिच्छन् तमधिगच्छति। अन्ते च सत्त्वगुणमभिवर्द्धयन् निःश्रेयसमीहमानः तमासादयति। अतः येन कर्मणा ऐहलौकिकपारलौकिकाभ्युदयः प्राप्यते, अन्ते च निःश्रेयसावाप्तिः, तत् सर्वमेव शारीरिकं बौद्धिकं च कर्म धर्मशब्दवाच्यमिति महर्षिकणादमतम्।

आर्यजातीयवर्णाश्रमश्रृङ्खलामौलिकभित्तिः सिद्धान्तमिमं निर्विभर्त्ति ॥२०७॥

पञ्चममतं निर्दिशति—

**अक्लृष्टपोषकमिति पतञ्जलिः ॥२०८॥**

अक्लृष्टपोषकं कर्मैव धर्म इति महर्षिपतञ्जलिसम्मतम्। वृत्ति-राज्याधारभूतमनो बन्धनमोक्षकारणम्। अन्तःकरण एव कर्म-संस्कारोऽपि संचीयते, मनोवृत्तिमयम्। पूज्यपाद महर्षिपतञ्जलिना वृत्तिराज्यं क्लिष्टाक्लिष्टभेदेन द्विधा विभक्तम्। सर्वा अपि मनोवृत्तयः क्लिष्टाक्लिष्टान्तगताः। क्लिष्टा वृत्तयस्तमोवर्धयन्ति, अक्लिष्टाश्च सत्त्वम्। अतो महर्षिपतञ्जलिमते यानि शारीरिकमानसिकबौद्धिक-कर्माणि मनसः क्लिष्टवृत्तीः परिवर्धयन्ति तान्यधर्मरूपाणि, यानि चाक्लिष्टवृत्तिसमेधकानि तानि धर्मशब्दवाच्यानि। मन्त्रयोगहठ-योगलययोगराजयोगनाम्ना चतुर्विधयोगसिद्धान्तमवलम्ब्य यावन्तः सम्प्रदायाः आविर्भूतास्तदाधारमिदं मतमेव परिपोषयन्ति। उदा-हरणत इदं वक्तुं शक्यते यत् तन्त्रोक्तदिव्याचारसाधनविधयो मौलिकीमिमामेव भित्तिमास्थिताः ॥२०८॥

षष्ठं मतं निरूपयति—

**लीलामोचकमिति कपिलः ॥२०९॥**

प्रकृतिलीलातो मोचकं कर्म धर्म इति महर्षिकपिलमतम्। लीला-मय्या ब्रह्मप्रकृतेर्महामायाया लीलैव दृश्यप्रपञ्चरूपसृष्टेर्मौलिकं कारणम्। त्रिगुणमय्याः प्रकृतेस्त्रिगुणजाले बद्धो जीव आवागमन-चक्रे निरन्तरं भ्राम्यति। अतः प्रकृतिलीलाविलासः स्थितिशीलः। अतोहि येन शारीरिकेण, मानसिकेन, बौद्धिकेन च कर्मणा त्रिगुण-जनितलीलाबन्धनं वर्धते तत् अधर्मस्वरूपम्, येन च जीवनबन्धन-

कारिणो लीलाग्रन्थेः विमोकस्तद् धर्मशब्दवाच्यम्। तात्पर्यमिदं यत् प्राकृतिकीलीला पुरुषस्वच्छस्वरूपे प्रतिफलिता पुरुषं विमोहयति। तत्त्वज्ञानेन साधको यावत् प्रकृतिस्वरूपं विजानाति तावदेवासौ प्रकृतिलीलाबन्धनं परित्यजति। येन येन कर्मणा प्राकृतिको लीलानुरागो ह्रसति तदेव धर्म इति पूज्यपादमहर्षिकपिलमतम्। यावन्ति वैदिकमतानुयायीनि कर्मकाण्डानि यावन्तश्च दार्शनिकसम्प्रदायाचाराः प्रचलन्ति तेषां सर्वेषामेव मौलिकभित्तिरिदमेव विज्ञानम् ॥२०९॥

सप्तमं मतं प्रदर्शयति—

सत्त्ववृद्धिकरमिति भरद्वाजः ॥२१०॥

धर्माधर्मनिर्णयविषये महर्षि-सूत्रकारभरद्वाजमतमिदं यद् येन शारीरिकेण, बौद्धिकेन च कर्मणा तमोगुणहानिः सत्त्वगुणवृद्धिश्च जायते तत् कर्म धर्मशब्दवाच्यम्। अत्रैव सिद्धान्ते मीमांसाशास्त्रं प्रतिष्ठितम्। सनातनधर्मस्य सर्वव्यापक-सर्वजीवहितकरधर्मविज्ञानस्य मौलिकी भित्तिरियमेव ॥२१०॥

अष्टमं मतं निरूप्यते—

ईश्वरार्पितमित्यङ्गिराः ॥२११॥

ईश्वरार्पितं कर्म धर्म इति महर्षेः अङ्गिरसो मतम्। सर्वविधमपि कर्म ईश्वरार्पणपूर्वकं क्रियामाणं धर्मशक्तिमुत्पादयति। यथा किल आत्मना प्रकृतिसम्बन्धः तथैव प्रकृत्या कर्मसम्बन्धः। आत्मना पृथग्भवन्ती प्रकृतिः सृष्टिलीलाविलासं प्रकटयति। आत्मनः पृथग्भूत्वा प्रकृतितरङ्गायितदशैव कर्मोत्पत्तिकारणम्। तेनैव च जीवभावः समुत्पद्यत इति दर्शनशास्त्राणि साधुरीत्या प्रमाणयन्ति। तदेव च अनन्तकोटिब्रह्माण्डभाण्डोदर्य्याः ब्रह्मप्रकृतेः सृष्टिलीलाविलासस्य गूढं रहस्यम्। लयक्रिया तद्-

विपरीता। कर्म यदा प्रकृतौ प्रविशति, प्रकृतिश्च ब्रह्मण्यव्यक्तदशामधिगच्छति, तदानीं सहैव कर्मणा दृश्यप्रपञ्चमयं जगदिदं परमात्मनि विलीयते। बन्धमोक्षयोरेकमात्रकारणभूतं जीवान्तःकरणं यदा बहिर्मुखीनतां सम्पद्यते, तदा सैवावस्था बन्धनकारिणी। आत्मोन्मुखीनमन्तःकरणं जीवविमुक्तिनिदानम्। इममेव दार्शनिकं सिद्धान्तमभिलक्ष्य महर्षिरङ्गिराः सिद्धान्ततिवान् यत् भगवद्भक्तिसंयुक्तः साधको यद्यत् शरीरमनोबुद्धिकार्यमनुतिष्ठन् धैर्यसद्विचारानुगुण्यं सत्येन हृदा यत्कर्म परमात्मनि समर्पयति तत्सर्वमपि धर्मशब्दवाच्यमित्यत्र नास्ति सन्देहावसरः। शङ्कासमाधानपुरस्सरमिदमुच्यते यद् यदि आत्मोन्मुखीनमन्तःकरणमेवाभ्युदयनिःश्रेयसाधिगमस्यैकमात्रनिदानम्, यदि च सर्वासां पारसमाप्तीनां निखिलस्याप्याश्रयस्थलमात्मैव, यदि चापि आत्मनि लक्ष्यभूते सति जीवस्य समस्तमपि कालुष्यं शुभाशुभकर्मणा साकं स्वत एव विनाशमुपढौकते, तर्हीदं स्वतः सिध्यति यदात्मानमभिलक्ष्य यत् किमपि क्रियमाणं सदसत्कर्म जीवाभ्युदयनिःश्रेयसकरं धर्मतामापत्स्यते। अन्यच्चेदमपि सुनिश्चितमेव यदन्तःकरणस्य विक्षेपराहित्यं विना भक्त्या च भगवद्भावापन्नत्वमन्तरेण न भवितुमर्हति मनसोगतिरात्माभिमुखीना। यदि च भक्तमनोवृत्तावात्मोन्मुखिन्यां जातायां सत्यामन्तःकरणे धर्मपुण्योदयः स्वभावसिद्धः। विषयोऽयं प्रकारान्तरेणाप्यवगन्तुं शक्यते, तथाहि—भाव एवान्तःकरणस्यान्तिमं तत्त्वम्। अतः सदसद्भाव एव सदसत्कर्महेतुतां भजते। उदाह्रियतेऽत्र यदसत्कर्मापि जीवहिंसा यज्ञपशुबलिस्वरूपा धर्मतामापद्यते। प्रसङ्गेऽत्र मतविशेषं निदर्शयति तन्त्रशास्त्रोक्ताः कर्मोपासनाकाण्डयोः प्रवर्त्तकाः, सर्वेऽप्याचारा दक्षिणाचार-दिव्याचारवामाचारभेदेन त्रिधा विभक्तुं शक्यन्ते तेषु वामाचारपद्धतिरिमामेव वैज्ञानिकीं भित्तिमास्थिता। अतो

भावशुद्धिपूर्वकं क्रियमाणं कर्मैव धर्मः। ईश्वरस्मरणपुरस्सरं परमेश्वर-समर्पितेन कर्मणा स्वत एव भावशुद्धिः। अतो हेतोः पूज्यपाद-महर्षिरङ्गिरा इदं निश्चिनोति यत् किमपि शारीरिकं मानसिकं वा कर्म भगवत्प्रीत्यर्थं विधीयमानं श्रीमति परमात्मनि समर्पितमवश्य-मेव धर्मस्वरूपतामापद्यते ॥२११॥

नवमं मतमुदीर्य्यते—

## लोकहितमिति व्यासः ॥२१२॥

लोकहितकरं कर्मैव धर्म इति महर्षिव्यासमतम्। व्यष्टिसमष्टि-रूपेण ब्रह्माण्डं पिण्डं च समानम् व्यष्टिसमष्टिसम्बन्धेन जगद्धितकरं व्यक्तिहिताधायकं कर्म चैकमेव। जगता सह जगत्कर्त्तुर्भगवत एकत्वसम्बन्धः। पिपीलिकातो हस्तिनं यावत्, मानवादारभ्य मनुष्यसमाजपर्य्यन्तं सर्वा एव समष्टयो व्यष्टयश्च भगवता सह सम्बन्धनिबन्धना विज्ञेयाः। पशुं खगमारभ्य साधारणमानवोध-सृष्टिपर्यन्तम्, असभ्ये मानवे ज्ञानिनि वा भगवतश्चित्कलातारतम्ये सत्यपि जगदीश्वरसृष्टिरेकसम्बन्धसङ्कलिता वेद्या। अतो हि लोक-समर्चया जगदीश्वरपूजा क्रियते। वसुधैव कुटुम्बकम्, जगच्च परमात्मस्वरूपमिति बुद्ध्या क्रियमाणं फल्गु गुरु वा शारीरिकं मानसिकं बौद्धिकं च कर्म धर्मशब्दवाच्यमेव। पूज्यपादेन महर्षिणा व्यासेन समाम्नायते यत् शारीरिकं वाचनिकं बौद्धिकं च कर्म लोक-हितदृष्ट्या, जगत्कल्याणधिया क्रियेत तर्हि तत् धर्म एव। जगत्सेवा भगवत्सेवातो नातिरिच्यते, तदा जगत्सेवा धर्मकार्यमित्यत्र कः सन्देहः। अतो भगवता व्यासेन प्रोक्तम्—

अयं निजः परोवेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

एतदर्थं धर्मविषये व्यापकमेकं साधारणलक्ष्यं व्यञ्जयितुमेता-

-दृश् मतप्रकाशः स्वाभाविक एव। यद्यपि धर्मस्य व्यापक-विशेष-साधारणलक्षण-विषये सविस्तरमीमांसा प्रथमपादे समनुष्ठिता, तथापि तत्तन्महर्षिविभिन्नमतेषु कीदृक् कर्म धर्मः किञ्चाधर्म इति विषय एतेषु सूत्रेषु विवेचितः ॥२१२॥

मतपार्थक्यनिदानमुच्यते—

संस्काराधिकारभेदोऽत्र हेतुः ॥२१३॥

संस्कारोऽधिकारभेदश्च धर्मविषये महर्षिमतभेदकारणम्। पूज्यपाद-महर्षिमतेषु पूर्वोक्तां विभिन्नतामवलोक्य सन्देहग्रस्तस्य जिज्ञासोः शङ्कायाः समाहितये विज्ञाप्यत इदं यत् धर्मविषये महर्षिषु वस्तुतो न मतभेदः, किन्तु संस्काराधिकारवैचित्र्यमेवात्र हेतुः। स्वीयपूर्वजन्मार्जित-विभिन्नसंस्कारकारणेन प्रारब्धजनिताधिकार-वैचित्र्यहेतुना च मानवानां प्रकृति-प्रवृत्ति-शक्तिभेदः स्वाभाविकः। भेदेनैतेन साधनपद्धतौ विभिन्नमार्गेषु च रुचिपार्थक्यं स्वभावसिद्धम्। एतेनैव कारणेन जगत्कल्याणबुद्ध्या कृपालवो धर्माचार्या महर्षयो धर्मविषये विविधमार्गान् निर्दिष्टवन्तः। यस्य यः पन्थाः सुगमस्तेन तेनैव पथाऽग्रसरिष्यते। सर्वे किन्त्वाभ्युदयस्य निःश्रेयसस्य वा पथः पथिकाः सम्भवन्ति ॥२१३॥

कारणान्तरं व्याचष्टे—

सर्वजीवहितकरत्वं च धर्मस्य ॥२१४॥

धर्मस्य सर्वजीवहितसाधकत्वं च महर्षिमतभेदकारणम्। धर्मस्य विराट्स्वरूपं तदीया व्यापकसत्ता च ब्रह्माण्डे, पिण्डे, जडे चेतने च समानभावेन स्थित्वा सृष्टिरक्षां विधत्ते। परन्तु मानव-शरीरे विलक्षणं तदाधिपत्यम्। मानवो यदा पञ्चकोषपरिपूर्णत्वं प्राप्य स्वस्य पिण्डस्याधीश्वरो जायते तदा धर्मशक्तेरनुगमनमा-वश्यकम्।

चेतने जगति धर्मनियामिकायाः शक्तेः पूर्णता दृष्टिगोचरतामापद्यते । व्यष्टिसृष्टिक्रममनुसृत्य जीवभावविकास उद्भिज्जतः प्रारभते । तदानीं जीवः क्रमशः स्वेदजाण्डज-जरायुजान्तर्गतासु योनिषु भ्राम्यन् मानवयोनिं प्रपद्यते । उद्भिज्ज-स्वेदजाण्डज-जरायुज-मनुष्येषु क्रमशोऽन्नमय-प्राणमय-मनोमय-विज्ञानमयाऽऽनन्दमयाः कोषा विकसन्ति । उद्भिज्जे चैकः, स्वेदजे द्वौ, अण्डजे त्रयः, जरायुजे चत्वारः, मानवे च पञ्चकोषा विकाशमापद्यन्ते, पञ्चकोषविकासतो जीवभावस्य पूर्णता । निम्नयोनिषु कोषान्तराणि गौणरूपेण तिष्ठन्ति । धर्मस्यैव शक्तिरियं यया जीवः प्रकृतिराज्ये क्रमोन्नतो भवन् मनुष्ययोनिमासादयति । जीवक्रमोन्नतिमभिलक्ष्य भगवता वेदव्यासेन प्रोक्तं यत्—

'उन्नतिं निखिला जीवा धर्मेणैव क्रमादिह ।
विदधानाः सावधाना लभन्तेऽन्ते परं पदम् ॥ इति ।

प्रकृत्यधीनत्वादेव जड़राज्यस्य समस्तेषु जीवेषु प्रकृतिसाहाय्येनैव स्वभावत एव धर्मविकासः सम्पद्यते । केवलं चेतनराज्यजीवे मनुष्य एव कर्मानुष्ठानस्वातन्त्र्यं विचारशक्तिश्च समुदेति, येन तत्र पूर्णरूपतः स्वाधीनो धर्मविकाशो जायते । अतो मानव एव धर्मसाधनाधिकारी । उक्तं च महाभारते भगवता व्यासेन—

मानुषेषु महाराज धर्माधर्मौ प्रवर्ततः ।
न तथाऽन्येषु भूतेषु मनुष्यरहितेष्विह ॥
उपभोगैरपि त्यक्तं नाऽऽत्मानं सादयेन्नरः ।
चाण्डालत्वेऽपि मानुष्यं सर्वथा तात शोभनम् ॥
इयं हि योनिः प्रथमा यां प्राप्य जगतीपते ।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः ॥

उद्भिज्जतः पशुपर्यन्तं जड़राज्यस्य सर्वे जीवाः कोषविकासानुसारेण प्राकृतिकरूपेण धर्मविकासमासादयन्ति। एकमात्रमन्नमयकोषविकासहेतुनैवोद्भिज्जो जीवः शाखामात्रविरोपणेनैव वृक्षरूपेण परिणमते, एवं किलोद्भिज्जशक्तिरिह किञ्चिद्धर्मविकाससूचिका। स्वेदजे प्राणमयकोषविकासत्वात् अनेकाः प्राणक्रियाः परिदृश्यन्ते, तथाहि—रोगकीटाणुभिः शरीरे व्याध्युत्पत्तिः, महामारीप्रसृतिः, रुधिरश्वेतकीटाणुद्वारा व्याधिनाशः, सर्वमिदं स्वेदजयोनौ धर्मविकासपरिचायकम्। अण्डजे मनोमयकोषविकासलक्षणप्रेमद्वेषादिवृत्तिदर्शनं धर्मशक्तिविकासफलस्वरूपमेव। जरायुजे विज्ञानमयकोषविकासत्वात् पशुशरीरेषु धर्मविकासस्य बहुविधानि बुद्धिवृत्ति-लक्षणानि प्रत्यक्षीसद्धानि, गजव्याघ्राश्च सिंहादयः समुन्नताः पशवः स्वाधिकारानुरूपं बुद्धिकार्यं कुर्वन्तः परिदृश्यन्ते। सर्वमिदमेतेषु धर्मविकासस्य प्रत्यक्षलक्षणम्। एवं हि प्रकृत्यैव धर्मविकासं प्राप्नुवन्तो जीवा अन्ते मनुष्ययोनिमासादयन्ति।

जड़राज्यजीवान् प्रकृतेः पूर्णरूपेणाधीनतां भजतस्तान् प्रकृतिमाता शिशुवत् स्वक्रोडे लालनं पालनं कुर्वती मानवयोनिं प्रापयति। अतः प्रकृतेरेव पूर्णप्रतिभाव्यत्वात्तथाभूतो जीवो न भवितुमर्हति पुण्यपापाधिकारी। परन्तु मानवशरीरं प्राप्तो जीवोऽहम्भाववृद्ध्या स्वतन्त्रो भूत्वा कर्मानुतिष्ठन् प्रकृतेरनुशासनमुल्लङ्घयन् यथेच्छमिन्द्रियसेवापरायणो बोभूयते। जड़राज्ये वर्त्तमानजीवस्य नियमितरूपतोह्याहारनिद्राभयमैथुनादिक्रियाकलापाः सम्पद्यन्ते स्म, ते प्रकृतावाधिपत्यकारणात् मानवजीवस्यानियमिततां भजन्ते। एतत्फलमिदं यत् उद्भिज्जयोनितो मानवयोनिपर्य्यन्तमशाधमुपढौकमाना जीवक्रमोन्नतिधारा रुद्धा सती पुनर्निम्नगामितां प्रपद्यते। धर्मशक्त्यैव मानवस्याधोमुखिनो गतिर्निरुद्धोर्द्ध्वमुखीना सम्पद्यते। अत एव सनातनो धर्मो जागतिकसर्वधर्ममतानां पितृस्वरूपः।

स च स्वाभाविकोऽतः प्रकृतिसहजातः। धर्म एव मानवं वर्णाश्रमधर्मविधिना क्रमशः समुन्नयन् अवसाने मुक्तिपदं प्रापयति। अतः प्रकृतिप्रवाहानुकूलगत्या क्रमशः समुन्नतिरन्ते च मुक्तेरधिगमो धर्मः, प्रकृतिप्रतिकूलगत्याऽवनतिलाभ एवाधर्मः। अतः कारणान धर्मस्य धारिकाशक्तिः सहजपिण्डजीवेषु स्वाभाविकसंस्कारानुत्पादयन्ती प्रकृतिस्वभाववशवर्त्तिजीववर्गमुद्भिज्जादियोनिषु क्रमशः समुन्नयन्ती अभ्युदयं निष्कण्टकीकुरुते। अनन्तरं च मानवशरीरमासादयतो जीवान् असभ्यकिरातानार्यभावतः सभ्यायामार्यजातौ प्रापयन्ती क्रमशोऽभ्युदयमार्गेऽग्रेसरान् विधत्ते। अन्ते च सैव धर्मस्यजगन्नियामिका शक्तिर्मनुष्येभ्यस्तत्त्वज्ञानप्रदानपूर्वकं निःश्रेयसमार्गं निदर्शयति। ततश्च मानवमात्मज्ञानाधिकारिणं सम्पाद्योच्चतमज्ञानभूमिमधिगमयति, सैव धर्मशक्तेः सर्वजीवहितकारकोऽसीममहिमा। मनुष्यधर्मस्य द्विसप्ततिसंख्याकेष्वङ्गेषु तदीयेषु बहुषूपाङ्गेषु कानिचिदङ्गोपाङ्गान्याश्रित्यानेकेऽवैदिका धर्ममतसम्प्रदायाः पृथिव्यामुत्पन्ना उत्पद्यन्ते समुत्पतस्यन्ते च, स्वस्वाधिकारमनुसृत्य तत्तदधिकारिजीवानभ्युदयमार्गमप्रापयन् प्रापयिष्यन्ति च, इदमेव सनातनधर्मस्य सर्वजीवहितकरं स्वरूपम्। धर्मस्याधिकारभेदत्वादेव सर्वजीवहिताधायकत्वम्, नान्यथेति ॥ २१४ ॥

प्रसङ्गतः सर्वतो गरीयो महत्त्वं प्रोच्यते—

स हि सर्वधारकः ॥ २१५ ॥

स च धर्मः सर्वस्य धारको धारणशील इति यावद् वेदनीयः। सर्गस्य सम्पूर्णपदार्था जड़चेतनभेदतो भागद्वयेन विभक्तुं शक्यन्ते। अतो येयमीश्वरीयशक्ति द्विविधमपि पदार्थं धारयति, सैव धर्मः। "योग्यतावच्छिन्ना धर्मिणः शक्तिरेव धर्म" इति पातञ्जलयोगभाष्ये

भगवता व्यासेन स्वयमुदीरितम्। यस्याः शक्तेरभावात् जड़स्य चेतनस्य वा पदार्थस्य सत्तैव न स्यात् सा शक्तिरेव धर्मः। जड़-पदार्थेषु पावकस्योष्णत्वम्, जलस्य द्रवत्वम्, चुम्बकस्य लौहा-कर्षणत्वम् इत्यादि। इदमुदाहरणं चेतनेषु चापि बोध्यम्। यथा मानवस्य मानवत्वम्, अर्थात् यस्याः शक्तेर्विद्यमानत्वात् मानवो मानवपदं बिभर्त्ति, सैव शक्तिर्मनुष्ये धर्मः प्रोच्यते, तथैवं ब्राह्मणे ब्राह्मणत्वम्, शूद्रे शूद्रत्वम्, पशौ पशुत्वमादि। विज्ञानेनैतेन सुतरां सिध्यति यद् धर्मस्यालौकिकशक्तिद्वारा हि विश्वानि जगन्ति ब्रह्माण्डानि सुरक्षितानि।

प्रकृतिविशालराज्ये धर्मस्य लीलामनुशीलयन् सहृदयो मनुष्यो नितरां चकितो जायते। विराटपुरुषशरीरे क्रियन्ति ब्रह्माण्डानि सुशोभन्ते, यत् तेषां संख्यानमसम्भवमेव। यथाचोक्तं महानारायणो-पनिषदि —

"अस्य ब्रह्माण्डस्य समन्ततः स्थितान्येता-
दृश्यान्यनन्तकोटिब्रह्माण्डानि ज्वलन्ति" इति,

धर्मस्य धारणशक्त्यैव प्रत्येकब्रह्माण्डस्थितशशिसूर्यादिग्रहो-पग्रहनक्षत्रधूमकेतुप्रभृतयो जीवाश्रयभूताः स्वकीयाकर्षणसमन्वयेन स्वां स्वां कक्षां भ्राम्यन्तो नैव पदच्युताः सम्पद्यन्ते। विशालस्य ग्रहस्याधिकेनाकर्षणेन लघुग्रहो न तदीयगर्भप्रविष्टो नाशमुपयाति। सर्वमिदं धर्मस्य विश्वधारणशक्तेः परिणामभूतमवगन्तव्यम्। पाश्चा-त्यविज्ञानेनापीदं सिध्यति यत् प्रत्येकस्मिन्नपि परमाणावाकर्षण-विकर्षणशक्ती तिष्ठतः, सर्गकाले आकर्षणशक्तिबलेन परमाणवः परस्परं सम्पृक्ताः स्थूलानि जगन्त्युत्पादयन्ति, प्रलयसमये च विकर्षणशक्तिप्राबल्येन परमाणवोऽन्योन्यं पृथगभवन्तो स्थूलानां जगतां विलयं विदधते, स्थितिदशायां किल आकर्षण-विकर्षणयोः सामञ्जस्यमवधेयम्, सामञ्जस्यसंरक्षणमिदं धर्मस्य

धारकशक्तिकार्यम्, येन स्थितिकाले नानावैचित्र्यपरिपूर्णस्यैतस्य संसारस्य मधुरमधुरा लीला दृष्टिगोचरी क्रियते।

धर्मस्य विज्ञानं पूर्णरूपेणावगन्तुं तस्य धारिकायाः शक्तेरनुसारेण ब्रह्माण्डे, पिण्डे, जड़े, चेतने मनुष्यादौ धर्मशक्तेः स्वरूपपार्थक्यमवगन्तुमुचितम्। यथा किल स्थूलपदार्थेष्वाकर्षणेन मेलनं विकर्षणेन च पार्थक्यम्, तथैवान्तर्जगन्नामके मनोराज्येऽपि रागद्वेषशक्ती व्यवस्थिते। रागशक्त्या मानवस्यैकस्य चित्तं मानवोऽपर आकर्षति, येन श्रद्धा-प्रेम-स्नेहादयो वृत्तयः समुत्पद्यन्तेऽन्योन्यं हृदयमाकर्षन्ति च। रागजेनाकर्षणेनैव पितृपुत्रपतिपत्नीप्रभृतीनामात्मीयस्वजनमोहतो जगदिदं सुदृढबन्धनयुक्तं निभाल्यते, एतद्विपरीतशक्तिर्द्वेष इत्युच्यते। एतेनैव शत्रून् प्रत्यन्तःकरणे द्वेषवृत्तिरुदेति। द्वेषस्योदयेनैव रिपुष्वमङ्गलेच्छाप्रादुर्भावः। पूज्यचरणैस्त्रिकालदर्शिभिर्महर्षिभिः स्वीयसर्वतोमुखिनीभिः प्रतिभाभिः सर्वप्रत्यक्षमिदं संसाधितं यत् जड़राज्ये आकर्षणविकर्षणशक्तिवत् चैतन्ये राज्येऽपि रागद्वेषशक्ती विद्येते। रागशक्ती राजसी द्वेषशक्तिस्तामसी च, तथैवाकर्षणशक्तिः रजोगुणमयी विकर्षणशक्तिश्च तमोमयी। अन्यच्चाकर्षणविकर्षणशक्त्योः समन्वयेन सत्त्वगुणमय्या धारिकायाः शक्तेरुदयो जायते, तथैवान्तर्जगत्यपि रागद्वेषसमन्वयेन ज्ञानविकासः, तेन चान्तःकरणं सत्त्वगुणमयं बोभवीति। एतेनेदमवगन्तव्यं यदेकत्र ब्रह्माण्डे यावच्चन्द्रसूर्यादिग्रहोपग्रहादिषु आकर्षणविकर्षणशक्तिसमन्वयो विद्यते, तावदेव ब्रह्माण्डं स्वस्वरूपे तिष्ठति, ग्रहोपग्रहाश्च परस्परमाकृष्टा नैव विनाशमुपयान्ति। ब्रह्मशक्तेर्महामायाया इयं किल जगन्नियामिका ब्रह्माण्डधारिका धर्मशक्तिरेव यया प्रत्येकं ब्रह्माण्डं स्वे स्वे रूपे धार्यते, अनन्तकोटिब्रह्माण्डानि च स्वस्वस्थानेषु परिरक्ष्यन्ते। एतदेव ब्रह्माण्डेषु धर्मशक्तेरुदयस्य दिग्दर्शनमवधेयम्।

ब्रह्माण्डधर्मशक्त्यनुग्रहस्वरूपे प्रत्येकपिण्डेऽपि धर्मस्य सर्वव्यापिन्याः स्थितिकारिण्याः शक्तेरनुभूतिस्तु प्रत्यक्षैव। प्रत्येकस्यापि पिण्डस्य या तदीयोर्द्ध्वमुखीना चित्सत्ता, तस्या अभिवृद्धिर्यया क्रियया सम्पद्यते सैव पिण्डधर्मः। सहज-देव-मानवभेदेन पिण्डमपि त्रिविधम्। उद्भिज्जस्वेदजाण्डजजरायुजाश्चतुर्विधा योनयो यानिपिण्डान्याश्रयन्त्यो मृत्युलोके सन्तिष्ठन्ते तानि सहजानीत्युच्यते। औषधि-वृक्षादय उद्भिज्जाः जलरक्तपूर्णशय्यादिषु निवसन्तः कीटाणवः स्वेदजाः, सर्पकपोतमयूरादयोऽण्डजाः, मृगगजप्रभृतयो जरायुजाश्च प्रकृतेः सहजकर्मसञ्चालितत्वात्सहजपिण्डनाम्ना समाम्नाताः। देवाः, असुराः, ऋषयः, पितरः प्रेतादयश्च यानि शरीराणि धारयन्ति, तानि देवपिण्डसंज्ञया प्रोक्तानि, मृत्युलोके मनुष्यशरीरं मानवपिण्डमाख्यायते। ब्रह्माण्डधारिकाऽनन्तस्वरूपा धर्मशक्तिरेव सर्वपिण्डेषु व्याप्नुवन्ती पिण्डधर्मं संरक्षति। वहिःस्वरूपेण, आभ्यन्तररूपेण चेति प्रकारद्वयेन पिण्डधर्मः परिरक्ष्यते। यतः प्रत्येकस्मिन् पिण्डे शरीरशरीरिणोर्विद्यमानता। प्रत्येकपिण्डे तद्विशेषपिण्डधर्मरक्षा शरीरधर्मतः सम्बद्धा। तत्र च प्रत्येकपिण्डस्थजीवस्य प्रथमदशायामभ्युदयस्यावाप्तिः, द्वितीयावस्थायां च निःश्रेयसाधिगमस्तदीयपिण्डस्थितजीवात्मनः क्रमाभिव्यक्तिसम्बन्धनिवन्धनः, धर्मस्य जगद्धारिका शक्तिः पिण्डस्य समस्तक्रियासम्पादने साहाय्यमाचरति, अन्तःकरणे च क्रमशः सत्त्वगुणं विकासयन्ती जीवमभ्युदयनिःश्रेयसपथपथिकं विधत्ते।

इदानीं जड़जगति धर्मशक्तिः कथं कार्यकारिणीत्युच्यते, प्रस्तरकाष्ठादि खण्डानामुदाहरणमत्रावधेयम्। काष्ठसृष्टिकाले तत्परमाणव आकृष्यन्ते, इयमेव रजोगुणदशा काष्ठस्य बोध्या। समयान्तरे यदा काष्ठानि घुणैः संयुक्तानि विशीर्णानि मृत्तिकारूपेण परिणमन्ति, तदा सैव तमोगुणावस्था ज्ञेया, तथैवाऽश्मानः पृथ्वीव्यापिन्यास्त-

र्डिच्छवतः प्रभावतो मृत्तिकाभिः प्रस्तराकारेण परिणमन्ति, तर्हि सैव तदीया रजोगुणावस्था, यदा च जलाग्निवायुप्रभावद्वारा प्रस्तरपरमाणवः पार्थक्यं भजन्ते, सैव तस्य तमोगुणदशा। किन्तु रजस्तमसोः सरून्वयेन काष्ठं प्रस्तरं च स्वरूपे तिष्ठति सैव तदीयसत्त्वगुणावस्था विज्ञेया। अस्यामवस्थायामेव धर्मस्य धारिकाशक्तिर्जड़पदार्थेषु विद्यमाना विलोक्यते।

धर्मशक्तिरेव जीवान्तःकरणेषु क्रमशः सत्त्वगुणमभिवर्धयन्ती जीवमुद्भिज्जस्वेदजाण्डज जरायुजेषु क्रमेण समुन्नयन्ती मानवयोनिं प्रापयति ततश्चानार्य-शूद्र-वैश्य-क्षत्रिय-ब्राह्मणशरीरेषु प्रापय्य जीवं तत्त्वज्ञानिनमात्मज्ञानिनं सम्पाद्य बन्धनान्मोचयति। चेतनराज्ये धर्मशक्तेरयमेव प्रकृष्टो दृष्टान्तः। जड़चेतनराज्येषु, स्थावरजङ्गमपशुमनुष्यादिषु, मानवदेवपिण्डप्रभृतिषु च आपरमाणो ब्रह्माण्डपर्यन्तं सर्वत्रैव सर्वव्यापकः सर्वाश्रयस्वरूपो धर्म एव सर्वसरक्षणशील इत्येव तस्य सर्वोत्कृष्टं महत्त्वमवगन्तव्यम् ॥२१५॥

अन्यदपि—

**मलविकारविक्षेपावरणास्मितापहन्तृत्वात् सर्वशुद्धिप्रदश्च ॥ २१६ ॥**

स च धर्मो मलादीनां नाशकत्वात् सर्वशुद्धिकरश्चेत्यर्थः। पञ्चानामपि अन्न-प्राण-मनोविज्ञानानन्दमयानां कोषाणां तमोवर्द्धिन्यः पञ्चमलिनाः शक्तयो भवन्तीति पूर्वमेव प्रोक्तम्। अन्नमयस्य कोषस्य मलिनः प्रभावो मलः, प्राणमयस्य विकारः, मनोमयस्य विक्षेपः, विज्ञानमयस्य आवरणम्, आनन्दमयस्य चाऽस्मितेति। इत्यप्युदीरितं प्राक यत् कुत्र कोषे कथङ्कारं मलिनक्रिया समुत्पद्यते। पञ्चकोषावृतो ह्यात्मा पञ्चकोषीय-मालिन्याभिवृद्धयाऽऽच्छन्नप्रकाशो-जायते, पञ्चकोषमालिन्यह्रासेन चात्मनो मलिनताऽपि क्रमशो

ह्रासमुपयाति। एतदपि प्रतिपादितं पूर्वं यत् शुद्धाशुद्धविवेकानुसार-माचारपरिपालनेन पश्चादपि मलिनता नैव प्रवर्धन्ते प्रत्युत स्वयं ह्रसन्त्येव। धर्मस्य प्रबलसर्वतोमुखीनशक्तिद्वारा मलविक्षेपादयः पञ्चदोषाः स्वत एव नश्यन्ति, त्रिविधशुद्ध्यासम्पद्यमानया चान्ते निःश्रेयसमधिगम्यते। एतदपि प्रागेव निर्णीतं यत् विश्वधारको धर्मः सत्त्वगुणस्य पोषको वर्धकश्च, सुतरां सत्त्वगुणमयः स्वच्छता-सम्पादको धर्मः किल सर्वशुद्धिप्रद इत्यत्र कः सन्देहः ॥ २१६ ॥

इदानीं प्रकृतविषयमभिधत्ते—

## त्रिविधा सप्तविधा च क्रियापरिणतिः ॥ २१७ ॥

क्रियायाः परिणामस्त्रिविधः सप्तविधश्च, यथा किल देशकाला-नुसारं कर्मणो वैचित्र्यमुत्पद्यते, तथैव प्राकृतिकेन त्रिविधेन, सप्त-विधेन च विभागेन कर्मणो विचित्रता विज्ञेया, सत्त्वरजस्तमोरूपेण त्रिगुणेन, अध्यात्माधिदैवाधिभूतस्वरूपेण भावत्रयेण, वातपित्तकफात्म-केन दोषत्रयेण त्रिविधो विभागः स्वतः सिद्धः, तथैव सप्तधातु-सप्तदिन-सप्तज्ञानभूमिप्रभृतयः स्वाभाविकाः सप्तविभागाः सन्त्येव, एतान् प्राकृतिकविभागाननुसृत्य क्रियायामवश्यमेव वैचित्र्यपूर्ण-प्रभावनिपातः, देशकालपार्थक्येन, त्रिविधाधिकारस्य सप्तविधाधि-कारस्य च पार्थक्यद्वारा धर्माधिकारविचित्रता विज्ञानसम्मता ॥ २१७ ॥

विज्ञानमिदं पुनः परिपोषयति—

## युक्तक्रियायाः ॥ २१८ ॥

पूर्वोक्ता भेदाः युक्तक्रियाया बोध्याः। युक्तक्रियायाः स्थायित्व-सम्पादनाय देशकालयोः, त्रिविधानां सप्तविधानाञ्चाधिकाराणां विमर्शो नूनमेवानुष्ठातव्यः। प्रकृतिस्पन्दनसमुद्भूतं कर्म धर्माधर्म-

स्वरूपतां धत्ते, ततश्च नियमितानियमितफलप्रदमपि भवितुं शक्नोति, अतो धर्मप्रवर्त्तकेभ्यः सिद्धान्तमिमं निश्चीयाभिधीयते यत् देशकाल-त्रिविध सप्तविधाधिकारान् लक्ष्यीकृत्य कर्मणि प्रवृत्तिर्युक्तकर्मेत्युच्यते। राहत्याधं नियमितफलप्रदं कर्म किल युक्तकर्म। इमान् पूर्वोक्त-विषयान् ध्यानगोचरीकृत्य क्रियमाणे कर्मणि न कदापि वैफल्य-सम्भावनेति ॥ २१८ ॥

अयुक्तक्रियाविषये प्रोच्यते—

## आनन्त्यमयुक्तायाः ॥ २१९ ॥

अयुक्ताया अयुक्तक्रियाया आनन्त्यमनन्तशाखासंयुक्तत्वम्, अयुक्तक्रियापरिणामोऽनन्तशाखायुक्त इत्यर्थः। आध्यात्मिकेन भावेन, धर्मेण मोक्षलक्ष्येन वा संबद्धा युक्तक्रियेत्युच्यते। यद्यपि युक्तक्रियायामप्यधिकारभेदोऽवश्यमेव, किन्तु तत्पद्धतिरेकैव। तद्विपरीताया अयुक्तक्रियायास्तु बहुशाखाभेदभिन्नत्वादानन्त्य-मवधेयम्। यतो हि अयुक्तक्रियाया धर्मस्य मोक्षसिद्धान्तस्य नितरां राहित्यम्, तत्र केवलमिन्द्रियसेवाजनितार्थकामादीनामेव प्रेरणा। द्विविधमिदं लक्ष्यमनुसृत्य कर्त्तुर्बुद्धिरपि द्विविधा ज्ञेया। प्रोक्तं चात्र विषये गीतोपनिषदि—

"व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्" ॥ इति।

आत्मनोह्येकत्वादद्वितीयत्वाच्च सर्वा अध्यात्मोन्मुखप्रवृत्ति-कारिण्यः क्रिया युक्ता इत्यतस्ता ऊर्द्ध्वगामिभावसंयुक्ताः। यद्यपि युक्तक्रियायां मोक्ष एव प्रधानं लक्ष्यम्, परमभ्युदयसम्बन्धात् तत्राधिकारतारतम्यमपि सम्भवति। अस्तु, युक्तक्रियागतिस्तु प्रकारान्तरेणैकपरिपाटीसंवलितैव वेद्या। परन्त्वेतत्सूत्रवर्णिताया अयुक्तक्रियाया गतिस्तु तद्विपरीतेति न सन्देहः। यतस्तत्राभ्यु-

दर्यनिःश्रेयसप्रदस्याध्यात्मिकलदयस्याभाव एव। यद्वद् विद्याराज्यमेकाद्वितीयात्मानुसन्धानपरम्। अविद्याराज्यमनन्तवैचित्र्यपरिपूर्णसुखदुःखात्मकभोगस्वरूपम्। तद्वदेवायुक्तक्रियाऽनन्त-वैचित्र्यपूर्णावस्था संवलिताऽभ्युपगन्तव्या ॥ २१९ ॥

इदानीं प्रसङ्गाद् भोगरीतिरुदीर्यते—

## द्विविधा भोगनिष्पत्तिः ॥ २२० ॥

भोगस्य निष्पत्ति द्विप्रकारा वेद्या। क्रियाया मौलिकं भेदं प्रतिपाद्य सूत्रकारेण महर्षिणा भोगस्य मौलिको भेदः प्रोच्यते। यत्र क्रिया, तत्र प्रतिक्रियाऽपि नूनं भाविनी। यत्र कर्म, तत्र कर्मफलमपि नूनं भावि। मौलिकं विज्ञानमनुसृत्य स च कर्मफलभोगः श्रेणीद्वयेन विभक्तुं शक्यते, द्वाभ्यामप्यन्तःकरणशरीराभ्यां क्रिया सम्पाद्यते। यतोह्यन्तःकरणप्रेरणामन्तरेण स्थूलं शरीरं नैव क्रियां कर्तुं प्रभवति विना चान्तःकरणसाहाय्यं स्थूलशरीरं भोगनिष्पत्तिं कर्तुं नैव शक्नोति। अन्यच्चान्तःकरण एव स्थूलशरीरभोगचरितार्थता सम्भवा। उदाहृत्येदमवगन्तुं शक्यते यन्मूर्छितस्य निद्रितस्य वा व्यक्तिविशेषस्य देहाध्यासशून्यस्य शरीरे चन्दनलिप्तेऽपि चन्दनभोगसमाप्तिर्न जायते, तथा च केवलेन मनसैव कृते पानीयपाने तृषितव्यक्तितृषाविकलता न प्रणश्यति, तद्वदेव भोगनिष्पत्तिसिद्धये शरीरान्तःकरणयोरुभयोरेवावश्यकत्वम्। भोगरीतिरपि द्विप्रकारैव सिद्धा ॥ २२० ॥

प्रसङ्गादुच्यते—

## त्रयोगुणभावा धर्मकर्मवैचित्र्ये निदानम् ॥ २२१ ॥

त्रयोगुणास्त्रयोभावाश्च धर्मकर्मवैचित्र्ये कारणम्। सत्त्वं रजस्तमश्चेति त्रयो गुणाः प्रकृतेः, पुरुषस्य चाध्यात्माधिदैवाधिभूतस्वरूपास्त्रयो भावाः स्वाभाविकाः। अत एव सर्वे पदार्था निखिला-

वृत्तयश्च त्रिगुणैस्त्रिभावैश्च सम्बन्धनिबद्धाः। सर्गस्य प्रत्येकमप्यङ्ग-प्रत्यङ्गं स्वभावत एव त्रिगुणत्रिभाववशेन स्वरूपपार्थक्यं धत्ते। न कोऽप्येताद‍ृशो विषयो यस्य सम्बन्धस्त्रिगुणै स्त्रिभावैर्वा न स्यात्। अतो जडचेतनधारको धर्मो जडायां चिन्मय्यां च प्रकृतावनुस्यूत-स्वरूपः, सृष्टिस्थितिलयकारणस्वरूपं कर्म च, द्वाविमौ त्रिगुण-त्रिभावसम्बन्धवन्तौ न भवितुमर्हतः पृथग्भूतौ। सुतरां त्रयाणां भावानां च घातप्रतिघाताभ्यां धर्मस्य कर्मणश्च स्वरूपमनन्तवैचि-त्र्यपरिपूर्णं भवितुमर्हतीत्यत्र नास्ति कश्चनापि सन्देहलेशः। उदाह्रियतेऽत्र यद् भोजनमेकं कर्म, तच्च द्रव्यशुद्धिविचारेण क्रिय-माणं सात्त्विकम्, स्वादविचारतो राजसिकम्, विचारशून्यमनर्गलं च तामसिकम्। एवमेव यज्ञशेषभोजनमध्यात्मशुद्धिप्रदम्, साम्प्र-दायिकविचारेण स्वेष्टदेवताप्रसन्नतासम्पादकमधिदैवशुद्धिप्रदम्, केवलं शरीरनैरोग्यविचारेण क्रियमाणमधिभूतशुद्धिसम्पादकं मन्यते, तथैव दानमप्येकं धर्माङ्गम्। ततश्च केवलं कर्त्तव्यबुद्ध्या दीय-मानं सात्त्विकम्, फलावाप्तिकामेन दीयमानं राजसिकम्, अविचार-पूर्वकमनर्गलरीत्या दीयमानं तामसिकं गीयते। तथा च तदेव दानं जगद्ब्रह्मस्वरूपमवधार्य क्रियमाणमध्यात्मशुद्धिकारकम्, स्वदेशस्वजातिस्वेष्टदेवस्वपितृनिमित्तकमधिदैवशुद्धिसम्पादकम् यच्च केवलं स्वशरीरमेव लक्ष्यीकृत्य क्रियते तदधिभूतशुद्धिप्रदमुच्यते। एवं हि त्रिगुणत्रिभावानां परस्परसम्मिलितघातप्रतिघाताभ्यां धर्मः कर्म च विविधानि स्वरूपवैचित्र्याणि धारयतः॥ २२१॥

अन्यदपि—

**त्रिभावस्य युगपत्कार्यकारित्वं चापि ॥२२२॥**

त्रिभावस्य युगपदेव कार्यकारिता चापि विज्ञेया। शारीरिकं मान-सिकं बौद्धिकं चेति कर्म भावत्रयविभक्तम्। शारीरिके वाचनिकादीनि,

मानसिके संकल्पादीनि, बौद्धिके च ज्ञानविचारादीनि कर्माण्यन्त-र्भवन्ति। सर्वाण्यपि कर्माणि श्रेणीत्रयविभक्तानि। एकतो द्वितीय-श्रेणिगं, द्वितीयतश्च तृतीयश्रेणिगं कर्म क्रमशः सूक्ष्मतरं सूक्ष्मतमञ्च। अतएकस्मिन्नेव काले त्रयाणामपि पृथक्-पृथक्क्रिया प्राकट्यमेति। जगद्धिताय मनुष्येण क्रियमाणं दानं शारीरिकं कर्म, तदर्थं दान-संकल्पः मानसिकं कर्म, जगतः कल्याणाय दानापायनिर्धारणं बौद्धिकं कर्म प्रोच्यते, परन्तु एकता द्वितीयं, ततश्च तृतीयं दानकर्म सूक्ष्मतरराज्यसम्बन्धहेतुना त्रिविधमपि तत् एककालावच्छेदेनापि भवितुमर्हति। एतदुदाहृतिर्विधेया-तथाहि—ब्राह्मणेभ्यो भोजन-दानमाधिभौतिको यज्ञः, यज्ञकर्त्ता उत्तमोत्तमं पदार्थमादाय ब्राह्मणान् भोजयति, तत्तत्पदार्थसंग्रहः सदाचारपुरस्सरं ब्राह्मण-भोजनं शारीरिकं कर्म। तत्र शीलसदाचारादीनां धनव्ययस्य च प्रयोजनीयता। उत्तमया योजनया ब्राह्मणभोजनस्वरूप आधिभौतिको यज्ञः सुसम्पद्यते। परन्तु तस्मिन्नेवावसरे यज्ञानुष्ठातरि मानसिकं बौद्धिकं कर्मापि समुत्पत्तुमर्हति। ब्राह्मणानां बाह्यचेष्टासु प्रतिकूलम-नुकूलं वा लक्ष्यसंस्थापनं मानसिकं कर्म, तथैव तत्र पात्रापात्रविचारो बौद्धिकं कर्म। त्रीण्यप्येतानि कर्माणि युगपदपि भवितुमर्हन्ति, यज्ञफलं सद्गुणितं त्रिगुणितं वा कर्त्तुं प्रभवन्ति ॥२२२॥

प्रसङ्गतः फलोत्पत्तिमूलमभिधीयते—

## वासनैव फलोत्पत्तौ मूलम् ॥२२३॥

फलस्योत्पत्तौ वासनैव मूलं कारणमवगन्तव्यम्। तामसिकं राजसिकं, सात्त्विकं वा अध्यात्ममधिदैवमधिभूतं वा, शारीरिकं मानसिकं बौद्धिकं वा कर्म; सर्वत्रैव सर्वावस्थाया वासनायाः संग्रहस्यावसरे सम्पद्यमाने सति, तथैव वासनया संस्कारस्तेन च कर्म ततश्च कर्मफलमुत्पद्यते। केवलया वासनयैव न फलोत्पत्तिस्त-

थैव वासनारहितेन कर्मणाऽपि नैव फलमुत्पादयितुं शक्यते । अतएव कारणाज्जीवनमुक्तो महापुरुषः वासनरहितः कर्म कुर्वन्नपि कर्मबन्धन-विमुक्तस्तिष्ठति । अतो वासनयैव कर्मफलोत्पत्तिरिति निश्चप्रचम् । यथा किल धान्यवृक्षाणां संगृहीतेषु धान्यबीजेषु नष्टेषु सत्सु धान्य-जातिः प्रणश्यति । किन्तु धान्यबीजैः सुरक्षितैः धान्यवृक्षाणां समुत्पत्तिस्ततश्च फललाभोऽवश्यम्भावी; तथैव वासनाप्रभावादेव फलोत्पत्तिर्नान्यथा । विद्यमानायां वासनायां कर्म फलोत्पत्तिरवश्यमेव बोभूयते ॥२२३॥

अन्यच्च—

## क्रियाप्रतिक्रियाया नूनं भावित्वम् ॥२२४॥

क्रियायाः प्रतिक्रियाऽपि नूनं भाविनी । प्राकृतिकेन स्पन्दनेन क्रियोत्पत्तिः । तच्च त्रिगुणस्वाभाविकतरङ्गतः समुत्पद्यते अतः प्रत्येकस्याः क्रियायाः प्रतिक्रिययाऽपि नूनमेव भवितव्यम् । यथा किल तड़ागस्य जलतरङ्गास्तड़ागतटमासाद्य स्वभावत एव पुनर्नि-वर्त्तन्ते, तथैव प्रत्येकस्यास्त्रिगुणजनितायाः क्रियायाः समाप्तौ तत्प्रतिक्रियोत्पत्तिरपि स्वाभाविकी । अन्यच्च सर्वेषां दृश्यपदार्थानां देशकालपरिच्छिन्नत्वात् तरङ्गाणां निवर्त्तनं सर्वदैव बोभूयमानमास्ते । कर्मस्वरूपिण्य ऊर्मिमाला व्यक्तिगतदेशकालरूपतटमासाद्य पुनर्नि-वर्त्तन्त एव । अयमेव क्रियातः प्रतिक्रियाया अवश्यम्भावी मौलिको राद्धान्तः ॥२२४॥

प्रसङ्गतः फलोत्पत्तिप्रकारः समुपवर्ण्यते—

## शरीरशक्तिप्रकृतिप्रवृत्तिजात्यायुर्भोगाः प्रारब्धजन्याः ॥ २२५ ॥

शरीरं, शक्तिः, प्रकृतिः, प्रवृत्तिः, जातिरायुर्भोगश्च प्रारब्धजन्या

विज्ञेयाः। कर्मफलोत्पत्तिसमये यदा प्रारब्धमुत्पद्यते, तदानीं तेन प्रारब्धेन स्थूलं शरीरम्, स्थूलाः सूक्ष्माश्च शक्तयः, ब्राह्मणादय आर्यानार्याश्च जातयः, आयुः कालः, भोगस्य च विषयाः, प्रकृतिः, प्रवृत्तिश्चेत्यादि जीवः प्राप्नोति। संस्कारस्वरूपबीजतो वासना-साहाय्येन यदा प्रारब्धरूपोऽङ्कुरः समुत्पद्यते तदानीं काले जीवस्य कृते प्रारब्धभोगानुकूलं स्थूलशरीरम् यथोचिता शक्तिः, प्रारब्धानु-कूला जातिः, आयुः, भोगः, अङ्कुरितसंस्कारानुकूलस्थूलशरीरस्य प्रकृतिः, सूक्ष्मशरीरस्य च प्रवृत्तिः समुद्भवति ॥२२५।

प्रसङ्गाद् भोगभेदा निरूप्यन्ते—

## चतुर्विंशतिभेदा भोगस्य ॥२२६॥

भोगस्य चतुर्विंशतिभेदाः समाम्नाताः। यत्र क्रिया तत्र प्रतिक्रियाऽप्यवश्यम्भाविनी। यत्र च बीजं तत्रावसरे सति अङ्कुरो-द्भवो निश्चितः। एवं हि प्रारब्धेन जनितो भोगोऽपि नूनमेव सम्भवः। भोगानामानन्त्येऽपि पूज्यचरणैः कर्मपारदर्शिभिर्महर्षिभि-रनन्तभोगराशयश्चतुर्विंशतिधा विभक्ताः सन्ति। जीवो देहमनो-बुद्धिद्वारा यत् कर्म करोति, तत् प्रतिक्रियास्वरूपेण संस्कारमुद्भा-वयति। तेषु संस्कारराशिषु ये संस्काराः प्रारब्धस्वरूपमासाद्य अङ्कुरोत्पत्तिं प्रकुर्वते, त एव भोगानप्युत्पादयन्ति। इमामतिगम्भीर-कर्मप्रतिक्रियापद्धतिं विशिष्यावधारयितुं सुस्पष्टविवेचनस्यावश्य-कत्वं प्रतिभाति। स्वाभाविकास्वाभाविकरूपेण संस्कारस्य द्वैविध्य-मिति पूर्वमेव प्रतिपादितम्, स्वाभाविकसंस्कारस्य गतिः क्रिया चैकप्रकारा, न तत्र प्रतिक्रियायाः काचिदपि संभावना। तदेतत् पूर्वपादे सम्यग् विवेचितम्। अस्वाभाविकसंस्कारस्य मूलं जैवी वासना। मानवयोनिमधिगतो जीवः पञ्चकोषपरिपूर्णतामधिगच्छन् नवीनवासनोत्पादिकां शक्तिं प्राप्नोति। वासनावैचित्र्यात् प्रतिक्रि-

यायां अपि नितरां वैचित्र्यम् , तेन च फलोत्पत्तिविचित्रताऽपि नूनमवधेया। मानवं दैवं वा देहमधिगच्छन् जीवो यावद् वासनावशीभूतत्वान्मुक्तो न भवति, तावदसौ प्रतिक्षणं वासनां विधत्ते। शारीरिकस्य मानसिकस्य बौद्धिकस्य वा कर्मणोऽनुष्ठानकाले वासनाविजडित-चित्तत्वाच्चेतसि प्रोक्तकर्मबीजरूपं संस्कारं सञ्चिनोति-एतदेवानन्त-जन्मजन्मान्तरीयानन्त-वैचित्र्यपूर्णकर्मवृक्षतः संगृहीतस्य बीजरूपिणः संस्कारराशेर्बीजसंग्रहगृहस्वरूपं सञ्चितं कर्म प्रोच्यते। बुद्धिभेदनिराकृतय एतदुच्यते यद् क्रियास्वरूपं संस्काररूपं वोभयविधमिदं कर्मस्वरूपमेव। उदाहृत्येदमवधेयं यत् ब्राह्मणकर्म, क्षत्रियकर्म, क्रियमाणं सञ्चितं वा कर्मैव कथ्यते। यथा किल शास्त्रे प्रकृत्यर्थमात्मार्थं चात्मशब्दप्रयोगस्तथैव कर्मशब्दप्रयोगो व्यापको वेद्यः। सर्वमेतदवधार्य कर्म-संस्कार-कर्मफलादिशब्दानां प्रयोगो हृदयङ्गमो विधेयः। क्रियाकर्त्तुर्हृदयवासनामनुसृत्य कर्मबीजस्वरूपसंस्कारस्य संग्रहो जायते। संस्काररूपं बीजं यथासमयमङ्कुरितं सत् वृक्षस्वरूपेण परिणमत् फलमुत्पादयति। इयमेव पूर्वक्रियायाः प्रतिक्रिया। फलं भुञ्जानो जीवो वासनावशेन पुनः संस्कारस्वरूपं बीजं संगृह्णाति। अयमेव "बीजवृक्षन्यायस्य" अनाद्यनन्तः प्रवाहः। अयं प्रवाहः सर्वत्रैव स्थले कर्मशब्दवाच्यतामर्हति। शङ्कतेऽत्र जिज्ञासुर्यत् भोगकाले भोगस्य परिसमाप्त्या तत्कर्म हानिः कथं न? समाधत्ते—जीवः स्वपूर्वजन्मार्जितवासनासंस्कारबलेन क्रियायाः प्रतिक्रियामुत्पादयन् फलं भुङ्क्ते। परन्तु फलभोगकालेऽपि तदीयान्तःकरणस्य वासनाजालविजडितत्वात् फलभोगस्वरूपायाः प्रतिक्रियाया अवसानेऽपि नवीना वासना नूतनान् संस्कारान् संगृह्णाति, तया च नूतनवासनया समुत्पन्ना क्रिया पुनः प्रतिक्रियान्तरस्य कारणतां भजते। एष हि क्रियाप्रतिक्रियाक्रमोऽनन्तवैचित्र्यमयभोगशृङ्खलाया नियमितघूर्ण-

यमानस्य गतागतचक्रस्य स्थायितां संरक्षति। क्रियावैचित्र्यानुरूपं प्रतिक्रियावैचित्र्यमिति हेतोर्भोगवैचित्र्यमपि स्वाभाविकमेव। तथापि पूर्ववर्णेषु काळदर्शि-महर्षिभिर्भोगश्रेण्या निर्धारिताः। ताश्च भागश्चतुर्विंशतिप्रकाराः, येषां दिग्दर्शनमग्रे क्रियते ॥२२६॥

इदानीं भोगविस्तृतिं वर्णयति—

## सुखिदुःखिज्ञानिमूढविकृताङ्गतया मानवानाम् ॥२२७॥

सुखिदुःखिप्रभृतिभेदेन मानवानां पञ्चविधा भोगा निर्णीताः। प्रकृतेश्चतुर्विंशतिभेदानुसारं भोगा अपि दर्शनशास्त्रकारैः सर्वाधिकारित्वाधाय चतुर्विंशतिधा विभक्ताः। यद्यपि कर्मवैचित्र्यमनुसृत्य भोगवैचित्र्यमप्यनन्तं स्वाभाविकम्, तथापि यथासम्भवं तद्गोत्रभेदान्नवबोधयितुं भोगानां चतुर्विंशतिश्रेण्या निर्धारिताः। तेषु मानवपिण्डश्रेणीनामनुसारतो मानवीया भोगा अपि पञ्चप्रकारा एव। सुखिनां मनुष्याणां भोगाः दुःखिनां चापि भोगाः, एतादृशमनुष्यभोगाः स्वर्गनरकसम्बन्धेनावधारयितुमुचितास्ते च स्वाभाविका एव। तृतीया ज्ञानिनां भोगः। ज्ञानिनो मानवास्तु निजज्ञानद्वारा स्वीयं भोगं स्वस्थयन्ति। चतुर्थो मूढमानवानां भोगः। मूढमानवैर्निजभोगावगमो न कर्तुं पार्यते। पञ्चमो विकृताङ्गानां मनुष्याणां भोगः। प्रणष्टकर्मज्ञानेन्द्रियाणामतो विकृताङ्गमानवानां भोगेऽनेकविधं वैचित्र्यं दृष्टिगोचरीभवति ॥२२७॥

अन्यच्चाभिधत्ते—

## नित्यनैमित्तिकतिर्यक्तया देवानाम् ॥२२८॥

नित्यनैमित्तिकतिर्यक्स्वरूपत्वाद् देवानां भोगस्तु त्रिविधोऽवधेयः। ब्रह्माण्डस्य सर्वलोकभोग्येषु स्वर्गसुखभोगः सर्वतो वैचित्र्यपूर्णोऽपि तिसृभिः श्रेणिभिर्विभक्तः। स्वर्गीयदिक्पालादिपदधारिणां

भोगः स्वर्गगतानां स्वर्गीयं सुखं भुञ्जानानां जीवानां भोगः, स्वर्गस्थ नानाविधभूतसंघानां भोगश्चेति। स्वर्गीया इन्द्रादयो देवपदधारिण ऐशकर्मफलेन स्वर्गीयसुखभुक्तपदे प्रतिष्ठितास्तत्रत्यं भोगं प्रकुर्वाणाः प्रायशोऽभ्युदयं प्राप्नुवन्ति। एष किल स्वर्गसुखस्यैकः प्रकारः। तद्वदेव शरीरपातानन्तरं क्रियते कालाय मृत्युलोकतः स्वर्गं गत्वा पुण्यात्मानो जीवाः स्वर्गसुखमनुभवन्ति, स च स्वर्गसुखस्य द्वितीयः प्रकारः। स्वर्गीयाणां पारिजातादिवृक्षाणां पक्षिणां, नानासुखभोगिनां जीवानां च यो भोगः, स च स्वर्गसुखस्य तृतीयः प्रकारोऽवगन्तव्यः॥२२८॥

अन्यदप्यभिधीयते—

## तद्वदेव नारकिनाम् ॥२२९॥

नरकनिवासिनामपि भोगस्त्रिप्रकारक एव। शरीरान्तरस्थानन्त दुःखभोगस्थानं नरकलोक एव। पापकर्माचरतो जीवस्य नरकलोकप्राप्तिः। नरकलोकस्यापि रौरव-कुम्भी-पाकासिपत्रादयोऽनेके भेदाः सन्ति। तत्रत्यो भोगोऽपि त्रिधा विभक्तः। तत्रत्यं प्रबन्धमाचरतां नरकपदाधिकारिणामेकः, मृत्योरनन्तरं पापकर्मफलभोगाय ये मृत्युलोकान्नरकलोकं प्रतिपद्यन्ते, तेषां द्वितीयः, नरकस्थितकाकगृध्रश‍ृगालादीनां तिर्यग्योनिजीवानां तृतीयः, एवं किल नरकस्थितानां भोगोऽपि त्रिप्रकारकः ॥२२९॥

अन्यदपि—

## पिण्डत्रयानुसार्यवताराणाम् ॥२३०॥

अवताराः किल त्रिविधपिण्डमाश्रित्य सम्भवन्ति। रामकृष्णादयो मानवपिण्डधारिणः, मत्स्यकूर्मादयः सहजपिण्डधारिणः, नृसिंहहयग्रीवादयो देवपिण्डधारिणः। अवतारस्य भोगेषु वैशिष्ट्यमिदं यत् तस्य भोगसम्बन्धो ह्येकत्र देहधारिणा साकमन्यत्र

यस्यावतारस्तेन सार्द्धमपि बोभवीति। अतोऽवतारभोगेषु वैचित्र्यमापतति। एतद्भोगवैचित्र्यमपि श्रेणीत्रयविभक्तम् ॥२३०॥

अन्यच्च—

## तद्वदारूढपतितानाम् ॥२३१॥

आरूढपतितानां जीवानामपि भोगस्त्रिविध एव। देवा आसुरमानव्यश्च योनय आरूढपतिता भूत्वा सहजमानवदेवनामकं पिण्डत्रयमाश्रयन्ति। देवपिण्डस्याप्यनेक उच्चावचा विभागाः। तेपूच्चाधिकारता निम्नाधिकारे समागता आरूढपतिताः सम्भवितुमर्हन्ति। देवपिण्डधारिणां तिर्यग्योनावागमोऽपि सम्भवः। यमलार्जुनप्रभृतिदेवानां मृत्युलोके वृक्षयोनिलाभ एतस्योदाहरणमवधेयम्। एवमारूढपतितानां देवानां जयविजयप्रभृतिमानवपिण्डप्राप्तिः पुराणशास्त्रेषु सुप्रसिद्धा, तथैव मृत्युलोके आरूढपतितमानवानामपि तिर्यग्योन्यधिगमप्रमाणानि पुराणेषु समुपलभ्यन्ते। भरतस्य मुनेर्मृगशरीरधारणम्। पिङ्गाक्ष-विराध-सुपुत्र-सुमुखादिनामकानां मुनिपुत्राणामारूढपतितत्वात् पक्षिशरीरलाभः। सुतरामारूढपतितानां श्रेणीत्रयत्वात् तद्भोगा अपि त्रिधा विभक्ताः ॥२३१॥

अन्यदपि—

## आतिवाहिको द्विधा स्वर्गनरकाभ्याम् ॥२३२॥

स्वर्गनरकसम्बन्धेन आतिवाहिकभोगोऽपि द्विप्रकारकः। एकस्माल्लोकाल्लोकान्तरं प्रस्थितेन जीवेन यद् भङ्गुरं शरीरमवाप्यते, येन च पुण्यात्मा सुखं पापात्मा च दुःखमनुभवन् लोकान्तरं प्रतिष्ठते, जीवगतिरियमातिवाहिकीत्युच्यते। अस्यामवस्थायां जीवेन यत् स्थूलं शरीरमासाद्यते, तदातिवाहिकमुदीर्यते, तत्त्वदर्शिभिर्मुनिभिरेतदवस्थाभोगो द्विधा विभक्तः। नरकगमनकालिको

दुःखमयः, स्वर्गप्रस्थानसामयिकः सुखमयश्च । शङ्कते—मृत्युलोकशरीरेणैव सह येषां गतिः स्वर्गलोके जायते, यथा च धर्मराजयुधिष्ठिरार्जुनादीनां राजर्षिमहर्षीणां बभूव, तत्र किमवधेयम् ? समाधत्ते एवमलौकिकशक्तिविशिष्टानां मृत्युलोकतो लोकान्तरगमनसमये दैवसाहाय्येन तदीयशरीरपरमाणुषु परिवर्त्तनत्वाद् विशिष्टावस्थाधिगमः । अयमप्यातिवाहिकगतेरेकः प्रकारो विज्ञेयः । स्वर्गलोकस्तैजसतत्त्वप्रधानो मृत्युलोकस्तु पार्थिवतत्त्वप्रधानः । तैजसतत्त्वलोकेषु पार्थिवतत्त्वप्रधानं शरीरं तदैव गन्तुमर्हति यदा तदीयदेहपरमाणुषु निश्चितं परिवर्त्तनं भवेत् । देवानां साहाय्येन नायमसम्भवः । दार्शनिकं विज्ञानमेतन्निश्चिनोति यदसाधारणदशायां देवसाहाय्येन स्थूलशरीरे तादृशः परिणामो जायते, येन पार्थिवस्थूलदेहधारी जीवो मृत्युलोकतो भूर्भुवर्लोकमतिक्रामन् स्वर्लोकमधितिष्ठति । अत्रत्यं स्थूलदेहं पार्थिवं सर्वथा परित्यज्य न लोकान्तरे तद्गतिः । अत एतदङ्गीकर्त्तव्यमेव यत् तद्गतिकाले देवतासहायतया तदीयस्थूलशरीरे तादृशः परिमाणो भवति, येन जीवो लोकान्तरं गच्छेत् । परिणामोऽयं तदर्थमातिवाहिकदेहकृत्यं विधत्ते ॥ २३२ ॥

अन्यच्च—

## प्रेतानां द्विधा पदनिमित्ताभ्याम् ॥ २३३ ॥

नित्यनैमित्तिकभेदेन प्रेतानामपि भोगो द्विविधः । प्रेतलोकनिवासिनां भोगो द्विधा विभक्तुं शक्यते । प्रेतलोकपदधारिणां वेतालादीनां भोगः, प्रेतलोकगामिनां जीवानां भोगः । प्रेतलोकस्य पदधारिणो वेतालादयः प्रेतलोकमुपस्थितानां नैमित्तिकप्रेतानां संरक्षणं कुर्वन्तो दण्डयन्तश्च तान् तदधिकारमनुसृत्य सञ्चालयन्ति । अतः प्रेतलोक-

गामिनां जीवानां साधारणभोगापेक्षया तेषां भोगो विशिष्टप्रकारोऽवधेयः ॥ २३३ ॥

अपरमपि—

भक्तज्ञानिनोरेकैकः ॥ २३४ ॥

भक्तस्य ज्ञानिनश्च भोग एकैको विज्ञातव्यः। ब्रह्माण्डस्य भोगश्रेणिपर्यालोचनावसरे तदिदमभ्युगन्तव्यं यत् पञ्चमषष्ठसप्तमानां जनतपःसत्यलोकानां ब्राह्मस्वर्गापरनामकानां शास्त्रप्रतिपादितब्रह्मलोकानां बहुविधोपासनालोका ज्ञानलोकाश्चापि विद्यन्ते। तत्र निवासिनां महात्मनां भोगो द्विधा विभक्तुं शक्यते। सालोक्यसामीप्यादिगतिमधिगतवतां भोग उपासनासम्बन्धीयभोगदृष्टान्तः, एतादृशमहात्मनां भोगोऽतीव विलक्षणः। ज्ञानिमहात्मनां भोगोऽप्यतीव विचित्रः। देवलोकस्थदेवर्षिभोगोऽप्येतच्छ्रेण्यन्तर्गत एव। एवं किलोपासकभक्तानां ज्ञानिनां च भोगः पृथक् पृथगेकैको विज्ञेयः ॥ २३४ ॥

अन्यदप्युच्यते—

स्त्रीणामेक एव वैलक्षण्यात् ॥ २३५ ॥

विलक्षणस्य भावो वैलक्षण्यं तस्मात् स्त्रीणां भोगः एकप्रकारक एव। चतुर्विंशतिप्रकारभोगश्रेणीषु त्रयोविंशतिसंख्याकान् भोगप्रकारानुपवर्ण्य महर्षिणा सूत्रकारेण चतुर्विंशो भोगप्रकारो वर्ण्यते। स्त्रीणां भोग एकः स्वतन्त्रश्रेणिगः। इदं निर्णीतपूर्वं यत् सर्गेऽत्र स्त्रीधारा पुंधारा चेति पृथक् पृथग्धाराद्वयं प्रवहति। एकस्यामाकर्षणशक्तिरपरस्यां च विकर्षणशक्ति विद्यते। एका क्षेत्ररूपा द्वितीया बीजस्वरूपा। अतोह्युभयोरेव भोगः स्वतन्त्रस्वरूप इत्यत्र नास्ति सन्देहः। कारणादस्मात् स्त्रीजातीयो भोगः स्वतन्त्रश्रेण्यन्तर्गत इति नूनमभ्युपगन्तव्यमेव ॥ २३५ ॥

प्रसङ्गादुच्यते—

**अवान्तरभेदादनेकधा ॥ २३६ ॥**

दार्शनिकविवेकमनुसृत्य भोगस्य पूर्वोक्तस्वरूपे चतुर्विंशतिप्रकारे सत्यपि अवान्तरभेदादसंख्यभेदा वेद्याः। तथाहि-स्त्रीसंस्कारानुसारं स्त्रीभोगस्यैकत्वेऽपि त्रिलोकपवित्रकारिण्याः पतिव्रताया भोगः, मातुर्भोगः, पत्न्या भोगः; अपवित्राया वेश्याया भोगः इत्याद्यवान्तरभोगानामनेकश्रेण्यो भवितुमर्हन्ति। एवं हि देवपदधारिणां देशकालपात्रभेदेनानेके भेदा भवितुमर्हन्ति। यथा च चतुर्विधभूतसञ्चालकपदधारिणां विभिन्नपीठरक्षकदेवपदधारिणां दिक्पालादीनां च भोगेषु बहुविधत्वं व्यवधानं च सुतरां संभाव्यमेव। एवंप्रकारेणावान्तरभेदेन भोगानामगणितश्रेण्यो भवितुमर्हन्ति ॥२३६॥

प्रसङ्गादुच्यते—

**प्रारब्धमप्येवं भोगवैचित्र्यात् ॥ २३७ ॥**

भोगवैचित्र्येण हेतुना प्रारब्धभोगस्याप्यनेके अवान्तरभेदा भवितुमर्हन्ति। इदं बहुत्र दृश्यते यत् प्रारब्धकर्मणा विशेषधनप्राप्तौ सत्यां केचित् पापे कतिचित् पुण्ये धनं व्ययीकुर्वन्ति बहवश्च सङ्कोच तद्धनं परेषां भोगाय संरक्षन्ति। यथेष्टं सदुपदेशदानेऽपि धनसञ्चयकारको धनिकवर्गस्तस्य धनस्य व्ययं नानुतिष्ठति। एवं किल विद्या-बल-विविधाश्वैश्वर्यादिप्राप्तेरुदाहरणेनैतत्सूत्रविज्ञानमवधारयितुं योग्यम् ॥ २३७ ॥

तत्कथं सम्पद्यत इति व्याहरति—

**सर्वेऽपि देहाभ्याम् ॥ २३८ ॥**

कर्मविपाकस्वरूपाः सर्वेऽपि भोगाः स्थूलं सूक्ष्मं च शरीरं द्वारीकृत्य सम्पद्यन्ते। प्रथमतः साधारण्येन स्थूलं सूक्ष्मं चेत्युभयं

शरीरं भोगसम्पन्नतासाधकम्। भोगसम्बन्धे स्थूलं शरीरमायोजकमन्तःकरणं चानुभावकमित्युक्तपूर्वम्। नियमोऽयं साधारणः। असाधारणभोगा अन्तःकरणद्वारैव सम्पद्यन्ते। अत एव शारीरिको रोगो व्याधिरान्तःकरणिकश्चाधिरित्युच्यते। तदिदमशुभभोगोदाहरणम्। शुभभोगस्योदाहरणे पूजाप्रसादो धर्मप्रसादश्च वेद्यः। इष्टदेवसम्मुखसमर्पितं मिष्टान्नं शरीरद्वारैव प्राधान्येन शुभं भोगं प्रयच्छति, परन्तु धर्मसाधनादिपुण्यकर्मणां शान्तिसुखस्वरूपः सुखभोगोऽन्तःकरणे समुत्पद्यते। सर्वेषु लोकेषु शरीरद्वयसत्ताया इदमेव कारणम्। मृत्युलोके यथा पार्थिवं शरीरं सूक्ष्मशरीरेण सह तिष्ठति, तथैव लोकान्तरेषु तत्तल्लोकोपयोगि तत्तत्तत्त्वप्रधानमन्यविधं स्थूलशरीरं तिष्ठति ॥ २३८ ॥

इदानीं प्रसङ्गतो जन्मान्तरगतिर्निर्णीयते—

**सूक्ष्मस्य गतिरातिवाहिकी ॥ २३९ ॥**

आतिवाहिकी गतिः सूक्ष्मशरीरस्यैव भोगनिष्पत्तेः स्थूलेन सूक्ष्मेण शरीरेण सम्पद्यमानत्वात् अत एवेयं शङ्का समुदेति यत् उभयशरीरयोः परस्परं घनिष्ठसम्बन्धत्वात् मृत्योरनन्तरं स्थूलं शरीरमिहैव पतितं तिष्ठति, तर्हि लोकान्तरप्राप्तिः कथमिति चेत्? समाधत्ते-लोकान्तरगमनकाले केवलस्य सूक्ष्मशरीरस्यैवावश्यकत्वम्। यद्यपि स्थूलं शरीरं सर्वेष्वपि लोकेषु पुनः प्राप्यते, यदि चापि द्वाभ्यामेव शरीराभ्यां भोगनिष्पत्तिर्जायते, लोकान्तरप्राप्तिकाले स्थूलं शरीरमनावश्यकत्वाज्जीर्णवस्त्रवत् परित्यक्तं यत्र समुत्पन्न तत्रैव पतितं तिष्ठति। सूक्ष्मं शरीरेणैव जीवो लोकान्तरं प्रतिष्ठते। मृत्युकाले सूक्ष्मशरीरधारिणं जीवं यत्र संस्थाप्य लोकान्तरं प्रापयन्ति, तदातिवाहिकं शरीरमुच्यते तद्गतिरातिवाहिकी। यथा किलाच्छादनिकायां पत्रं पिधाय प्रेष्यते तथैवातिवाहिके देहे

संस्थाप्य जीवं सूक्ष्मशरीरस्थं देवा लोकान्तरं गमयन्ति। अतिवाह्यत्वादेवातिवाहिकमुदीर्यते ॥ २३९ ॥

तद्गतिं स्पष्टयति—

## सा पितृलोकादौ ॥ २४० ॥

सा आतिवाहिकी गतिः पितृलोकादौ बोभवीति। प्रेतनरकपितृदेवासुरलोकेषु आतिवाहिकी गतिर्जायते। मृत्युलोकेऽपि सा सम्भवति पुनरावृत्तिकारिणी, मरणानन्तरं जीवो दुःखभोगाय प्रेत-नरकलोकयोः सुखभोगाय च पितृलोके भुवःस्वरादिदेवलोकेषु, किम्वाऽतलवितलादिष्वसुरलोकेषु च, अथवा मिश्रभोगाय कर्म कर्त्तुं मृत्युलोकेऽत्र समागच्छन्ति। आतिवाहिकदेहसाहाय्येनैवैता गतयो भवन्ति। सूत्रेऽत्र पितृशब्दोपादानप्रधानकारणमेतदेव यत् मृत्युलोकस्य साधारणसुखप्रदः पितृलोक एव, प्रेतनरकपितृलोकराजस्य यमस्य राजधानी पितृलोक एव वर्त्तते ॥ २४० ॥

आतिवाहिकी कस्य प्रबन्धेन भवतीत्युच्यते—

## देवाधीना ॥ २४१ ॥

आतिवाहिकी गतिर्देवाधीना वेद्या। अत्र देवाः साहाय्यमाचरन्ति। प्रेतलोकं नरकलोकं वा प्रापयितुं यमदूतसंज्ञकाः क्षुद्रदेवाः सहायकाः। अन्यत्र गतौ देवदूतनामकाः सहायतां विदधते। लोकान्तरप्राप्तिकाले सूक्ष्मशरीरविशिष्टजीवानामतिदुर्बलत्वात्पराधीनत्वाच्च ते परसाहाय्यमन्तरेण नान्यत्र गन्तुं प्रभवः। तदानीमुपर्युक्तदेवाः पत्राधान्यां पत्रमिवाऽऽतिवाहिकेषु देहेषु जीवान् संस्थाप्य लोकान्तरमानयन्ति, मृत्युलोके स्थूलशरीरं त्यक्त्वा, मृत्युलोक एव जीवानां जन्मकालेऽपि एवमेव दैवसाहाय्यमपेक्षितम् ॥ २४१ ॥

प्रसङ्गतो मानवानां जन्मविषयकं विज्ञानमुपवर्ण्यते—

## पितृतन्त्रमाधिभौतिकम् ॥ २४२ ॥

आधिभौतिकं पितॄणामधीनं ज्ञातव्यम्। देवगणा यद्यातिवाहिके शरीरे सन्निधाय सूक्ष्मशरीरविशिष्टजीवं लोकान्तरं प्रापयन्ति, मृतिभुवनेऽपि मातृगर्भमधिगमयन्ति चेत्तर्हि मृत्युलोकस्य स्थूलशरीरं केन निर्मीयत इत्यादिजिज्ञासुसंशयनिराकृतये पूज्यपादमहर्षिसूत्रकृता सूत्रमिदमाविष्कृतम्। पितृवीर्यं द्वारीकृत्य देवगणाः सूक्ष्मशरीरधारिणं जीवं मातृगर्भमानयन्तीति निश्चितमेव। जीवस्य स्थूलशरीरं मातृगर्भे मातुः पितुश्च रजोवीर्यद्वारा पितृभिरेव निर्मीयते। अर्यमादयो ह्यनेके नित्यपितृपदाधिष्ठातारः पितृलोकवासिनो देवविशेषाः, ये किल जगत आधिभौतिकप्रबन्धनिरीक्षकाः एतेषां द्वारैव मातृगर्भे जीवस्य यथोचितभोगनिष्पत्तये उपयुक्तं स्थूलशरीरं निर्मितं जायते। सुतरां मानवस्थूलशरीरनिर्माणं पितृद्वारा सम्पद्यते सूक्ष्मदेहधारिणं जीवं च यथाकालं तद्देहे देवगणा नयन्ति। तदानीं जीवोऽसौ शरीरत्रयविशिष्टो भूत्वा नूतनकर्मानुष्ठानाय प्राचीनकर्मफलोपभोगाय चोपयोगितां प्रपद्यते। एतदेव मानवजन्मग्रहणरहस्यम् ॥ २४२ ॥

मुक्तिप्रसङ्गशङ्कां समाधत्ते—

## कारणमृष्यायत्तम् ॥ २४३ ॥

कारणशरीरम् ऋषीणामधीनं विज्ञातव्यम्। स्थूलसूक्ष्मशरीरगतीनां प्राधान्येन केवलं बन्धनभोगनिमित्तत्वे सति भोगोपरतिजन्यमुक्तिनिमित्तं किं कस्यापि शरीरस्योपयोगित्वं नास्ति? द्विविधशरीरगतिहेतुकं देवपितृसाहाय्यरहस्यमवगतम्, तृतीयस्य कारणशरीरस्य गतिविषयकम् ऋषिसाहाय्यमपेक्षितं न वेति शङ्कासमा-

हितये महर्षिः सूत्रकारः सूत्रमिदं व्याजहार। वस्तुतः कारणशरीर-गतिः ऋषीणामधीनतां भजते। कारणशरीरमेव जीवानां जीवत्व-स्थापनसंरक्षणनिदानम्। कारणशरीरदशा सदा समानैव तिष्ठति, केवलं यदा जीवोऽज्ञानभूमिमतिक्रम्य ज्ञानभूमिमासादयति, तदानीं कारणशरीरे ईषत्क्रमोन्नतिर्जायते। समुन्नतस्य ज्ञानिनः कारण-शरीरं रूपान्तरं दधत् गत्यन्तरमधिगच्छति, अवसाने च शक्तिहीनं जायते। तदानीं काले ज्ञानवान् महापुरुषः शरीरत्रयतः पृथगात्मा-नमनुभवति। अतोऽत्र ज्ञान भूमौ समागतस्य ज्ञानिनः एवम्विधोन्नति-शीलकारणशरीरगतिर्दृश्यते। इयं गतिर्हि ज्ञानाधिष्ठातॄणाम् ऋषीणा कृपयैवासाद्यते ॥ २४३ ॥

अन्यदप्युच्यते—

**ऋते ज्ञानान्न मुक्तिः ॥ २४४ ॥**

ज्ञानं विना मुक्तिरसम्भवा। जीवो यदा सप्ताऽज्ञानभूमीरतिक्रम्य सप्तज्ञानभूम्यधिकारमासादयति, तदा स्वाक्रमात्मज्ञानक्रमोन्नत्या कारणशरीरे परिणामः प्रादुर्भवति। अन्ते चात्मज्ञानपरिपूर्णतयैव सह शक्तिहीनं जायते कारणशरीरम्। तदानीं काले स्वरूपज्ञानद्वारा मुक्तिपदमुदेति। ज्ञानमेव मुक्तिनिदानम्। स्वरूपज्ञानोदये कारण-शरीरे ऋषिकृपाहेतुकः सत्परिणाम आवश्यकः, परमिदमवश्य-मवधेयं यत् मुक्तेः साक्षात् कारणमात्मज्ञानमेव। एतादृशि स्थिरधारणायां जातायां साधको लक्ष्यभ्रष्टो भवितुं नार्हति ॥२४४॥

सम्प्रति शरीरद्वयस्यावश्यकतां साधयति—

**स्थूलसूक्ष्मे मुख्यावलम्बनेऽभ्युदयस्य ॥ २४५ ॥**

स्थूलं सूक्ष्मं च शरीरमभ्युदयस्य मुख्यमवलम्बनम्। मुक्ति-सम्बन्धे प्रधानभूते कारणशरीरे सत्परिणामः पुरुषार्थातीतः।

स च ज्ञानोन्नत्यैव सह सम्भवः। परन्तु कर्मणः कर्त्तुः पुरुषार्थस्य च विचारेणाभ्युदयनिःश्रेयससिद्धिस्वरूपधर्मसाधने स्थूलसूक्ष्मे शरीरे प्राधान्येनावलम्बनीये। अर्थकामादेरिच्छुकोऽभ्युदयाकाङ्क्षी साधको वा स्यात्, मोक्षार्थी साधको वा भवेत्, तदीया क्रमोन्नतिस्तदैव भवितुमर्हति, यदा तत्कर्मानुष्ठाने स्थूलं सूक्ष्मं च शरीरं साहाय्यमाचरेत्, वस्तुतस्तु निःश्रेयससाक्षात्कारणभूतेन ज्ञानेन जातेनाभ्युदयविचारतः स्थूलं सूक्ष्मं च शरीरं प्रधानरूपेणावलम्बनीयम् ॥ २४५ ॥

अन्यदप्यभिधत्ते—

तद्धेतुत्वमुभयसंस्कारस्य ॥ २४६ ॥

उभययोः स्थूलसूक्ष्मयोः शरीरयोः संस्कारस्य तद्धेतुत्वमभ्युदयहेतुत्वमित्यर्थः। स्थूलेन सूक्ष्मेण च शरीरेण कर्मसंग्रहे प्राधान्येन साहाय्यं लभ्यते। वस्तुतो द्वे एते कर्मणोऽवलम्बनभूते। मनुष्यतो निम्नश्रेणिजीवेषु चतुर्विधभूतसंघेषु द्वयोरेतयोः साहाय्येन सहजेन कर्मणा स्वाभाविकस्य संस्कारस्य क्रमाभिव्यक्तिं कुर्वाणो जीवोऽभ्युदयमासादयन्नन्ते मानवयोनिमधिगत्य पूर्णतामवाप्नोति। मानवीये शरीरेऽपि द्वयोरनयोरेव साहाय्येन जीवस्य क्रमाभ्युदयगतिः स्थिर्तिशीला। कारणेनैतेनैव वैदिकदर्शनेष्वपि किमपि दर्शनशास्त्रमिदं शरीरद्वयमेवाङ्गीकरोति। कर्मसंग्रहे कर्मफलभोगेऽप्युभयसहायकत्वम्। प्रारब्धक्रियमाणयोः कर्मणोः सन्धौ साहाय्यमनुष्ठाय द्वेऽप्येते मानवाभ्युदयहेतुतां प्राप्नुतः। एतद्द्वितयेन संस्कारसमूहः संगृहीतः सन् जीवाभ्युदयमातनुते। केवलं भोगनिष्पत्तेरेव न तु, प्रत्युताभ्युदस्याप्येते कारणम् ॥ २४६ ॥

प्रसङ्गतः कर्मसाफल्यहेतुरुच्यते—

श्रेयो न मिथोऽनुकूलत्वाभावे ॥ २४७ ॥

द्वयोस्तयोर्मिथः परस्परम् आनुकूल्यस्याभावे श्रेयान्न भवितुमर्हति। प्रथमावस्थायामभ्युदयोऽन्तिमदशायां च निःश्रेयसम् एव कर्मणः साफल्यम्। कर्मणैव मानवो बन्धनं मोक्षं चाधिगच्छति। कर्मैव मानवमनार्यादार्यं, वैश्यं, क्षत्रियं, ब्राह्मणं क्रमशो विधायान्तेऽन्तिमां ज्ञानभूमिं प्राप्य मुक्तिमधिगमयति। क्रमोन्नतेरियं स्थायिनी गतिः, निःश्रेयसस्योदयश्च तदैव जायते, यदा जात्राऽनुकूलं स्थूलं सूक्ष्मं च शरीरमासादयन् स्त्रीयं संस्कारसमूहं चाऽनुकूलं प्राप्नुयात्। एकस्यानुकूल्ये परस्य प्रातिकूल्ये च विविधबाधासद्भावो मङ्गला-भावश्च। उभयोः प्रातिकूल्ये तु मङ्गले नैराश्यमेव। अतोऽभ्युदय-निःश्रेयसनिमित्तमुभयानुकूल्यं परमावश्यकम्। तदानुकूल्यं परोक्षा-परोक्षरूपतो द्विप्रकारम्। अपरोक्षस्योदाहरणमिदं यत् शरीरद्वयमेव सात्त्विकं शान्तरजसं यथाक्रमं च मलविक्षेपरहितं भवेत्, परोक्ष-स्योदाहृतिरियं यत्—सूक्ष्मं शरीरं शान्तरजसं नास्ति, परन्तु स्थूलं शरीरमकर्मण्यं विद्यते। एवं सति मानवोऽसतः कार्यात् कथञ्चिद् विरक्तिमापद्यते। तदीयोद्ध्र्वगतिश्च स्थितिशीला बोभूयते, अतः केनापि प्रकारेणाभ्युदयमार्गोऽक्षुण्ण एव मङ्गलसाधकः। वस्तुतः परममङ्गलकारी बाधारहिताऽवस्था सैव वेद्या यत्रोभयश्रेणिसंस्कारा धर्मसंग्रहे नूनमानुकूल्यं विदधताम्॥ २४७॥

साफल्यहेतुक्रम उच्यते—

## लोकान्तरे गतिः सूक्ष्मस्य॥ २४८॥

सूक्ष्मस्य शरीरस्य लोकान्तरे गतिः सम्पद्यते। अभ्युदय-निःश्रेयसप्राप्तिरूपमङ्गलहेतवे सूक्ष्मं शरीरं जीवं लोकान्तरं नेनीयमानं साहाय्यं विधत्ते। उदाहरणरूपेणैतदवधेयं यत् पापं संगृह्णतो जीवस्य पापक्षालनाय सूक्ष्मशरीरं प्रेतलोके नरकलोके वा नीत्वा तत्र पापभोगं कारयित्वा वह्नौ सुवर्णमिव शोधयित्वा पुनः कर्मभूमौ मृत्युलोके जीवमानीय समुन्नततरस्य कर्माधिकारस्यावसरं प्रयच्छति।

तथा चालौकिकसुखभोगसमीहावतोऽपि समुन्नतिर्निरूप्यते। सुखभोगं समीहमानस्य जीवस्य सूक्ष्मदेहसाहाय्येन स्वर्गादिसुखप्रदलोकेषु गतिः, तेषु च सुखभोगद्वारा वासनानाशे पुनरपि समुन्नततरकर्मसंग्रहाय तस्यैव सूक्ष्मशरीरस्य सहायतया कर्मभूमौ मृत्युलोके प्रत्यागतिः, एवं किल जीवः सूक्ष्मेण देहेन वारं वारमन्यसूक्ष्मलोकेषु गत्वा भोगद्वारा कर्मक्षयं कुर्वन् कर्मभूमावुपढौकमानः पूर्वोक्तरीतिमनुसृत्यैकावस्थातोऽन्यामुत्तमावस्थामधिगत्याभ्युदयमन्ते निःश्रेयसं चावाप्य परममङ्गलरूपं साफल्यमधिगच्छति ॥ २४८ ॥

अन्यदप्यभिधीयते—

## गतिरन्या स्थूलस्य ॥ २४९ ॥

स्थूलस्य शरीरस्य गतिरन्यादृशी प्रोक्ता। कर्मद्वाराऽभ्युदयनिःश्रेयसाधिगमाय स्थूलशरीरं वारं वारं पृथग् भूत्वा जीवस्य मङ्गलं साधयति। सूक्ष्मशरीरं यथा सहैव विद्यमानं जीवं लोकान्तरं नीत्वाऽभ्युदयनिःश्रेयसकारणतां प्रपद्यते, तथैव स्थूलं शरीरमपि मृतं भवत् जीर्णं वस्त्रमिव पृथग् भूत्वा जीवमङ्गलहेतुतां व्रजति। दार्शनिकैस्तु मृत्युर्मङ्गलहेतुराम्नातः। स्थूलस्य सूक्ष्मस्य वा लोकस्य देहत्यागो जीवस्य भविष्यत्क्रमोन्नतेः कारणम्। यतो जीवेन भविष्यति कालेऽभ्युदयनिःश्रेयसाधिगमाय नूतनोऽवसरः समवाप्यते ॥ २४९ ॥

विज्ञानमिदं परिपोषयति—

## श्रुतिप्रामाण्यात् ॥ २५० ॥

श्रुत्या वेदेनापि प्रमाणितत्वात्। श्रुतिरपि तत्प्रमाणयतीत्यर्थः। जन्मान्तरवादस्य सूक्ष्मशरीरलोकान्तरगत्यादि लोकोत्तरविषयस्य च दार्शनिकयुक्त्यासिद्धत्वेऽपि पूज्यपादः सूत्रकृन्महर्षिः श्रुतिप्रामाण्येनापि स्वविज्ञानं परिपोषयति—

"अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसम्भवन्ति । धूमाद् रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान न ते सम्वत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाद् चन्द्रमसमेषसोमो राजा तद् देवानामन्नं तं देवा भक्षयन्ति तस्मिन यावत् सम्पातमुषित्वाथैतमेवाध्वानं पुनः निवर्त्तन्ते ।"

"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येषः देवयानः पन्था इति ।" ॥ २५० ॥

प्रसंगतः शङ्कां समाधत्ते—

स्थूलसूक्ष्मयोः सम्बन्धः ॥ २५१ ॥

स्थूलं च सूक्ष्मं च स्थूलसूक्ष्मे तयोः स्थूलसूक्ष्मयोः शरीरयोः सम्बन्धो विज्ञातव्यः । ननु पूर्ववर्णनमनुसृत्य स्थूलसूक्ष्मशरीरयोः स्वतन्त्रसम्बन्धः, एवं इति जीर्णवस्त्रपरित्यागवत् स्थूलशरीरसम्बन्धाभ्युपगमे स्थूलसूक्ष्मशरीरयोरन्योन्यं किं सम्बन्धाभावो न सिध्यति ? स्थूलशरीरस्य सर्वथा परित्यागे कृते तत्सम्बन्धः किं न तिष्ठति ? एतादृशशङ्कासमाहितये सूत्रकारो महर्षिः एतत्सूत्रम् आविश्चकार । वस्तुत उभयोरेव शरीरयोरतिघनिष्ठः सम्बन्धो विज्ञेयः । स्थूलं शरीरमत्रैव लोके जीर्णवस्त्रवत्परित्यक्तं भस्मसात्सम्पद्यते । सत्यप्येवं पारस्परिकः संस्कारसम्बन्धोऽनन्तरमपि तिष्ठत्येव । स्थूलशरीरसम्बन्धत एव जीवो देहिनमात्मानमभिमन्यते, सूक्ष्मशरीरसम्बन्धेन च देहिनमित्यनुभवति । सुतरां मृत्युलोकं वा, प्रेतलोकं वा, देवलोकं वा अन्यान्यलोकं वा प्राप्तो जीवः स्थूल-

शरीरसम्बन्धादेवात्मानं देहिनमनुभवति । स च मनुष्यलोके मानवं, प्रेतलोके प्रेतं, देवलोके च देवमात्मानमभिमन्यते । आन्तःकरणिकस्य मनसो बुद्धेश्च सद्भावादेवासौ देहं त्यनुभवति । अतो हीदमभ्युपगन्तव्यमेव यदुभयोः स्थूलसूक्ष्मयोः शरीरयोरतिगरीयान् सम्बन्धो वर्तत इति । अत एव कारणान् स्थूलशरीरपरित्यागवासना नोदेति ॥२५१॥

शास्त्रीयां मीमांसां विधत्ते—

**जान्हवीयोगेनाद्यस्य परस्य संस्कारदर्शनात् ॥ २५२ ॥**

प्रथमस्य मृतशरीरस्य गङ्गासम्बन्धेन परस्य सूक्ष्मशरीरस्य संस्कारो दृश्यत एव । स्थूलस्य मृतशरीरस्य जान्हवासम्बन्धेन, गङ्गातीरे शरीरपरित्यागेन, गङ्गाजलस्पर्शतः शरीरत्यागेन वा गङ्गातीरेऽन्त्येष्टिक्रियासम्पादनेन वा, जान्हवीजले मृतशरीरभस्मप्रक्षेपेण वा, केनापि प्रकारेण वा मृतशरीरस्य गङ्गासम्बन्धे जाते मृतात्मना जीवेन महत् पुण्यमासादयता शान्तिसुखमनुभूयते । एतादृश्या शास्त्रीयाज्ञयाऽपि उभयोः शरीरयोः पारस्परिकः पूर्वोक्तः संस्कारः सिध्यति, विशेषतः शरीरस्य विशिष्टसम्बन्धादेव प्रेतनरकपित्रादिलोकगामिनो जीवाः स्वस्वस्थूलशरीरेषु दृष्टीर्निक्षिपन्तो निजमृतशरीरस्य गङ्गासम्बन्धं स्मरन्तः शुभसंस्कारं संगृह्णन्ति । एतत्किल संस्कारजनितं विज्ञानम् एतदतिरिक्तमधिदैवसम्बन्धेन गङ्गादेव्याः प्रत्यक्षसाहाय्यं तु दैवीमीमांसाशास्त्रविज्ञानसिद्धमेव ॥ २५२ ॥

प्रसङ्गादुभयसाहाय्यफलमभिधत्ते—

**मङ्गलमुभयोः सत्संस्कारात् ॥ २५३ ॥**

उभयोः स्थूलसूक्ष्मशरीरयोः सत्संस्कारात् मङ्गलम् । यस्यामवस्थायां स्थूलसूक्ष्मयोः शरीरयोः संस्काराः शोभना भवन्ति, तदानीं मङ्गलाधायकस्य कर्मणो मङ्गलमयस्य फलस्योदयो जायते । यस्य मानवस्य प्रकृतिप्रवृत्ती अनुकूले भवतस्तस्याभ्युदयोऽवश्यं

संभवति, स्थूलशरीरेण प्रकृतेः सूक्ष्मशरीरेण च प्रवृत्तेः सम्बन्धो वेद्यः। यदि कस्यचन मनुष्यस्य प्रकृतिप्रवृत्ती उभे अपि सात्त्विके स्यातां, तर्ह्यसौ अभ्युदयनिःश्रेयसयोर्मार्गे निर्वाधमग्रेसरेत् ॥ २५३ ॥

विज्ञानमिदं परिपोष्यते—

**अन्यथा चेदन्यथा ॥ २५४ ॥**

स्थूलसूक्ष्मयोः शरीरयोः संस्कारस्यान्यथात्वेऽशोभनत्वे समुन्नतिमार्गः शोभनो न स्यात्। उदाहरणरूपतोऽवधेयं यत् कस्यापि मानवस्य प्रकृतिर्घोरतामसी किन्तु सूक्ष्मशरीरप्रकृतिः सात्त्विकी भवेत्, तर्हि तदुन्नतेः पन्थाः सरलतां नैवापद्यते। स्थूलशरीरस्य तामसिकी प्रवृत्तिस्तस्याभ्युदयनिःश्रेयससंज्ञके पुरुषार्थे सर्वदैव वाधामाधास्यति। स च मनुष्यः समुन्नतिमार्गे निर्वाधमग्रेसरो न भवितुमर्हति ॥ २५४ ॥

प्रमाणद्वारा विज्ञानमिदं परिपोषयति—

**अतः पृथङ्निरूपणमुभयोः शास्त्रेषु ॥ २५५ ॥**

अत एव कारणात् उभयोः स्थूलसूक्ष्मयोः शरीरयोः शास्त्रेषु पृथग्रूपेण निरूपणं कृतमास्ते। विज्ञानमेतत्परिपोषयितुं सूत्रकृन्महर्षिः सूत्रेऽत्र निर्दिशति यत् स्थूलसूक्ष्मयोः शरीरयोः संस्कारे परस्परमननुकूले मङ्गलाभावः जीवक्रमोन्नतिवाधा च। अत एव शास्त्रेषूभयोः पृथक् पृथग् वर्णनमुपलभ्यते।

तथाहि भगवद्गीतायाम्—

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही।

प्रमाणेऽत्र सूक्ष्मशरीरधारिणं जीवं देहीत्युक्तम्। स्थूलशरीरं देहमिति ॥ २५५ ॥

सम्प्रति भोगहेतुनिरूप्यते—

द्वन्द्वकरणकः संस्कारनिमित्तकः ॥ २५६ ॥

द्वन्द्वयोः सुखदुःखयोरनुभूतिकारणं धर्माधर्मौ तत्संस्काराश्च। धर्माचरणस्य फलं सुखमधर्माचरणस्य दुःखम्। सर्गेऽत्र सुख-दुःखयो र्भोगानां यावद् वैचित्र्यं निभाल्यते, तन्मूलं धर्माधर्म-द्वन्द्वमेव। धर्माधर्म-संस्काराः कर्माशये संगृहीताः सदैव जीवसहचराः सन्ति, त एव देवदानव-मानव-पशु-पक्षिकीटपतङ्गसूकर कूकर प्रभृतिषु समस्तयोनिषु सुखदुःखयो र्भोगकृते जीवं भ्रामयन्ति ॥२५६॥

भोगनिवृत्तिः कदेत्युच्यते—

क्रियान्ते तदुपरमः ॥ २५७ ॥

क्रियाया अन्ते कर्मावसाने तदुपरमस्तेषां भोगानां विरामो जायते। भोगनिवृत्तिसम्बन्धे सूत्रकार आचष्टे यत् क्रियान्ते भोगनि-वृत्तिर्भवति। वस्तुतस्तु शुभाशुभक्रिया समुत्पद्यमान शुभाशुभसंस्कार-जनित सुखदुःखयो र्भोगोत्पत्तिः। अतः क्रियाया उपरतौ भोगविरामो विज्ञानसिद्धः। सुखदुःखादिभोगमूलभूतक्रियाया अन्ते सति भोगान्तः स्वतः सिद्धः। "नष्टे मूले नैव शाखा न पत्रम्" इति ॥ २५७ ॥

भोगनिवृत्तेः प्रकारान्तरमभिधत्ते—

अन्यथा च ॥ २५८ ॥

अन्यथा प्रकारान्तरेणापि भोगनिवृत्तिः सम्भवति, ज्ञानाधिगमो हि भोगनिवृत्तेः प्रकारान्तरमवधेयम, ज्ञानप्राप्तौ तत्त्वज्ञानप्रभावेण निष्कामं महापुरुषं कर्मफलं न स्पृशति। तथाहि भगवद्गीतायाम्—

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः॥

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः॥
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्॥
यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते॥
गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते॥ इति॥ २५८॥

विषयमिमं सुस्पष्टयितुमन्यदप्यभिधत्ते—

**सोऽसाधारणसाध्यः प्रेतश्राद्धवत्॥ २५९॥**

स च ज्ञानजनितभोगोपरमः प्रेतश्राद्धवत् असाधारणक्रिया-साध्यः। साधारणतः क्रियाया अन्ते भोगोपरतिरिति सत्यम्, किन्तु ज्ञानादिना तदुपरमस्तु असाधारणाधिकारसाध्यो भवति। प्रेतत्वं प्राप्तस्य जीवस्य प्रेतत्वोपयोगिकर्म-फलसमाप्तौ प्रेतत्वनिवृत्तिरिति साधारणो नियमः। परन्तु कर्मपारदर्शिभि मुनिभिः प्रेतत्वमधिगतस्य जीवस्य कष्टमयीमवस्थामनुभूय तन्निवृत्तये प्रेतश्राद्धं व्यवस्थापितम्। गयाश्राद्धादिना तु निश्चितरूपेण प्रेतत्वं निवर्तते। प्रेतत्व-निवृत्तिक्रमोऽयमसाधारण इति निर्विवादम्॥ २५९॥

भोगोपरामविषये कर्त्तव्यं निर्दिशति—

**उभयनिष्पाद्यो रोगवत्॥ २६०॥**

यथा किल रोगसमुत्पत्तौ तदुपशमनाय साधारणोपायादीनां चिकित्सापथ्यप्रभृतीनां प्रबन्धोऽनुष्ठीयते, किन्तु दैवानुष्ठान-प्रायश्चित्तादीन्यपि कर्माणि रोगविनाशजनकानि क्रियन्त एव, तथैव भोगोपरामकृते साधारणक्रिया असाधारणा ज्ञानाद्युपायाश्च

विधीयन्त एव, तैरपि भोगनिर्वृत्तिर्जायते। अतस्तदर्थमुभयविध-पुरुषार्थोऽपेक्षितः। ॥ २६० ॥

कर्मस्वरूपमवधारयितुमुच्यते—

कर्मनिमित्ते व्यष्टिसमष्टी ॥ २६१ ॥

व्यष्टिः समष्टिश्च कर्मनिमित्ते स्तः। कर्मस्वरूपे सम्यगवगते सत्येव मानवः कर्मबन्धनाद्विमुच्यते। तस्मात्कर्मणो गभीररहस्यं वेदयितुं सूत्रकृता महर्षिणा सूत्रमिदमाविश्चक्रे। वस्तुतः समष्टि-व्यष्टिभूतं सर्वमपि सृष्टिप्रपञ्चं कर्मजनितमेव। कर्मणैव व्यष्टिसमष्टि-सृष्टिः, तेनैव तयोः स्थितिः, तेन कर्मणैव तत्संहारश्च बोभूयते। अतः सिद्धमेतद् यत् कर्मैव व्यष्टिसमष्टिसृष्टिकारणम् ॥ २६१ ॥

अन्यदप्यभिधत्ते—

भोगवैचित्र्यमाद्या ॥ २६२ ॥

आद्या व्यष्टिसृष्टिर्भोगवैचित्र्यस्वरूपाऽवधेया। व्यष्टिसृष्टौ भोगविचित्रता निभाल्यते। सर्वप्रकारकस्यापि प्राणिवर्गस्य स्वभाव-प्रकृतिभोगा वैलक्षण्यमावहन्ति ॥ २६२ ॥

प्रसङ्गतः पुनरुच्यते—

तस्माद् भूतसङ्घयोनेरनन्तता ॥ २६३ ॥

तस्मात् कारणाद् भूतसंघस्य योनीनामनन्तता विद्यते। उद्भिज्ज-स्वेदजाण्डजजरायुजाश्चेति चतुर्विधा भूतसंघयोनयः। जरायुजेष्वेव मानवान्तर्भावः। उद्भिज्जानां विंशतिर्लक्षम्, स्वेदजानामेकादशलक्षम्, अण्डजानामेकोनविंशतिलक्षम्; जरा-युजपशूनां च चतुस्त्रिंशल्लक्षमिति मिलित्वा चतुरशीतिलक्षम् साधारणयोनिश्रेणयः। अनन्तरं च मानवयोनिमधिगत्य जीवः

पापफलभोगाय पुनः पुनरपि तासु तासु योनिषु समटाट्यमानो विलोक्यते, अतः किल योनीनामानन्त्यं विज्ञेयम् ।। २६३ ।।

अन्यदपि—

**चक्राधिकारिजीवभोगपार्थक्यम् ।। २६४ ।।**

चक्रस्य गमागमचक्रस्याधिकारिणो जीवस्य मनुष्यस्येत्यर्थः, भोगे पार्थक्यं विज्ञेयम् । मानवयोनितः पूर्वयोनिषु भोगाः प्रायशः समानाः सन्ति । पशुषु गवां भोगाः समानाः, सिंहानामपि तथैव, पक्षियोनिषु कीटपतङ्गयोनिषु चापि समानप्रकारा भोगाः । सर्वेषां चैतेषां आहारविहाराः समाना भवन्ति । परन्तु मानवयोनिमधिगतवतो जीवस्य भोगविभिन्नता दृश्यते । एतत्कारणमिदं यन्मनुष्ययोनिमधिगतो जीवः स्वपिण्डाधीश्वरः पूर्णावयवः स्वस्ववासनानुसारं नानाविधशुभाशुभकर्माणि संगृह्णाति । अतः सर्वेषां कर्मविभिन्नत्वे भोगपार्थक्यं स्वतः सिद्धम् । मनुष्ययोनिर्जीव एव गमनागमनचक्राधिकारवान् , मानवेतरजीवास्तु न भवन्ति तच्चक्राधिकारिण इति ।। २६४ ।।

तदुदर्कः प्रणिगद्यते—

**अतोऽपेक्ष्यः कर्मविपाकः ।। २६५ ।।**

अतः कारणात् कर्मणां विपाकः परिणामोऽपेक्ष्यः अपेक्षणीयो भवति । मानवयोनावुपढौकमानो जीवः पूर्णरूपेण निजपिण्डाधीश्वरोभूत्वाऽऽवागमनचक्राधिकारी जायते । मानवतः पूर्वयोनिषु तु मृत्योरनन्तरं जीव उपरिस्थितां योनिमधिगच्छति । अतो नासौ गमागमचक्राधिकारवान् । अत एव महर्षिणा सूत्रकारेण मनुष्ययोनिजीवस्यकृते चक्राधिकारीति शब्दप्रयोगो विहितः, चक्राधिकारवतो मनुष्ययोनेर्जीवस्य विविधकर्माण्यनुसृत्य भोगपार्थक्यमिति प्रागेव प्रपञ्चितम् । अत एव महर्षिसूत्रकारमते कर्मविपाकापेक्षा ।

सुतरां देवदानवमानवप्रेतपशुपक्षिकीटपतङ्गादीनामुच्चनीचयोनीनां भोगाः शुभाशुभकर्मविपाकसापेक्ष्याः ॥ २६५ ॥

एतद्विज्ञानदार्ढ्यार्थ पुनरुच्यते—

**उपासकानामुपास्त्योर्द्ध्वलोकलाभेऽपि कर्मविशेषात्पुनरिह-भोगः ॥ २६६ ॥**

उपास्त्या उपासनया उपासकानाम् ऊर्ध्वलोकलाभेऽपि पुनरत्र लोके भोगः संभवति। कर्मविपाकवैलक्षण्यं प्रदर्शयितुं सूत्रकृन्महर्षिरिदमभिधत्ते यद् उपासकानामुपासनाबलेनोर्ध्वलोकप्राप्तावपि भवत्येव मृत्युलोके भोगः। तात्पर्यमिदं यत् उपासनया जनलोक-महर्लोक-तपोलोक प्रभृतिषूपासनालभ्योर्ध्वलोकेषु प्राप्तेष्वपि मृत्युलोके जन्मानि भोगाश्चोपासकानां भवन्त्येव ॥ २६६ ॥

प्रसंगतो भोगक्रमो निर्दिश्यते—

**अल्पाधिक्ययोरल्पस्य प्राग्भोगः ॥ २६७ ॥**

कर्मभोगविज्ञानमवगमयितुं पूज्यपादो महर्षिः सूत्रकारः सूत्रमेतदाविष्कृत्याभिधत्ते यत् पुण्यपापकर्मणोर्यन्न्यूनं तस्यैव प्रथमं भोगः, यदधिकं तस्य भोगस्त्वनन्तरं विज्ञेयम्। उदाहरण-रूपेणावधारयितुं शक्यते यत् कस्यचन मानवस्य पुण्यमधिकं पापं स्वल्पं तर्हि तेन पूर्वं पापफलमेव भोक्तव्यम्, पापाधिक्ये पुण्यस्वल्पत्वे तेन पूर्वं पुण्यफलमेव भोक्तव्यं भवति। व्याजेन नरकदर्शनं कुर्वन् युधिष्ठिरो नरके च निजभ्रातॄनवलोकयामास। तदानीं निजभ्रातॄन् नरकस्थान् दुर्योधनादीन् स्वर्गस्थानवलोक्य युधिष्ठिरो देवदूतमुवाच कथं नु धर्मात्मानो मम भ्रातरो नरकस्थाः, पापात्मानश्च दुर्योधनादयः कौरवाः स्वर्गे प्रहिताः? एतत् प्रश्नोत्तरं महाभारते स्वर्गपर्वणि तृतीयाध्याये १४, १५, १६ श्लोकेषु प्रदत्तं यत्—

पूर्वं नरकभाग् यस्तु पश्चात्स्वर्गमुपैति सः।
भूयिष्ठपापकर्मा यः स पूर्वं स्वर्गमश्नुते॥
तेन त्वमेवं गमितो मया श्रेयोऽर्थिना नृप!
व्याजेनहि त्वया द्रोण उपचीर्णं सुतं प्रति।
व्याजेनैव ततो राजन् दर्शितो नरकस्तव॥

वैचित्र्ये कथंनु पूर्णतेत्युच्यते—

**वैचित्र्येऽपि पूर्णता सत्यवसरे॥ २६८॥**

सत्यपि वैचित्र्येऽवसरे समागते भवत्येव पूर्णता, मनुष्ययोनौ विचित्रावस्था, भोगवैचित्र्यम् बहुविधा उच्चनीचगतयश्च सम्भवन्ति। स्थितावस्यां कथमिव पूर्णताऽधिगमः? एतादृशजिज्ञासुशंका-समाहितये सूत्रकृता महर्षिणा प्रोच्यत इदं यत् विचित्रतायां सत्यामपि समयेन शक्तिपूर्णताऽवसरो लभ्यते। पूर्णताया अव-सरोऽयं मनुष्यातिरिक्तयोनिषु नासादयितुं शक्यते॥ २६८॥

कथं भवति पूर्णतेत्युच्यते—

**त्रिविधशुद्धौ पूर्णत्वम्॥ २६९॥**

त्रिविधशुद्धौ सत्यां पूर्णताऽधिगम्यते। पूर्णत्वावसरः प्राप्यत इति ज्ञाते स्वत एव जिज्ञासोत्पद्यते यत् केन प्रकारेण पूर्णत्वं लभ्यते, कश्च तत्क्रम इति। महर्षिणा सूत्रकारेणाभिधीयते यत् त्रिप्रकारायां शुद्धौ सत्यां पूर्णताधिगमः। तात्पर्यमेतद्धि यत् पूर्णत्व-प्राप्तिहेतवे आध्यात्मिकाधिदैविकाधिभौतिकशुद्धीनां नितरां प्रयोज-नीयता। शुद्धित्रयं विना न सम्भाव्यते पूर्णतेति॥ २६९॥

एतदभावे किमित्युच्यते—

**विपरीते वैपरीत्यमनार्याभिषेकवत्॥ २७०॥**

पूर्वोक्तसूत्रे सूत्रकृता महर्षिणा पूर्णताप्राप्तेरुपायमभिधायेदमुच्यते यत् असत्यां त्रिविधशुद्धौ अनार्य्याणामभिषेकवत् विपरीतफलमुत्पद्यते अपूर्णता तिष्ठतीत्यर्थः। अतः पूर्णत्वसम्पादनाय शुद्धित्रयमनिवार्यरूपेणावश्यकम् ॥ २७० ॥

व्यष्टिवैचित्र्यं प्रतिपाद्य समष्टिवैचित्र्यं प्रतिपादयितुमुच्यते—

**लोकानामितरा ॥ २७१ ॥**

इतरा लोकानां सृष्टिः समष्टिसृष्टिरिति यावत् वैचित्र्यपरिपूर्णा। व्यष्टिसृष्टिः कथमिव वैचित्र्यपरिपूर्णेति प्रतिपाद्य सम्प्रति पूज्यचरणेन सूत्रकारेण प्रोच्यते यत् चतुर्दशभुवनलोकसमष्टिसृष्टिर्वैचित्र्यमयी। यतो हि समष्टिसृष्टिस्वरूपलोकनिर्माणं जीवानां समष्टिकर्मद्वारैव सम्पद्यते। अतस्तत्रापि वैचित्र्यं विज्ञानसिद्धमेव ॥ २७१ ॥

वैचित्र्यस्वरूपं निरूप्यते—

**आधाराधेयवैचित्र्यात् ॥ २७२ ॥**

आधारश्चाधेयश्च आधाराधेयौ तयोः आधाराधेययोर्वैचित्र्यात् विचित्रता हेतुत्वात्। समष्टिसृष्टावाधारभूततत्तल्लोकानाम् आधेयस्वरूपतन्निवासिजीवानां च परस्परं वैचित्र्यमास्ते। विषयमिममवधारयितुं सूत्रकृन्महर्षिः सूत्रमेतदाविश्चकार। व्यष्टिजगतो वैचित्र्ये जीवप्राधान्यम्, परन्तु समष्टिजगति आधारस्वरूपलोकानां प्राधान्यं दृष्टिगोचरतामापद्यते। लोकमनुसृत्य तदाधेयभूतजीवानां स्थितिरिति विशेषतेयमवधेया ॥ २७२ ॥

तन्महत्त्वं प्रतिपाद्यते—

**सर्वाश्रयो गार्हस्थ्याश्रमवत् ॥ २७३ ॥**

गृहस्थाश्रम इव भूर्लोकः सर्वेषां लोकानाम् आश्रयो भवति। चतुर्दशभुवनेषु निम्नभागस्थिता असुरलोकाः ते हि गौणस्वरूपाः

सन्ति। सृष्टिस्थितिलयक्रियासु देवानामेव प्राधान्यं नासुराणाम्। आसुरीशक्तिस्तु केवलं सृष्टिसामञ्जस्यहेतवे हि व्यवह्रियते। छायामन्तरेण ज्योतिर्महत्त्वं नास्ति तथैवासुरीं शक्तिं विना देवानां महत्त्वं नास्ति, न वा ते स्वप्रमादं परिहरन्तो निजमर्यादास्ववतिष्ठन्ते। यत्र पदशक्तिर्विद्यते, तत्र तच्छक्तेरपलापोऽपि सम्भवः। यद्यासुरलोकमधिकृतवन्तोऽसुरगणा नानाप्रकारैर्दैवभोगैः संयुक्ता आसुरीं शक्तिं धारयन्तो निरन्तरं देवानां छिद्रान्वेषणं न कुर्य्युः दैवराज्यं चापहर्त्तुं न प्रयत्नशीलाः स्युः, तदा कदापि देवाः स्वीयां दैवीं शक्तिं धारयन्तः सावधानाः सन्तो नैजं पदगौरवं स्थितिशीलं सम्पादयितुं न प्रभवेयुः। देवलोकस्य पवित्रता, देवानां सदाचारः धर्मरक्षायै देवानां साहाय्यम्, कर्मनियामकत्वे तेषां योग्यता प्रमादराहित्यं च सर्वमेतत्केवलमसुराणामस्तित्वं निर्बिभर्ति। अतः शुभभोगहेतुत्वे सत्यप्युभयोर्देवासुरलोकयोर्देवलोकस्यैव प्राधान्यम्। देवलोकेष्वपि भूर्लोकस्य प्रधानता। यतोऽयं भूर्लोकश्चतुर्ष्वप्याश्रमेषु गृहस्थाश्रम इव सर्वेषामाश्रयस्वरूपः। गृहस्थाश्रमाभावे त्रयाणामन्येषां ब्रह्मचर्य-वानप्रस्थसंन्यासाश्रमाणां निर्वाहः कदापि भवितुं नार्हति। तद्वदेव चतुर्विभागसंवलितं भूर्लोकं विना सर्वेऽपि सुरासुरलोका विशृङ्खलत्वं भजेरन् प्रणष्टाश्च भवेयुः। सामयिकक्रियाजनितभोगावसाने जीवानां पुनरावृत्तिरूपं पतनं कर्मभूमौ मृत्युलोक एव वोभवीति। मृत्युलोके च जीवैर्नूतनकर्मसंग्रहस्यावसर आसाद्यते। अवसरोऽयं नान्यत्र कुत्रापि लभ्यते। तिरस्कारं पुरस्कारं वा प्रदाय जीवान् सन्मार्गमानेतुं प्रेत-नरक-पितृ-लोका एव प्रभवः। एवं किल भूर्लोक-जीवैरेवाभ्युदयनिःश्रेयसयोः पन्थाः सरलीक्रियते, अन्येषां सर्वेषामपि लोकानां परिपुष्टिश्च विधीयते। अतश्चतुःशक्तियुक्तो भूर्लोकोऽन्येषां सर्वेषामपि लोकानामाश्रयस्थानमित्यत्र नास्त्यणीयानपि संशीतिलेशः। अस्मादेव हेतोर्वेदशास्त्रेषु प्रेतनरक-पितृ-मृत्युलोकै-

अतुर्भिर्युक्तस्य भूर्लोकस्यैव प्राधान्येन वर्णनमुपलभ्यते ॥ २७३ ॥

इदानीं मृत्युलोकमहिमानमुदीरयति—

## मृत्युलोकः केन्द्रं कर्मभूमित्वात् ॥ २७४ ॥

कर्मभूमित्वान्मृत्युलोकः सर्वेषामपि लोकानां केन्द्रस्वरूपः। चतुर्दशभुवनेषु भूर्लोकः तत्रापि मृत्युलोकः प्राधान्यमधिगच्छति। अतः प्रकारान्तरेण समस्तेऽपि ब्रह्माण्डे मृत्युलोकस्यैव महत्त्वमास्ते। वस्तुतो मृत्युलोकस्य गमागमकेन्द्रत्वात्यावज्जीवो मुक्तो न भवति तावदसौ वारंवारं मृत्युलोकमाश्रयते। असुरलोकस्य वा सुरलोकस्य वा जीवेन समुन्नतेनापि नूनमेव शुभकर्मविपाकानन्तरं मृत्युलोक आश्रयणीय एव, पुनश्च यथायोग्यं कर्म संगृह्य चास्मादेव लोकादभ्युदयनिःश्रेयसयो मार्गः प्राप्तुं शक्यते। निर्बाधं शुभाशुभकर्मसंस्कारसंग्रहस्य समुचितोऽवसरः केवलमत्रैव मृत्युलोके लभ्यते। अत एतदभ्युपगन्तव्यमेव यत् ब्रह्माण्डस्य केन्द्रत्वादस्य सर्वोपरि प्राधान्यम् ॥ २७४ ॥

महत्त्वान्तरमाचष्टे—

## चतुर्दशभुवनभोगपूर्णत्वाच्च ॥ २७५ ॥

चतुर्दशभुवनस्य ये भोगास्तैः परिपूर्णत्वादप्ययं मृत्युलोकः सर्वप्रधानस्वरूपोऽवगन्तव्यः। मृत्युलोकस्यासाधारणवैशिष्ट्यमिदमस्ति यच्चतुर्दशभुवनोद्भवानां शुभाशुभभोगानामादर्शोऽत्र निभाल्यते। राज्ञां स्वर्गीयः सुखभोगः दरिद्राणां नारकीयो दुःखभोगः, उन्मादग्रस्तस्य प्रेतत्वदुःखभोगः, आसुरसम्पत्तेः पुरुषस्यासुर सुखभोगः, दैवसम्पत्तेः सुकृतशालिनो जीवस्योर्ध्वलोकसदृशसुखभोगः, इत्यादयः सर्वेऽपि भोगप्रकारा इहापि दृष्टिगोचरतामापद्यन्ते। उदाहरणैरेभिरिदं सुनिश्चितं प्रतीयते यत् चतुर्दशभुवनजनित-

शुभाशुभ सर्वप्रकारकर्मविपाकभोगाः कर्मभूमावत्र मृत्युलोकेऽनुभूयन्ते। अत्रत्यभोगवैचित्र्यसादृश्यं ब्रह्माण्डीयलोकान्तरे नासाद्यते। अतो मृत्युलोकस्य सर्वोपरि वैशिष्ट्यं स्वतः सिद्धम् ॥ २७५ ॥

प्रसङ्गत आर्यावर्त्तस्य महिमानमुदीरयति—

**तत्र त्रिविधशुद्धितः प्राधान्यमार्य्यावर्त्तस्य ॥ २७६ ॥**

यथा किलैकत्र ब्रह्माण्डे भूर्लोकस्य प्राधान्यं, यथा वा तत्र मृत्युलोकः केन्द्रं समाम्नायते, तथैव मृत्युलोकेऽप्यार्यावर्त्तस्य प्रधानता विद्यते। यतः किलार्यावर्त्तः शरीरे मस्तकमिवोत्तमाङ्गमवगम्यते। त्रिविधशुद्ध्यैवैतस्य प्राधान्यम्, तथाहि भगवता मनुनाऽऽर्यावर्त्तसम्बन्धेऽभिधीयते—

"आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्य्योरार्यावर्त्तं विदुर्बुधाः ॥"

एतेन आर्यावर्त्तस्य पूर्वपश्चिमयोः समुद्रसत्ता प्रमाणिता। दक्षिणे च विन्ध्यपर्वतस्यास्तित्वम्। सचायं गिरिर्मध्यभारते दृश्यते। एतस्माद् विन्ध्यपर्वतान्मनुप्रोक्तो विन्ध्यगिरिः कश्चिदन्य इति निश्चप्रचम्। विन्ध्योगिरिरसौ दाक्षिणात्यनीलगिरिसंश्लिष्टः सेतुबन्धाभिमुखो दक्षिणप्रान्तसमुद्रतटनिकटवर्त्ती वेद्यः। मनुनिर्दिष्टः स एव विन्ध्यपर्वतः। नीलपर्वतनाम्ना द्वौ पर्वतौ प्रसिद्धौ। एक उत्कलप्रान्ते, अपरश्चोत्तरखण्डे तथैवैको विन्ध्यो मध्यभारते, द्वितीयश्च दक्षिणभारते च। सुतरामुत्तरस्यां पर्वतराजो हिमवान्, दक्षिणस्यां दक्षिणसमुद्रतटवर्त्ती विन्ध्यपर्वतः, पूर्वस्यां वङ्गीयसागरः पश्चिमस्यां दिशि च अरबसागरो यस्य देशस्य सीमानः सन्ति, स एव भारतनाम्ना प्रसिद्ध आर्यावर्त्तदेशः, अत्र संसारिकान्यदेशापेक्षया वर्त्तते त्रिविधशुद्धिः, भारतदेशेऽत्र चतुष्प्रकारा भूमयो निभाल्यन्ते। वर्षमध्ये यथासमयं षड्ऋतवो विकासं

प्राप्नुवन्ति, सर्वस्मिन्नपि कालेऽत्र षड्ऋतवो विलसन्ति, यथा हिमालये शीतर्त्तुः, दक्षिणे वसन्तर्त्तुः, मरुस्थले ग्रीष्मर्त्तुः, कामाख्याप्रान्ते च वर्षर्त्तुरिति। सर्ववर्णात्मका मानवविग्रहाः, सर्वविधाः सहजपिण्डाः, सर्वे वनस्पतय ओषधयश्च, सर्वश्रेणीगा रत्नधातवश्च भारतभूमावत्र समुपलभ्यन्ते। सर्वमिदमाधिभौतिकशुद्धिलक्षणम्। बहुविधतीर्थपीठस्थानपरिपूर्णत्वात् ब्रह्मप्रवाहस्वरूपिण्याः पतितपावन्याः पूतसलिलाया जाह्नव्याश्च पवित्रीकृतत्वाद्देशोऽयमाधिदैविकशुद्धियुक्तः। आत्मज्ञानस्य च विशिष्टावसरप्राप्त्या मुक्तिक्षेत्रत्वाच्चेयं भूमिराध्यात्मिकशुद्धिसंयुक्ता च स्वतः सिद्धा। स्मर्यते चात्र—

मन्ये विधात्रा जगदेककाननं
विनिर्मितं वर्षमिदं सुशोभनम्।
धर्माख्यपुष्पाणि कियन्ति यत्र वै
कैवल्यरूपं च फलं प्रचीयते ॥ इति ॥ २७६ ॥

अन्यदपि—

## तन्मूर्द्धन्यो ज्ञानक्षेत्रत्वात् ॥ २७७ ॥

देशोऽयं ज्ञानक्षेत्रमिति सर्वेषां मूर्धन्यः। आर्यावर्तस्य द्वितीयं वैशिष्ट्यमिदं यत् आर्याणामादिनिवासभूमित्वात् अत्रैव च जीवसृष्टेः प्रारम्भत्वाच्च पवित्रा भूरियं सर्वविधज्ञानविज्ञानजननी। स्मर्यते चात्र—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥

सृष्टेरारम्भः मानवजातेरादिनिवासभूमित्वम्, वेदानामाविर्भावः, त्रिविधिशुद्धिपूर्णता वर्णाश्रमधर्मसंरक्षणहेतुभूतचतुर्वर्गाधिकारास्ति-

त्वम्, आत्मज्ञानस्य सदाविकाशश्चेत्यादयः पूर्वोक्तविज्ञानपुष्टे-रुज्ज्वलप्रमाणभूताः ॥ २७७ ॥

अन्यदपि तन्महत्त्वप्रमाणमभिधीयते—

**एतदन्त्यजस्यापि वैशिष्ट्यमितरेभ्यः ॥ २७८ ॥**

अत्रत्यानामन्त्यजानामपि अन्येभ्यो वैशिष्ट्यमवगन्तव्यम्। चतुर्विधभूतसंघेषु मानवः श्रेष्ठः। मानवेषु च धर्माधर्मविचार-शालिनी सभ्यजातिर्गरीयसी, तत्रापि च आत्मानात्मविचार परायणः दैवे जगति विश्वासशीलः, सर्वत्रापि विषये च आत्मन उपरि लक्ष्यं निदधानो मानवो महापुरुषो गरीयानवगम्यते। संसारिकेषु तेषु तेषु देशेषु भौतिकलक्ष्यप्राधान्यात् तत्रत्यनिम्नश्रेणिमानवानां कथैव का, समुन्नतमनुष्येष्वप्युपर्युक्तानि लक्षणानि नैव दृष्टिगोचरतामायान्ति। परमार्थावर्त्तीयेषु अन्त्यजेषु चापि तानि लक्षणानि विद्यन्ते। एतत् किल तस्य महिमानं परिचाययति ॥ २७८ ॥

अन्यदपि दैवकारणमभिधत्ते—

**देवैरप्यत्र जन्मेष्यते ॥ २७९ ॥**

पुण्यक्षयानन्तरं पतनकाले देवा अप्यत्र जन्म ग्रहीतुमिच्छन्ति। स्वर्गादयः सर्वे भोगलोकाः। तेषु नूतनकर्मानुष्ठानावसरः स्वल्पीया-नेव, कर्मविपाकफलमेव तेष्वधिगम्यते। अतः किल ये समुन्नत-श्रेण्यो देवा ऐशकर्मणा दैवराज्येषु क्रमोन्नतिशीलास्तानन्तरेण सर्वेऽपि स्वर्गसुखभोगानन्तरं पुनरपि नूतनं कर्मानुष्ठातुं मृत्युलोक-मायान्ति। आर्यावर्त्तीय पूर्वोक्तमहत्त्वमवधार्य देवलोकवासिनामपि पावनभूमावार्यावर्त्तेऽत्र जन्मग्रहणसमीहा समुपलभ्यते। स्वीयशुभ-कर्मजनित-स्वर्गीयभोगसमाप्तौ स्वर्गात्पतनकाले सद्विचार-

शालिनो देवा आर्यावर्त्तेऽत्र जन्मग्रहणमभिलषन्ति । तथाहि विष्णुपुराणे—

गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पद - हेतुभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥
कर्माण्य - संकल्पिततत्फलानि
संन्यस्य विष्णौ परमात्मभूते ।
अवाप्य तां कर्ममहीमनन्ते
तस्मिल्लयं ते त्वमलाः प्रयान्ति ॥
जानीम नैतत्क्व वयं विलीने
स्वर्गप्रदे कर्मणि देहबन्धनम् ।
प्राप्स्याम धन्याः खलु ते मनुष्याः
ये भारते नेन्द्रियविप्रहीनाः ॥ इति ॥ २७९ ॥

अन्यच्च—

## पितॄणामधिकसंवर्द्धनमत्र वर्णाश्रमपूर्णत्वात् ॥ २८० ॥

वर्णा आश्रमाश्च तेषां पूर्णतया अत्रार्यावर्त्ते पितॄणां सविशेषं संवर्द्धनं वोभूयते। देवानां विशिष्टं सम्बन्धमभिधाय सूत्रकारो महर्षिरधुना सूत्रेऽत्र पितृसम्बन्धमाचक्षाणो व्याचष्टे यत् पावनभूस्यैतया अर्यमादिनित्यपितृगणस्यापि विलक्षणो विशिष्टश्च सम्बन्धो वर्त्तते। नित्यपितरोऽपि देवश्रेण्य एव, ते किल ब्राह्मण्डस्यैतस्याधिभौतिकक्रियाया अधिष्ठातारो विद्यन्ते । आर्यजातेर्नित्यत्वं नित्यपितृकृपामेव निर्विमर्त्ति, वर्णाश्रमधर्मावलम्बिनी आर्यजातिः कथमिव जागतिकान्यानार्यजात्यपेक्षया चिरजीविनीति सविस्तरं

प्रागेव प्रपञ्चितम्। यदा किल वर्णाश्रमधर्मं द्वारीकृत्यैव मानवजातेराधिभौतिकी शुद्धिः समाम्नाता यदा च रजोवीर्यशुद्धिमूलको वर्णधर्मः पितॄणां प्रसन्नतायाः कारणम्, पितृप्रसादेनैव मानवजातिः क्षणभङ्गुरे संसारेऽत्र चिरस्थायिनी, स हि पितॄणां प्रसादो वर्णाश्रमधर्मस्य पूर्णतामेव यदा निर्विभक्ति, तदेदमंगीकर्त्तव्यमेव यन्मृत्युलोकेऽत्र केवल आर्यवर्त्त एव वर्णाश्रमधर्मस्य पूर्णविकासत्वादयं देशो ब्रह्माण्डविशिष्ट इत्यत्र नास्ति सन्देहलेशोऽपि। आर्यावर्त्तेऽत्र यादृशी वर्णाश्रमव्यवस्थायाः परिपूर्णता दृश्यते न तथा पृथ्वीतलेऽत्र कुत्रापि इति प्रत्यक्षसिद्धम्। कारणेनैतेन आर्यावर्त्तस्य वैशिष्ट्यं स्वतः सिद्धम्॥ २८०॥

अन्यदपि महत्त्वमुच्यते—

श्राद्धसम्बन्धाच्च॥ २८१॥

श्राद्धस्य सम्बन्धादपि आर्यावर्त्तस्य महत्त्वमवधेयम्। मृतात्मनः श्राद्धानुष्ठानपद्धतिः केवलं वर्णाश्रमधर्मावलम्बिन्यामार्यावर्त्तनिवासिन्यामार्यजातावेव प्रचलिता वर्त्तते। श्राद्धस्वरूपपितृयज्ञेन न केवलं पितृलोकवासिनामेव संवर्द्धनम्, प्रत्युत प्रेतनरकादिलोकवास्तव्यानामपि कल्याणं सम्पद्यते। भुवः स्वराद्यूर्द्ध्वलोकानां, अतलवितलाद्यधोलोकानां च मृत्युलोकेन सह पूर्णसम्बन्धे स्थितेऽपि यादृशः सम्बन्धो मृत्युलोकेन सह प्रेतनरकपितृलोकानां वर्त्तते, तादृशोऽन्यत्र नास्त्येव। सुखाधिक्यमुपभोक्तारो ये जीवा दीर्घकालकृते लोकान्तरं व्रजन्ति, किं वा ये हि देवा असुरा वा सम्भवन्ति त एव हि दैवेष्वासुरेषु वा लोकेषु निवसन्ति। किन्तु प्राधान्येन जीवाः किल चतुर्धा विभक्तस्य भूर्लोकस्य मृत्यु-प्रेत-नरक-पितृलोकेष्वेव चतुर्षु बहुधा परिभ्रमन्ति। पितृलोकस्तु सुखभोगात्मकः, मृत्युलोको मिश्रभोगस्वरूपः, द्वावन्यौ हि केवलं दुःखभोगदौ विज्ञातव्यौ। उपर्युक्तचतुर्लोक-

वास्तव्यानां जीवानामन्योन्यं घनिष्ठः सम्बन्ध आकर्षणं च, श्राद्धादिना पितृयज्ञेन परलोकगामिनामात्मनां दुखःनिवृत्तौ सुखाधिगतौच सुमहत्साहाय्याधिगम इतिनिर्विवादम्। अत एव ते निर्वाधमुन्नतिमार्गेऽग्रेसरन्ति। अन्यच्च-नित्यपितरोऽपि पितृयज्ञेन सुप्रसन्नाः सर्गस्याधिभौतिकसमुन्नतौ निरताः संतिष्ठन्ते। सुतरां यथार्थावर्त्ती एव शास्त्रोक्तश्राद्धयज्ञाः प्रवर्त्तन्ते तर्हि पूर्वोक्तसाहाय्यप्रदानादस्य विशिष्टो महिमेत्यत्र कः सन्देहावसरः॥ २८१॥

प्रसङ्गतः श्राद्धविज्ञानं प्रतिपाद्यते—

## श्रद्धामूलकं श्राद्धम्॥ २८२॥

श्राद्धं किल श्रद्धामूलकं भवति। प्रागविश्वासस्तदनन्तरं श्रद्धा ततश्च सत्यस्य ब्रह्मणोऽधिगमः, अयं हि स्थिरो दार्शनिकः सिद्धान्तः। पूर्वं हि सूक्ष्मलोकेषु दैवशक्तिषु वेदोक्तकर्मकाण्डकलापेषु च विश्वासशीलः पुरुषः श्रद्धाधिकारवान्। यत्र च मनुष्यजातौ सूक्ष्मलोकदैवशक्ति-शास्त्रविहितकर्मकाण्डेषु विश्वासाभावो न तत्र श्रद्धासद्भाव इति निष्प्रपचम्। अतः कारणादनार्यजातिर्नास्तिको वा पुरुषः श्रद्धामहत्त्वं स्वहृदयङ्गमं कर्त्तुं न शक्नोति। एवं हि दृढविश्वासादेव मानवहृदये श्रद्धा समुत्पद्यते। स्थिरविश्वासादनुरागमूलिका ऐकान्तिकी या चित्ताधारा समुदेति, सैव श्रद्धा समाम्नाता। सत्त्वरजस्तमोभेदेन सा त्रिविधा, त्रिगुणात्मकं त्रिविधमन्तःकरणमेव त्रिभेदकारणम्। त्रिविधेष्वपि शक्तेरुपकारस्य तारतम्यं विज्ञातव्यम्। किन्तु त्रिप्रकारा अपि तदधिकारवन्तः श्राद्धादिकर्मकाण्डाधिकारिणो भवन्तीत्यत्र नास्ति सन्देहलवोऽपि। अलौकिक्या श्रद्धाशक्त्याऽनया मानवपञ्चकोषेषु निपतति सुमहान् प्रभावः। श्रद्धाया असाधारणशक्त्या महत् परिवर्त्तनं जायते पञ्चकोषेषु। उदाहरणरूपतोऽवधारणीयं यत् श्रद्धावान् पुरुषः अशुभोऽपि शुभदर्शनः, तेजसा हीनोऽपि तेजस्वी,

भवन् निजान्नमयकोषे सर्वविधमपि परिणाममुत्पादयितुं प्रभवति । श्रद्धावान् योगी महात्मा एकस्मिन् एव जन्मनि विश्वामित्र इव क्षत्रियाद् ब्राह्मणः, नन्दीश्वर इव मानवाद्देवो भवितुं शक्नोति । सर्वमेतदन्नमयकोषपरिवर्त्तनस्योदाहरणमवगन्तव्यम् । श्रद्धालु-भक्तशिरोमणिः स्वीयान्तःकरणप्रेरणया नैजं प्राणमयकोषं विस्तार्य स्वेष्टदेवलोके मानसानुपचारान् प्रापय्य स्वेष्टदेवपूजनं कर्त्तुं शक्नुयात्, एतयैव प्राणमयकोषक्रियया सिद्धिसम्पन्नः साधकः परकीयकायासु स्वप्रभावमुत्पादयितुं प्रभुः । अनयैव रीत्या मनोमयस्य विज्ञानमयस्य च कोषस्य श्रद्धामूलक-प्रक्रियाणाम-लौकिकं वर्णनं योगदर्शनस्य तृतीये पादे समुपलभ्यते । श्रद्धाया एतावान् प्रभावो यत् अन्ते श्रद्धाजनितावरणशुद्ध्या ज्ञानी महापुरुषः स्वीयं कारणशरीरं छिन्नं भिन्नं च कुर्वन् बन्धनाद् विमुच्यते । एतस्यास्त्रिलोकपवित्रकारिण्याः श्रद्धायाः प्रभावेण पितृयज्ञानुष्ठाता द्रव्यक्रियामनःशुद्धिद्वारा स्वकीयं संकल्पितं पदार्थराशिं भावराशिं च प्राणमयमनोमयकोषसाहाय्येन लोकान्तरं प्रापयन् मृतात्मनो दुःख-निवृत्तिं तृप्तिमभ्युदयं च विधातुं शक्नोति । एतद्धि श्राद्धस्यालौकिकं रहस्यम् । विश्वासः संयमो मानसिकं बलं चैतत् त्रितयं श्राद्धक्रिया-मूलमवधार्यम्, मन्त्रशुद्धिः, क्रियाशुद्धिर्द्रव्यशुद्धिश्चेति त्रीण्युप-करणानि । एतेषां सर्वेषामेव साफल्यभित्तिः श्रद्धैव ॥ २८२ ॥

तस्य प्रथमफलमभिधत्ते—

**उभयपितृसंवर्धनमेतेन ॥ २८३ ॥**

एतेन श्राद्धेन उभयविधपितॄणां सम्बर्द्धनं जायते । नित्यनैमित्तिक-भेदेन पितरो द्विविधाः । अर्यमाऽग्निष्वात्तादयो नित्यपितरः सन्ति, एतेषां पदानि नित्यानि । इन्द्रवसुयमादीनामिव एतेषामपि पदानि नित्यानि भवन्ति । पदधारिणः परिवर्त्तन्ते न पदानि । नित्यपितरोऽपि

देवविशेषा एव। ये जीवा मृत्युलोके नैजं स्थूलकलेवरमपहाय पितृलोकमुपढौकन्ते, किं वा प्रेतलोकं नरकलोकं च भ्राम्यन्तो गमनागमनचक्रं द्वारीकृत्य मृत्युलोकमायान्ति, ते नैमित्तिकपितरः समाख्याताः। यथा हि आसुरलोकानां राजा असुरराजो बलिः, यथा च देवलोकस्य राजा इन्द्रस्तथैव पितृलोकस्यापि राजा यमो धर्मराजो मन्यते। भूर्लोकस्य चत्वारोऽपि विभागा यमधर्मराजानुशासनान्तर्गता मन्यन्ते। प्रत्येको जीवो यावदसौ मृत्युलोकाद्बहिर्न गच्छति तावदयं पितृलोके यमधर्मराजसिंहासनाभ्यर्णमेव स्थितो भवति। अत एवानार्यजातयस्तमेव धर्मराजं परमेश्वरं मन्यन्ते। यतोऽन्यत्र देवलोकादौ ये उग्रपुण्यकर्माणः स्वीयपुण्यकर्मप्रभावाद् गच्छन्ति, ते साधारणश्रेण्यन्तर्गता न भवन्ति। साधारणा आत्मानः पुण्यात्मानः पापात्मानो वा ते सर्वे यमराजस्य राज्यसिंहासमीपे समुपतिष्ठन्त एव। ते च यमाज्ञयैव स्वीयकर्मफलमुपभुञ्जते। इयानेव भेदो यद् ये परलोकगामिनः पुण्यात्मानो विद्यन्ते, ते सद्य एव यमलोकं प्राप्नुवन्ति, तत्र च तेषां स्वागतमनुष्ठीयते। ये च पापात्मानस्ते प्रेतलोकस्य च यन्त्रणां भोक्तारो नैव तत्कालं यमलोकं व्रजन्ति। ते प्रेतनरकयातनामुपभुज्य तत्र गच्छन्ति। यातनाभोगात् प्रागपि गच्छद्भिस्तैर्नैव यमधर्मराजस्य दर्शनं लभ्यते। शास्त्रेष्वेतल्लभ्यते यद् यमराजधानीमुपस्थितैः पुण्यात्मभिरेव यमधर्मराजदर्शनं कर्त्तुं पार्यते। तत्र समुपस्थितान् पापात्मनः समुद्दिश्य तु धर्मराजाज्ञैव केवलं श्राव्यते। अन्तर्दृष्टिसम्पन्नानामार्याणामिदपि सम्मतं यत् मृत्युलोकान्तर्गतोराजदण्डयमदण्डः समान एव। यतोहि यमधर्मराजेनैव राज्ञो राजप्रतिनिधेः पुरुषस्य वान्तःकरणे प्रविश्य दण्डो दीयते। अतो भूर्लोकस्य चतुर्ष्वपि विभागेषु यमस्य समानोऽधिकारः, अत एव तदीया धर्मराजसंज्ञा, यतोऽयं धर्माधर्मसंग्रह-प्रधानकेन्द्रभूतस्य भूर्लोकस्य राजा, धर्मराज-

माहात्म्यपरिज्ञानमन्तरेणोभयविधपितृसंवर्द्धनं न केनापि कर्त्तुं प्रभूयते नच तद् विना कोऽपि पितृयज्ञः परिपूर्णो भवितुमर्हति। आर्यावर्त्तोऽयमुभयविधपितॄणां संवर्द्धयिता, आर्य्याणां वेदाः शास्त्राणि च दैवजगतां रहस्यमिदं सम्यक् प्रकाशयन्ति। अस्मादेव कारणात् यमधर्मराजस्य याथातथ्यं माहात्म्यं भूमावत्रैव प्राकट्यमापद्यते, पञ्चमहायज्ञैः पितृयज्ञैः तर्पणश्राद्धादिभिश्चोभयविधपितॄणां सम्यक् संवर्द्धनमार्यावर्त्तदेश एव वोभूयते। अन्यदेशवासिन्योऽध्यात्मशास्त्रविहीना आत्मज्ञानरहिता जातयो यदा यमधर्मराजमेव सर्वशक्तिशालिनं परमेश्वरं मन्यन्ते, न वा ता पितॄणां देवानां रहस्यमवगच्छन्ति, नच दैवजगतो विस्तारमवधारयन्ति, तदा तासांद्वारा उभयविधपितॄणां संवर्द्धनमसम्भवमेव। सुतरां सूक्ष्मदैवशक्तिषु विश्वासम्, यमधर्मराजस्वरूपपरिज्ञानम् नित्यनैमित्तिकपितृषु श्रद्धामनुष्ठाय च द्रव्यक्रियामन्त्रशुद्धिं द्वारीकृत्य श्राद्धयज्ञैरुभयविधपितृसंवर्धनं कर्त्तुं शक्यते, तेन च मूर्लोकस्य सर्वेषामेवाङ्गानां परमं कल्याणं साध्यते। श्राद्धस्यैतदसाधारणं माहात्म्यम्॥ २८३॥

माहात्म्यमन्यदभिधत्ते—

## सर्वत्र तृप्तिः॥ २८४॥

श्राद्धेन सर्वत्रैव तृप्तिः सम्भवति। नित्यनैमित्तिकभेदेन श्राद्धं द्विविधम्। पञ्चमहायज्ञान्तर्गतपितृयज्ञादयो नित्यतर्पणादयश्च नित्यश्राद्धान्तर्गताः। मृतस्यात्मीयस्वजनस्य आद्यश्राद्धम्, मासिकश्राद्धम्, वार्षिकश्राद्धम्, गयाश्राद्धादीनि च नैमित्तिकश्राद्धान्तर्गतानि। नैमित्तिकश्राद्धेन परलोकं प्रतिष्ठमानानामात्मीयस्वजनानां तृप्तिर्जायते। परन्तु नित्यश्राद्धद्वारा तु देवर्षिपितॄणामात्मीयस्वजनानामन्येषामपि जीवानां, किं बहुना चतुर्दशभुवनवास्तव्यानां चतुर्विधभूतसङ्घादीनां तृप्तिर्जायते। तर्पणादिप्रक्रिया-

मन्त्रपाठतो विज्ञानमेतत् स्वतः सिध्यति। अतः श्राद्धस्यैतत्प्रधान-महत्त्वं यत् तद्द्वारा यथाधिकारं सर्वविधश्रेणिजीवास्तृप्तिमासादयन्ति। लोकान्तरमुपेयुषां जीवानां किमिव तृप्तिर्जायते इत्येतत्सम्बन्धे स्मृतिशास्त्रप्रमाणं यथा—

नामगोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः।
अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिताः॥
नाममन्त्रास्तदादेशा - भवान्तर-गतानपि।
प्राणिनः प्रीणयन्त्येव तदाहारत्वमागतान्॥
देवो यदि पिता जातः शुभकर्मानुयोगतः।
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति॥
गान्धर्वे भोगरूपेण पशुत्वे च तृणं भवेत्।
श्राद्धान्नं वायुरूपेण नागत्वेप्युपतिष्ठति॥
पानं भवति यक्षत्वे राक्षसत्वे तथामिषम्।
दनुजत्वे तथा मद्यं प्रेतत्वे रुधिरोदकम्।
मनुष्यत्वेऽन्नपानादि नानाभोगकरं भवेत्॥ इति

शंकासमाधानपूर्वकमभिधीयते यत् तृप्तिर्द्विविधा—अन्तःकरण-साध्या इन्द्रियजन्या च। अन्तःकरणस्य तृप्तिस्तु केवलं सद्भाव-स्योदयेनैव सम्पद्यते। परमिन्द्रियतृप्तिस्तु विषयसुखोपस्थानमन्तरेण न सम्भाव्यते। प्राणमयमनोमयकोषयोः साहाय्येनैकस्यान्तःकरणस्य सद्भावमन्यत्रान्तःकरणेऽपि प्रापयितुं पार्य्यते। एवमेव तीव्रसंक-ल्पेन अन्यलोकेष्वपि भोगोपयोगिनः पदार्थाः समुत्पादयितुं शक्यन्ते। यथा हि संकल्पसाहाय्येनैकस्यान्तःकरणस्य क्रियाऽन्य-त्रान्तःकरणे प्रापयितुं शक्यते, तथैव सति प्रयोजने तत्तल्लोकानां पिण्डानां च संरक्षकदेवानां सहायतया तत्तल्लोकोपयोगिभोगपदार्था-स्तत्संमुखमुपस्थापयितुं शक्यन्ते। तात्पर्यमिदं यत् विधिपूर्वकं

सम्पद्यमानया श्राद्धक्रियया अन्तःकरणद्वारैवान्यलोकवासिनां तृप्तिस्तु जायत एव, किञ्च तत्पिण्डोपयोगिभोगपदार्थप्राप्त्याऽपि तृप्तिः सम्भवा ॥ २८४ ॥

तदीयं मौलिकं विज्ञानमभिधीयते—

**चतुष्कोषव्यापकत्वात् ॥ २८५ ॥**

चतुर्णामपि कोषाणां व्यापकत्वाद्धेतोः श्राद्धेन तृप्तिलाभो भवतीति-शेषः। सर्वविधश्रेणिजीवेषु पञ्चकोषा विद्यन्ते । तेषु चत्वारः कोषाः सूक्ष्मं कारणं शरीरं च । अन्नमयकोषस्तु स्थूलं शरीरमभिधीयते। स्थूलं शरीरं सर्वेष्वपि लोकेषु पृथक् पृथग् भवति । तल्लोकपरित्यागकाले तत्रैव निर्जीवं सत् तल्लोकपरमाणुषु विलीयते। अन्नमयकोषभिन्नाः चत्वारः कोषाः सूक्ष्मकारणशरीराख्याः प्रकारान्तरेण व्यापका विज्ञेयाः। यद्यप्यन्नमयः कोषः सर्वेष्वपि-लोकेषु पार्थक्यं भजते, परस्परं भिद्यते, त्यज्यते, गृह्यते चापि, परन्तु तद्भिन्ना चत्वारः कोषाश्चतुर्विधभूतसंघस्वरूपसहजपिण्डेषु, मृत्युलोकवासिमानवपिण्डेषु, विविधेषु सूक्ष्मलोकेषु, सुरासुरलोक-वासिदेवपिण्डेषु च समानाः सन्तिष्ठन्ते, यथैकस्वरेणानेकानि वाद्ययन्त्राणि सम्मिलितानि, तेष्वेकस्यापि वादनेन सर्वाणि शब्दायन्ते तथैव चतुर्णां कोषाणां सर्वत्र व्यापकत्वात् सम्बद्धत्वाच्च श्रद्धया क्रियमाणश्राद्धप्रक्रिया सर्वत्रोपसर्पितुमर्हति । यथा च वाद्ययन्त्राणां वाद्यमानानां मध्ये किञ्चिद् विशेषावरणं तिष्ठेत्, तर्हि एकस्वरसम्मिलितान्यपि वाद्ययन्त्राणि एकस्य कस्यचिद्वादनेनैव शब्दायितानि भवन्ति, आवरणरहितस्थानेष्वेव शब्दं प्रकुर्वते, तथैव श्रद्धा-द्रव्यशुद्धि-क्रियाशुद्धि-मन्त्रशुद्धि-संयम-मनोयोगादिनाऽनावृतत्वेन मृत्युलोकस्य प्राणमयमनोमयकोषयोः क्रिया लोकान्त-

रेषूपढौकमानाऽभीष्टं फलमुत्पादयति। रहस्यमेतद्योगिजनद्वारा स्वतोऽनुमेयम् ॥ २८५ ॥

तत्फलमभिदधाति—

## तत्संस्कारात् प्रेतत्वविमुक्तिः ॥ २८६ ॥

तस्य श्राद्धस्य संस्कारादनुष्ठानात् प्रेतत्वाद् विमुक्तिः, जीवः प्रेतत्वाद् विमुच्यत इत्यर्थः। परलोकगामिनो जीवस्य दुःखोपभोगायैकः प्रेतलोको द्वितीयो नरकलोकश्च। नरकलोकः कर्मविपाकसरलनियमपरिपूर्णश्च। किन्तु प्रेतलोकस्य विचित्रा गतिः, प्रेतदशा उन्मादावस्था च समानैव भवति। प्रेतत्वं किलान्तःकरणस्य मूर्च्छया समुत्पद्यते। अतः प्रेतश्राद्ध-गयाश्राद्धादिभिरलौकिकैरुपायैर्जीवः प्रेतत्वाद् विमुच्यते। पूर्वोक्तं वैज्ञानिकं सिद्धान्तमनुसृत्य श्राद्धयज्ञः स्वीयं प्रभावं प्रेतलोकं गमयित्वा जीवं प्रेतत्वाद् मोचयित्वा तदीयं परलोकमार्गं हितावहमादधाति। विषयोऽयं मृत्युलोके प्रत्यक्षमनुभूयते ॥ २८६ ॥

महत्त्वान्तरमाचष्टे—

## तेन पुण्यलाभान्निरयविमुक्तिः ॥ २८७ ॥

तेन श्राद्धकर्मणा पुण्यस्य लाभाद् निरयाद् नरकादपि विमुक्तिर्मोक्षो भवति। श्राद्धकर्त्ता श्राद्धयज्ञेन साकं यदि विशिष्टं पुण्यं कर्म कुर्यात् तर्हि तदीयासाधारण-पुण्यकर्मफलेन परलोकगामिनो जीवस्य नरकयन्त्रणा प्रणश्यति। यथा परलोके श्राद्धद्वारा तृप्तिः, प्रेतश्राद्धं यथा प्रेतत्वनाशकं जीवस्य सुखदायकं तथैव श्राद्धेन नरकलोकेऽपि शान्तिर्लभ्यते। यदि च परलोकगामिनो मृतात्मनः कश्चिदात्मीयो-जनः स्वधर्मबुद्धिप्रेमवशवर्त्ती भवन् श्राद्धकर्त्रा सहैव परलोकगामिन आत्मनः कृते असाधारणं पुण्यं कर्मानुतिष्ठेत्, तर्हि

तत्पुण्यकर्मफलेन देवानां साहाय्येन नारकीयजीवस्य नरकयन्त्रणा ह्रासमुपगच्छति, नरकवासावधिर्न्यूनतामापद्यते च। यतः कर्म किलासाधारणशक्तिविशिष्टं विचित्रं च। देवा अपि कर्मवशवर्तिनो भवन्तः सर्वविधमपि साहाय्यं विदधते ॥ २८७ ॥

अपरमपि महत्त्वं व्याह्रियते—

## स्वर्भोगवृद्धिश्च ॥ २८८ ॥

श्राद्धेन कर्मणेतिशेषः स्वर्गीयभोगस्य वृद्धिरपि जायते। यज्ञस्त्वसाधारणशक्तिविशिष्टः। साकमेव श्राद्धयज्ञेन सम्पाद्यमानो विशेषयज्ञः परलोकं प्रस्थितस्य जीवात्मनः स्वर्गसुखभोगावधिं वर्धयति। यर्हि श्राद्धकर्त्तुः पुरुषस्य विशेषपुण्यकर्मणा परलोकगामिन आत्मनो नरकदुःखभोगो दूरीभवति, यदा च यज्ञैर्देवाः संवर्द्धन्ते, अभ्युदयस्य कथैव का मुक्तिमार्गोऽपि सरलायते तर्हि अत्युग्रैर्दानतपःकर्मयज्ञादिभिः स्वर्गतानां पितॄणां स्वर्गवासावधिर्वर्धिष्यत इत्यत्र कः सन्देहः। यज्ञस्य संकल्पप्रधानत्वात् कर्त्तुः शुद्धसंकल्पोऽन्येभ्योऽपि जीवेभ्यः फलं दातुमर्हतीत्यत्र नास्ति संशीतिलेशः ॥ २८८ ॥

इदानीं प्रकृतविषयमभिधत्ते—

## तीर्थपूर्णत्वमस्य शुद्धित्रैविध्यात् ॥ २८९ ॥

शुद्धित्रैविध्यात् शुद्धित्रयसत्त्वादेव अस्य आर्यावर्त्तदेशस्य तीर्थपूर्णत्वम् तीर्थानां पूणता। दैवीमीमांसादर्शनमनुसृत्य दैव्याः शक्तेरधिष्ठानोपयोगी व्यापिकायाः प्राणशक्तेरावर्त्तविशेषः पीठमित्युच्यते, तच्च पीठमनेकविधम्। तीर्थसमूहोऽपि प्रकारान्तरेण दैवशक्तेः पीठमेव। पीठभूतं तीर्थं पृथिव्यां सर्वत्रैव भवितुमर्हति, परन्तु भारतीयप्रकृतेराध्यात्मिकैः कारणकलापैर्विशुद्धत्वात् भारतस्य तीर्थानां पूर्णता स्वतः सिध्यति। देशान्तरतीर्थपीठेषु त्रिविधशुद्धे-

रभाव एव । अन्यदेशेषु कुत्रचिदाधिभौतिकशुद्धौ सत्यामपि अधिदैवाध्यात्मशुद्ध्योरभावः आधिदैविकशुद्धेरांशिकत्वसत्त्वे पूर्णता नास्त्येव । आध्यात्मिक्याः शुद्धेस्तु देशेऽन्यत्र सम्भावना नास्ति । आर्यावर्त्तदेशस्य त्रिविधशुद्धिपूर्णताविज्ञानं प्रागेव प्रदर्शितम् । उक्तैः कारणकलापैरेतत् सिध्यति यत् अनार्यदेशीयतीर्थेषु पीठोत्पत्तौ सत्यामपि त्रिविधायाः शुद्धेरभावप्रसङ्गोऽनिवार्य एव ॥ २८९ ॥

शास्त्रोक्तं महत्त्वं मीमांसते—

**कर्मभूमित्वं तस्मात् ॥ २९० ॥**

तस्मात् हेतोरार्यावर्त्तस्य कर्मभूमित्वम् । यद्यपि स्थूलया दार्शनिकयुक्त्या चतुर्दशभूमिषु मृत्युलोकः कर्मभूमित्वेन निरूपितः, किन्तु आर्यशास्त्रेषु आर्यावर्त्तस्यैव कर्मभूमित्वप्रतिपादनेन शङ्का समुदेति यत् शास्त्रीयार्यावर्त्तमहत्त्वख्यापकवचनानि पक्षगतधिया न सन्तीति निर्णेतुमेतत्सूत्राविर्भावः । यदा मृत्युलोकस्यान्यविभागापेक्षया आर्यावर्त्तो समधिकत्रिविधशुद्धेरवसरः, यदि च मृत्युलोकशरीरे आर्यावर्त्तो मस्तकायते, यर्हि आत्मज्ञानविचारेण आर्यावर्त्तस्य अन्त्यजप्रजा किञ्चिद् वैशिष्ट्यं परिरक्षति, यदा वा आर्यावर्त्तमहत्त्वं संस्मरन्तो देवा अपि स्वीयस्वर्गभोगक्षयानन्तरं देशेऽत्रैव जन्मग्रहणं कामयन्ते, यदि वा वर्णाश्रमधर्मस्य शक्तेः कारणत्वात् अनयैव भूम्या विशिष्टः पितृसम्बन्धः संस्थापितो निभाल्यते यदा वा आर्यावर्त्तदेशः पूर्णशक्तिशालितीर्थैः परिपूर्णः तदेदं स्वतः सिध्यति यत् कर्मभूमित्वेन आर्यावर्त्तस्य प्रतिपादनं सुतरां संगच्छते, यतो यत्र भूमौ सर्वे समुचितगुणा वर्त्तन्ते, तत्रैव उत्तमकर्म-सम्पादनसौविध्यम्, जीवानामाध्यात्मिकोन्नतिजनकत्ववैलक्षण्यं च ॥२९०॥

विज्ञानमिदं परिपोषयति—

**सर्वावतारात् ॥ २९१ ॥**

प्रकृतविज्ञान-परिपोषकप्रमाणं दीयते यदार्यावर्त्तस्यैव यथार्थ-कर्मभूमित्वस्य सुमहत् कारणमिदमपि यदत्रैव सर्वविधश्रेणीनामवताराणामाविर्भावः। मृत्युलोकस्यान्यान्यभूभागेषु देवानामसुराणामवतारास्त्ववश्यं सम्भवन्ति। आर्यावर्त्तातिरिक्तदेशेषु दैवीनामासुरीणां च शक्तीनां यथासमयं विकास एवास्य प्रत्यक्षं प्रमाणम् तथैवासुरज्ञानप्रकाशिका प्रतिमाऽपि तत्र तत्र देशे विकसति, यथा असुरलोकवासिनाम् ऋषीणां कृपा तत्र तत्र देशे तिष्ठतीत्यभिधातुं शक्यते। परन्तु तेषु देशेषु वेदतत्सम्मताध्यात्मशास्त्राविर्भावावसर-राहित्यात् इदमभ्युगन्तव्यमेव यत् देशेषु तेषु सर्वश्रेण्यो महर्षयो नावतरन्ति, तथैव शास्त्रैरिदं प्रमाणितं यत् उच्चश्रेणीनां देवानामवताराः, श्रीमतोभगवतः कलावताराः, पूर्णावताराश्च भारत-देशापरनामनि आर्यावर्त्त एव वोभूयमानाः परिदृश्यन्ते हेतुभिरेभिरार्यावर्त्तस्यैव कर्मभूमित्वम् ॥ २६१ ॥

अन्यदपि—

## दैवसाहाय्यात् ॥ २६२ ॥

आर्यावर्त्तस्य कर्मभूमित्वविषये इयमप्येका प्रबला युक्तिर्यत् अस्यामेव भूमौ समधिका दैवी सहायता लभ्यते। स्थूलस्य राज्यस्य परिचालकं दैवं राज्यमेव। कर्मफलस्य नियन्तारो दातारश्च देवा एव। एतादृशदैवराज्यविभिन्नाधिष्ठातॄणां सम्बन्धो यदि केनापि भूभागेन भवेत् तदाऽसौ भूभागः कर्मभूमिः प्रणिगद्येत, आर्यावर्त्त-निवासिन्यः प्रजाया दैवराज्योपरिपरिपूर्णविश्वासात्, आर्यावर्त्ते एव पीठविज्ञानस्य प्रकाशितत्वात्, यज्ञमहायज्ञानुष्ठानात्, सर्वविद्यो-पासनापद्धतिप्रचारात् च विशिष्टदेवसम्बन्धोऽत्र तिष्ठति। समधिकं दैवसाहाय्यमार्यावर्त्तः कथं समधिगच्छतीत्यस्य सयुक्तिकं

विवेचनं पूर्वसूत्रैरधिगम्यते । विशेषतो यदधिवासिनां दैवजगति-स्थिरोविश्वासः यत्रत्यप्रजाचारा दैवकृपाप्राप्तिमूलकाः तत्र दैवीनां दयानां समधिकप्राप्तिः स्वतः सिद्धा । दैव्या दयाः किल स्वयमेव आर्यावर्त्तकर्मभूमित्वविज्ञानपरिपोषणसामर्थ्ये शालिन्य इति ॥२६२॥

अन्यदपि च—

## पित्रानुकूल्यात् ॥ २६३ ॥

पितॄणाम् आनुकूल्यात्, अनुकूलस्य भावः आनुकूल्यम्, तस्मा-दपि आर्यावर्त्तस्य कर्मभूमित्वम् । यद्यपि सम्पूर्णोऽपि मृत्युलोको नित्यपितॄणां कार्यक्षेत्रम्, परन्तु वर्णाश्रमव्यवस्थया नित्यपितृभि-रार्यावर्त्तः समधिकसाहाय्यमधिगम्यते । अतः किल स्थायिन्याः सहायतायाः प्राप्त्या आर्यावर्त्ते नित्यपितॄणां सविशेषदयादृष्टिः तिष्ठति । ते च नित्यपितरः पारस्परिकं साहाय्यं संस्मरन्तो वर्णाश्रम-धर्मावलम्बि प्रजातन्त्रं स्थायिरूपेण परिरक्षन्ति । अन्यमानवजातौ-रजोवीर्यशुद्धेरभावान्न नैवं भवितुमर्हति, सुतरां वर्णाश्रमधर्मस्य पूर्ण-विकाशत्वात् पितृयज्ञमूलभूतगयादितीर्थसत्वाच्चार्यावर्त्तेन पितॄणां घनिष्ठः सम्बन्ध इत्येतदादीनि कर्मभूमित्वप्रतिपादिकान्येतस्य विशेषप्रमाणान्यवगन्तव्यानि ॥ २६३ ॥

प्रकृतविषयं परिपोषयति—

## ऋषिकृपातः ॥ २६४ ॥

ऋषीणां कृपातोऽपि ऋषीणां दयाधिगमादप्यार्यावर्त्तस्य कर्मभू-मित्वम् । देवानां प्राधान्येन तिस्रः श्रेणयो भवन्ति । अर्यमादयः पितरः, वसुरुद्रादयो देवाः, अङ्गिरोव्यासवशिष्ठादयः ऋषयश्च । त्रयाणामपि देवानामेतेषामार्यावर्त्तेन विशिष्टः सम्बन्धः । देवानां

पितॄणां च कृपाधिगमेनार्य्यावर्त्तस्य कर्मभूमित्वप्रतिपादनं पूर्वोक्त-सूत्रद्वयेन समनुष्ठितमेव, सम्प्रति सूत्रकृता महर्षिणा ऋषीणां विशेष-कृपाप्राप्तिद्वारा आर्य्यावर्त्तस्य कर्मभूमित्वं साध्यते। यद्यप्यासुरीणां नानाविधानां विशिष्टः प्रचारः पृथिव्या अन्यदेशेषु भवन्नस्ति, यदि चानेकालौकिकपदार्थविद्याविष्कारोऽन्यदेशेषु भवति, भविष्यति च किन्तु विद्यानामाध्यात्मिकीनां पूर्णो विकासो भारतखण्डेऽत्रैव वोभूयमान आस्ते। अतो देवलोकवासिनाम् ऋषीणां कृपाऽत्र देशे वर्त्तत इति निश्चप्रचम्। सर्गारम्भे महर्षीणामन्तःकरणेषु वेदाविर्भावः, आर्य्यावर्त्त एव श्रुतिसम्मतानामनेकेषामध्यात्मशास्त्राणां यथाकालं विकासपारम्पर्य्यम्, अत्रैव देशे देवलोकवासनिरतानाम् नित्यानाम् ऋषीणां विविधावताराणामाविर्भावः, सत्स्वप्यनेकेषु विप्लवेषु आध्यात्मिकज्ञानलोपराहित्यमित्यादीन्युदाहरणानि ऋषिकृपाप्राप्ते-ज्ज्वलदृष्टान्तस्वरूपाणि वेदितव्यानि। अत आर्य्यावर्त्तस्य कर्मभूमित्व-विषये सन्देहावसर एव नोदेति॥ २६४॥

पूर्वोक्त विज्ञानं द्रढयति—

**निखिलधर्मसाधनक्षेत्रत्वात्॥ २६५॥**

निखिलानामपि धर्ममतानां साधनस्य क्षेत्रत्वादप्यार्य्यावर्त्तस्य कर्मभूमित्वम्। धर्मभेदास्तदीयाङ्गोपाङ्गानि च प्रागेव प्राकाश्यन्त। यद्यपि मृत्युलोकस्य सर्वत्रापि विभागे निवसतां धर्माधर्माधिकाराः प्रचरन्ति, यदि च पृथिव्यां कुत्रचित्स्थाने कोऽपि धर्मः प्रचरेत् अन्यत्रान्यो धर्ममतं परिपाल्येत, परन्तु तत्र सर्वत्रैव धर्ममतानां पूर्णतालक्षणं न निभाल्यते, ऐहलौकिकपारलौकिकाभ्युदयस्य निःश्रेयसाधिगमस्य निखिलान्यपि लक्षणानि, साधारणविशेषादि-धर्माणामधिकाराः, तदीयानां निखिलानामङ्गोपाङ्गानां परिपूर्णो निर्देशश्चार्यजातावेव समुपलभ्यन्ते। तस्याश्च वर्णाश्रमधर्मावलम्बिन्या

आर्यजातेरादिनिवासभूमित्वादिदमङ्गीकर्त्तव्यमेव यत् साङ्गोपाङ्ग-धर्मस्य परिपूर्णं स्वरूपमत्रैव पावनभूमावार्यावर्त्ते प्रकाशितमासाद्यते। सुतरामार्यभूमिरेव कर्मभूमिरत्यत्र कः सन्देहः ॥ २६५ ॥

प्रकारान्तरेणापि तं सिद्धान्तं समर्थयति—

## त्रिविधाधिकारिजननात् ॥ २६६ ॥

त्रिविधानाम् अधिकारिणां जननात् आर्यावर्त्तस्य कर्मभूमित्वम्। जीवानामाध्यात्मिकोन्नतिहेतवेऽधिकारिनिर्णयो नितरामावश्यकः। सर्वजीवहितावहभावसिद्धिस्तदैव भवितुमर्हति, यदा समस्तानामप्यधिकारिणां तत्तदधिकारानुरूपं पथप्रदर्शनं क्रियमाणं भवेत्। एकस्मिन्नेवाधिकारमार्गे सर्वेषां परिचालनेन नैव कदापि साफल्य-सम्भावना, पृथिव्या अन्यान्यदेशेषु अधिकारभेदव्यवस्थाभावात्। तेषु सर्वविधहितकरसौविध्याभावो दृश्यते। विशेषतो वेदसम्मते सनातने धर्मे सर्वश्रेणीनामधिकाराणां सुव्यवस्थासद्भावात् त्रिविधा-धिकारशृङ्खला सम्यक् सुरक्षिता, अधिकाराधिकारिनिर्णयव्यवस्थायाः सद्भावादेतद्भूमिनिवासिनां चित्ताकाशे तादृशा एव संस्कारा अङ्कुरिता भवन्ति। अत एवात्र भूमौ त्रिविधानामधिकारिणां सम्पूर्णानि लक्षणानि परिदृश्यन्ते ॥ २६६ ॥

अन्यदपि—

## भावत्रैविध्यस्फूर्त्तेः ॥ २६७ ॥

भावानां त्रैविध्यं त्रिप्रकारत्वं तस्य स्फूर्त्तेरपि कारणात् आर्य-देशस्यास्य कर्मभूमित्वम्। आर्यावर्त्तस्यान्तःप्रकृतिर्बहिःप्रकृतिरपि त्रिविधभावपरिपूर्णेति सुस्पष्टम्। अत्रत्यैवार्यप्रजा वेदोक्तकाण्डत्रय-सेवनेन निजास्तित्वसंरक्षणपटीयसी, स्थूलसदाचारैर्महामहिमशालि-

भिर्दैहिकैर्ज्ञैश्चाधिभौतिकीनाम्, उपासनाया भक्तेर्योगस्य च सर्वविधश्रेणिगैरधिकारैराधिदैविकीनां, सर्वप्रकारदार्शनिकचर्चया तत्त्वज्ञानपरिपूर्णतया चाध्यात्मिकीनां स्फूर्त्तीनां लक्षणसमूहो यद्यार्यावर्त्तस्यैव चिदाकाशे विराजते, तर्हीदमवश्यमङ्गीकर्त्तव्यं यत् त्रिविधभावस्फूर्त्तयोऽत्रैव सम्भवन्ति । एतद्विषये प्रत्यक्षलक्षणमिदं यदन्यान्यदेशोद्भवा अनार्यजातयः समागत्य देशेऽत्र निवसन्ति यासु त्रिविधभावपरिस्फूर्तेरभावः, कालान्तरे ह्येतद्भूमिचिदाकाशशक्तिप्रभावात् तास्वपि त्रिविधभावस्फूर्त्तिलक्षणानि विकसन्ति । कारणकलापैरेभिरार्यावर्त्तस्य कर्मभूमित्वं समुचितमेव ॥ २९७ ॥

पुनरुच्यते—

## सर्वर्त्तुसम्बन्धात् ॥ २९८ ॥

सर्वर्त्तूनां सम्बन्धेनापि पूर्णत्वमार्यावर्त्तस्य अन्तराकाशदृष्टान्तानन्तरं बहिराकाशस्य दृष्टान्तो दीयते । तथा हि मृत्युलोकेऽत्रार्यावर्त्तं विहाय नान्यत्र सर्वत्र सर्वथा सर्वर्त्तुविकासः । संसारेऽत्रान्यत्र देशे कुत्रचिद्द्वयोः, अन्यत्र त्रयाणां क्वचिच्च चतुर्णाम् ऋतूनां विकासः, परन्तु ग्रीष्मवर्षाशरद्-हेमन्तशीतवसन्तानां षण्णामपि ऋतूनाम् पूर्णरूपेण नियमतो विकासो भारत एव नान्यत्र । इदमपि विशिष्टं महत्त्वं यदत्र एकस्मिन्नेव काले तत्तत्स्थानेषु षड्ऋतवो विराजन्ते । एकस्मिन् काले आसामप्रदेशेषु वर्षर्तुः, दक्षिणविन्ध्यगिरिनिकटस्थानेषु वसन्तः, हिमालयाभ्यर्णप्रदेशेषु शीतः, पश्चिममरुस्थलदेशेषु ग्रीष्मः, अर्बुदनीलगिरिप्रदेशेषु हेमन्तः, वङ्गकलिङ्गादिप्रदेशेषु च शरदृतुश्च । एवं हि षण्णां ऋतूनां प्रतिष्ठा मनो विनोदयन्ति, विशेषतो नगराजहिमालयस्य नानाप्रदेशेषु कुत्र कुत्रचिद् सर्वेऽपि ऋतवः स्वमाधुर्यविकासं कुर्वन्ति, एतया प्रकृतिपूर्णतयाऽपि आर्यावर्त्त एव कर्मभूमित्वयोग्य इति।२९८॥

अन्यापि प्रबलयुक्तिर्दीयते—

अयमखिलपुण्याकरोहिमाद्रिवत् ॥ २९९ ॥

हिमाद्रिर्हिमालय इवायमार्यावर्त्तोऽखिलपुण्यानामाकरः उत्पत्तिस्थानमित्यर्थः । उत्तरस्यां दिशि हिमालयो नाम पर्वतराजो दिशामभिव्याप्य स्थितो विलसति, स हि पुण्यानामाकरः । पृथ्वीतले विद्यमानानां सर्वेषामपि पर्वतामुच्चतमत्वात् आकाशमण्डले तस्य सर्वापेक्षयोर्द्ध्वगतिः । पृथिव्यां यानि महान्ति, तीर्थस्थानानि, तानि सर्वाण्यपि हिमालयस्य वक्षःस्थले विराजन्ते । सांसारिक पुण्यनदीनामप्ययमेव समुत्पत्तिस्थानम् अयमेव नगाधिराजः । यावन्तः समुन्नता जीवा जन्तवश्च, पुण्यौषधयः सर्व एवैते हिमालये समुपलभ्यन्ते, हिमालयो हि सर्वेषां रत्नधातूनां खनिः । वस्तुतो नगाधिराजोऽयं देवर्षीणां लीलाभूमितया सर्वपुण्यानामाकरः । अनेन पूर्वोदाहरणेन धर्मविकासकेन्द्रत्वात्, वेदप्राकट्यभूमित्वात्, अध्यात्मविद्याविकासशीलत्वात्, दैवजगतः प्रत्यक्षपरिचायकत्वात्, देवानाम् ऋषीणां श्रीमद्भगवतश्चावताराविर्भावभूमित्वात्, सर्वश्रेणीनां प्राणिनामाश्रयस्थानत्वात्, सभ्याया मानवजातेश्चिरजीविनीत्वविधानात्, अध्यात्माधिदैवाधिभूतसहजाख्यानां चतुःसिद्धीनां प्राकट्यस्थानत्वात्, श्रीमद्भगवत्कृपाप्राप्तेः स्थानत्वाच्च हेतोर्मृत्युलोकेऽत्र आर्यावर्त्तः सर्वविधपुण्याकर इत्यत्र कः सन्देहः ॥ २९९ ॥

इदानीं कर्मविपाकस्य मौलिकं भेदमाचष्टे—

ज्ञानाज्ञानभिन्नोभोगः ॥ ३०० ॥

ज्ञानतोऽज्ञानतश्च भोगो द्विविधः । क्रियाप्रतिक्रिययोर्नित्यसम्बन्धः, यत्र क्रिया तत्र प्रतिक्रियाऽपि नूनं भाविनी । मनुष्यक्रिय-

माणानां कर्मणां प्रतिक्रियास्वरूपा फलोत्पत्तिरव्यवश्यं सम्भवा। शुभाशुभकर्मणां याथातथ्येन प्राप्तं फलमेव भोग इत्युच्यते। ज्ञानाज्ञानाभ्यां द्विप्रकारको भोगः स्वाभाविक एव, यतो जीवो न सर्वज्ञः। विशेषतो जीवभोग एकत्र देशे काले वा नोत्पद्यते। देशभेदात् कालभेदाच्च भोगस्यावस्थान्तरत्वं स्वाभाविकम्। उदाहृत्येदमवधारणीयं यत् देशभेदेन नरकस्वर्गभोगो ज्ञानतो भवति। मृत्युलोकभोगस्त्वज्ञानत एव, एवं कालभेदेन बाल्यावस्थाया भोगोऽज्ञानतः, ज्ञानप्राप्तावस्थाया भोगो ज्ञानत एव जायते। एवं हि विविधा भोगाः श्रेणीद्वयसंविभक्ता विज्ञेयाः ॥ ३०० ॥

आद्यस्य वैज्ञानिकं स्वरूपमभिधत्ते—

**आद्यः स्वाभाविकः ॥ ३०१ ॥**

आद्यो ज्ञानजनितोभोगः स्वाभाविकः। संसारेऽत्र दृश्यते यत् राजानं राजप्रतिनिधिं वा द्वारीकृत्यापराधिने पुरुषाय दीयमानदण्डकाले, तदीय-शुभकर्मपारितोषिकदानसमये च प्राय उच्यते यत् तवामुकस्याशुभकर्मकृते दण्डो दीयते किम्वा अमुकस्य शुभकर्मणःकृते पारितोषिकमर्प्यते, अथैतन्नियमानुसारेण राजदण्डो यमदण्डः स्वर्गादिभोगाधिगमश्च स्वाभाविकः। कर्मविपाककाले एतस्या अवस्थायाः स्वाभाविकत्वात् तादृशश्रेणिगो भोगोऽधिको भवति। देवासुरपितृ-प्रेतनरकलोकेषु, तथात्र मृत्युलोकेऽपि गर्भावस्थायाम्, राज्ञः समाजस्य वा पुरतस्तिरस्कृति-पुरस्कृतिकाले, तादृशानेकसमये च ज्ञानसहिता भोगनिष्पन्तिर्जायते। एतादृशश्रेणिभोगावसर एव जीवैः स्वजीवने समधिको लभ्यते ॥ ३०१ ॥

द्वितीयमभिधीयते—

**प्रकृतिप्रसादजोऽन्यः ॥ ३०२ ॥**

अन्य अज्ञानजनितोभोगः प्रकृतेः प्रसादेन जायते इत्यवधेयम्। पूर्वोक्तविचारमनुस्मृत्येदं निश्चितमेव यत् ज्ञानजनितस्य भोगस्यावसरोऽधिकः, अज्ञानजनितस्य तु भोगस्य कालः स्वल्प एव, परन्तु सूक्ष्मदृष्ट्या विचारे क्रियमाणे निश्चितमेवेदं यत् अज्ञानजनितो भोगः प्रकारान्तरेणान्याय्यः प्रतीयते। यतो बोधमकारयित्वा तिरस्कारः पुरस्कारो वा न न्यायसंगतः। परन्तु तत्कारणान्वेषणेन प्रतीयत इदं यत् जगज्जननी परमकृपालुः प्रकृतिरेवं विधत्ते। उदाहरणरूपेणेदमवधेयं यत् कस्यापि जीवस्य शुभाशुभभोगप्राप्तिकाले एतत् ज्ञानं स्याद् यत् कस्य कस्य जन्मनः केषां केषां कर्मणां फलमेतत्, तदानीमशुभफलभोगमात्रा शतगुणिताऽधिका वर्धेत, तथैव यदि शुभफलभोगकारणं ज्ञातं भवेत् तर्हि शुभफलभोगानन्दो ह्रासमुपगच्छेत्। शुभाशुभयोरुदाहरणं प्रदत्तम्, येन विज्ञानस्यैतस्य सुस्पष्टता सम्यगवगता स्यात्। यदि कस्यचिद् घोरव्याधिग्रस्तस्य जीवस्य व्याधिकारणभूतघोरपापकर्मणः स्मृतिः संप्राप्ता स्यात् तर्हि घोरेण व्याधिना सहैव असहनीय आधिरपि समुत्पन्नो भवेत्। एवं हि स्त्रीविलासनिरतस्य जीवस्य पूर्वसंयोगवियोगस्मृतिं प्राप्तवतः स्वपत्न्या जन्मान्तरीय-मातृकन्यादिसम्बन्धस्मृतिः सम्भवेत् तर्हि तदीयं तत्सुखं तिरोदध्यात्। अत इदमङ्गीकर्त्तव्यं यत् जगज्जनन्याः कृपैव तत्स्मृतिनाशकारणम्॥ ३०२॥

तत्स्वरूपस्य स्पष्टतां विधत्ते—

**सर्वो द्वन्द्वमूलो विचित्रश्च॥ ३०३॥**

सर्वोऽपि ज्ञानजन्यो वाऽज्ञानजनितो वा भोगो द्विविधश्रेणिरूपः कर्मविपाक इति वा द्वन्द्वमूलको विचित्रश्च भवति। द्विविधोऽपि भोगः पुण्यपापविचारतः सुखदुःखप्रदः, अतो द्वन्द्वमूलकः। प्रत्येकोऽपि

अनेकभेदभिन्नत्वात् वैचित्र्यपरिपूर्णश्च स्वर्गीयो नारकीयश्च भोगो द्वन्द्वस्योदाहरणम्, स्वर्लोकस्य तदीयसुखस्य चानेके भेदाः, नरकस्य तदीयभोगस्य चानेके भेदाः, इत्थं सर्वं भोगवैचित्र्यलक्षणोदाहरणम् ॥ ३०३ ॥

भोगहेतुभूतमाद्यमुच्यते—

## उन्नेतृ पुण्यकर्म ॥ ३०४ ॥

पुण्यजनकं कर्म समुन्नतिकृदभिधीयते। पुण्यं कर्म सत्त्वगुणवर्द्धकमित्युक्तमेव। येन धारिका शक्तिः सुरक्षिता अभ्युदयनिःश्रेयसयोः पन्था निष्कण्टकः स्यात् तत्कर्म पुण्यमिति। सुतरां पुण्यकर्मणा मानवसमुन्नतिः सिध्यत्येव। परन्तु तत्पुण्यकर्मभोगं भुञ्जानो जीवो यदि पापं कर्म न कुर्यात्तर्ह्यसौ जन्मनि जन्मान्तरे वा प्रतिक्षणमभ्युदयं प्राप्नुवन् उच्चैरप्युच्चतरं लोकं समुन्नताधिकारं चाधिगच्छन् परमं पदमुपैति। अतः सिद्धमिदं यत् पुण्यकर्मणा जीवोन्नतिरवश्यम्भाविनी ॥ ३०४ ॥

द्वितीयमभिधत्ते—

## विपरीतमन्यत् ॥ ३०५ ॥

पापं कर्म पुण्यकर्मतो विपरीतम्। पुण्यं कर्म चेत्समुन्नतिकरं तदा पापमधोगतिसाधकं सिध्यति। सत्त्वगुणवृद्ध्या धर्मस्तमोगुणप्रवर्धनेनाधर्म इत्यपि प्रागुदीरितम्। धर्मप्रदकर्मणा पुण्यमधर्मप्रदेन च पापमुत्पद्यते। सुतरां यद्येतत्सिद्धं यत् यदि पुण्यं कर्म जीवानामूर्ध्वगामिस्रोतः परिरक्षति तदा पापं कर्म तु विपरीतत्वादवश्यमेव दैनन्दिनं जीवमधोगामिनं विदधाति। पापकर्मणा जीवः प्रेतनरकादिदुःखमयान् लोकांस्तु विन्दत्येव नीचैरवतीर्य स्थावरत्वमप्यासादयितुमर्हति ॥ ३०५ ॥

प्रसङ्गतः शङ्कां समाधत्ते—

प्रायश्चित्ततोऽपसरन्ति कर्माणि हस्तितोहस्तिवत् ॥३०६॥

यथा एकेन प्रबलेन हस्तिनाऽपरो हस्ती पलायते तथैव प्रायश्चित्तेन क्रियमाणेन पापं कर्म अपसरति नश्यतीत्यर्थः। जिज्ञासुरत्र शङ्कते यद् यदि पापं कर्म दुःखाधागतिकरं तर्हि पापकर्मविमुक्तये तत्कर्मविपाकादात्मानं रक्षितुं शास्त्रीया प्रायश्चित्तव्यवस्था निर्मूलेति चेन्न। एतादृशशङ्कासमाहितय एव सूत्रकृन्महर्षिर्व्याचष्टे यत् प्रायश्चित्तेन सत्फलमवश्यमुदेति। यद्यपि क्रियमाणस्य पापकर्मणः शक्तिर्न नश्यति, यतो "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति शास्त्रे सिद्धान्तितत्वात्। किन्तु हस्तियुद्धवत् प्रायश्चितद्वारा पापकर्मविपाकोऽपसरति। यथैकस्योन्मत्तस्य हस्तिनोऽत्याचारादात्मनो विमोचनाय तत्सम्मुखमेकं ततोऽपि बलवन्तं शिक्षितं गजेन्द्रं समानीय युद्धे कारिते बलवता शिक्षितेन करीन्द्रेण पराजित उन्मत्तो गजः पलायते, तथैव प्रायश्चित्तानुष्ठानदानादिकेन प्रबलेन कर्मणा पापकर्मणोऽशुभो विपाकोदयस्तदानामपसरति। एतदेव प्रायश्चित्तादिशास्त्रोक्तोपायरहस्यमवधेयम् ॥ ३०६ ॥

पापवेगोऽनिरुद्धः किं करोत्यमिधत्ते—

पापरंहः शिलाहतस्रोतो वेगवत् ॥ ३०७ ॥

पापस्य कर्मणः रंहो वेगः शिलाभिराहतस्य स्रोतसो वेग इव वर्धत इति शेषः। यदि पापकर्मवेगो निरुद्धो न स्यात् अथवा पापकर्म संस्कारराशेरनन्तरं पापकर्मराशिः क्रमशः सञ्चितो भवेत्, किम्वा प्रायश्चित्तयज्ञतपोदानादिपुण्यकर्मद्वारा पापस्य प्रबलं रंहो निर्बलं न क्रियेत तर्हि पर्वतप्रदेशीय-शिलाहतनदीस्रोतोवेगवत् तत् शक्तिमद् भूत्वा नितरां प्रवर्धते। इदं प्रायशोऽवलोक्यते यत् पार्वत्य-

प्रदेशीयानां तरलतरङ्गिणीनां द्रुतगामिनीनां नदीनां वेगाभिमुखं क्वचित् सुदृढ़ा स्थिरा शिला समापतति, तदानीं तया शिलया नदीस्रोतो मूर्च्छितं सत् अधिकाधिकं प्रवर्धते, तथैव पापकर्म-वेगोऽपि परेण पापकर्मणा संश्लिष्टो वावृध्यते ॥ ३०७ ॥

प्रसङ्गादुभयोर्भेदं व्याहरति—

ज्ञाताज्ञाते ॥ ३०८ ॥

उभयोरेव पुण्यपापयोः प्रत्येकस्य ज्ञातमज्ञातमिति भेदद्वयं ज्ञातव्यम्। पुण्यमपि ज्ञातमज्ञातम्, पापञ्चापि ज्ञातम् अज्ञातं चेत्यर्थः। कर्मणो गहनगतित्वात् पुण्यपापयोः स्वरूपानन्त्य-वैचित्र्येऽपि तयोर्द्वयोरपि प्रत्येकस्य द्वौ द्वौ भागौ भवितुमर्हतः। पुण्यस्य पापस्य च भागद्वयमवगन्तव्यम्। संकल्पपूर्वकं तपोदान-यज्ञादिकं क्रियमाणं ज्ञातस्य संकल्पमन्तरेण जगत्कल्याणपरोप-कारादिबुद्धया स्वाभाविकं शारीरिकं चानुष्ठितं कर्म अज्ञातस्य पुण्यस्योदाहरणमवगन्तव्यम्। एवमेव विचारपूर्वकमनुष्ठितं जीवहिंसापरोपकारचौर्यादिकं ज्ञानकृतस्य, कामक्रोधदम्भेर्ष्या-प्रभृतिस्वभाववेगेन विधीयमानं, ज्ञानं विनैव जीवहिंसनादि वा अज्ञानकृतस्य पापस्योदाहरणमवधेयम्। अज्ञाते पापे चापि सावधानतां गमितोऽपि जीवो यदि पुनः पापमाचरति, तदानीं तत् ज्ञानकृतपापस्वरूपे परिणमति एतादृशश्रेणीविभागमनुसृत्य पुण्यपापकर्मविपाकः प्रभवति। अज्ञातपापकर्मविपाकापेक्षया ज्ञात-पापकर्मविपाकः सातिशयबलशालीत्यस्मिन् विषये स्मृतिषु बहूनि प्रमाणानि लभ्यन्ते ॥ ३०८ ॥

तयोर्भोगलोकावभिधत्ते—

स्वर्निरयौ तत्फले ॥ ३०९ ॥

तत्फले तयोः पुण्यपापयोः फले परिणामभूतौ स्वर्निरयौ स्वर्गलोकनरकलोकौ स्तः। पूर्वनिरूपितकर्मणां भोगनिष्पत्तये तद्बलेन ये भोगलोका निर्मितास्ते श्रेणिद्वयविभक्ताः सन्ति। पुण्यभोगात्मका लोकाः स्वर्गनाम्नाभिधीयन्ते, पापभोगात्मकाश्च नरकाभिधानेन प्रोच्यन्ते। यथा पुण्यभोगवैचित्र्यमनुसृत्य किन्नर-गन्धर्व-पित्रसुरादयोऽनेके भोगलोकाः सन्ति; मृत्युलोकेऽपि पुण्य-भोगो जायते, तथैव पापभोगविचित्रतानुसारेण नरकप्रेतलोक-योरप्यनेके विभागाः सन्ति, मृत्युलोकेऽपि पापभोगस्यावसरो लभ्यते, परन्तु सर्वेषां भोगलोकानां श्रेणिद्वयविभाग एव साधीयान्। स्थूलदेहनिपातानन्तरं जीवः पुण्यजनितसुखभोगनिष्पत्तये नाना-स्वर्गलोकानधिगच्छति, पापोत्पन्नदुःखभोगाय च नरकलोकेषु याति॥ ३०९॥

प्रसङ्गतः कर्मणो विस्तारहेतुं व्याचष्टे—

## क्रियया प्रतिक्रिया॥ ३१०॥

क्रियया प्रतिक्रियाप्यवश्यम्भाविनी। वृत्तरूपस्य कर्मणो बीज-स्वरूपः संस्कारः ततश्च कर्मविपाकस्वरूपं फलम्, ततश्च भोगनिष्पत्ति-स्थलरूपस्य भोगलोकस्याधिगम इत्येवं प्रकारेण कर्मप्रवाहः प्रवहन् नैव कदापि क्षीयते। स च प्रतिक्रियया परिपुष्टः सन् उत्तरोत्तरं प्रवा-हित एव तिष्ठति। कर्मणोऽनुष्ठाने तद्भोगे च क्रियायाः प्रतिक्रिया सम्पद्यते। येन कर्मप्रवाहो नियमितरूपेण स्थायितां प्रतिपद्यते। जीवो यदा शारीरिकं मानसिकं वा कार्यं विधत्ते, तदानीं तत्क्रियया-ऽन्याक्रियाऽऽविर्भवति तदानीं तत्प्रतिक्रियाबीजस्वरूपसंस्कार-स्तच्चित्ते संगृहीतः सुरक्षितश्च तिष्ठति, एवं किल जीवो निजपुण्यस्य पापस्य वा भोगं भुङ्क्ते, तद्भोगावस्थायामपि शरीरेण मनसा वा

शुभाशुभकर्मसंस्कारसंग्रहावसरो लभ्यते । एते किल कर्मबीजभूताः संस्काराः बीजतो वृक्षरूपेण परिणमन्तो, बोभूयन्ते । एवं हि क्रियातः प्रतिक्रियासद्भावो कर्मप्रवाहः स्थितिशीलतां प्रपद्यते ॥३१०॥

तेन किं स्यादित्युच्यते—

प्राचुर्य्यम् ॥ ३११ ॥

एवं सति स्वत एव प्रतिक्रियायां प्राचुर्य्यं निभाल्यते । भोगसमये कर्मकाले वा सर्वदैव क्रियातः प्रतिक्रियाया अवसरे समागते सा प्रतिमुहूर्त्तं प्रवर्धते । एवमधिकाधिकं संस्काराः संगृह्यन्ते । कर्मस्वरूपवृक्षोत्पत्तिकारणभूतबीजरूप-संस्काराणामेतावान् संग्रहो जायते यत् भोगद्वारा तत्क्षयोऽसम्भव एव । अतः सर्ववादिसम्मतोऽयं सिद्धान्तो यत् संस्कारप्राचुर्य्यकारणात् भोगद्वारा कर्मविमुक्तिरसम्भवा ॥ ३११ ॥

प्रसङ्गतः शङ्कां समाधत्ते—

सर्गसाम्यरक्षणं कर्मवैचित्र्यमूलकम् ॥ ३१२ ॥

सर्गस्य सृष्टेः साम्यस्य रक्षा कर्मणो वैचित्र्यमूलिका ज्ञातव्या । द्वन्द्वमूलकेन कर्मणा तद्विपाकेन च समुत्पद्यमानक्रियाप्रतिक्रियाप्राचुर्य्ये सृष्टिश्रृङ्खला तु न प्रणश्यतीति शङ्कानिराकृतये सूत्रकृता महर्षिणा सूत्रमेतदाविष्कृतम्, सृष्टि हि द्वन्द्वमूलिका-द्वन्द्वसामञ्जस्य रक्षयैव सृष्टेरस्तित्वसम्भवः । अत एव रागद्वेषयोः, आकर्षणविकर्षणयोः, रजस्तमसोश्च समन्वय एव सृष्टिधारकधर्मस्योदयः । रजस्तमसोः समन्वये प्रकाशितं सत्त्वमेव धर्मप्रतिष्ठास्थानम् । यथा सामुद्रं जलं वाष्परूपेणाकाशे समागतं पुनश्च वृष्ट्या नदीप्रवाहरूपेण च सृष्टिसामञ्जस्यं सुरक्षत् समुद्रमुपढौकते, तथैव द्वन्द्वात्मकं कर्म बहुस्वरूपं सदपि सृष्टिसामञ्जस्य-रक्षणकारणतामापद्यते । विज्ञान-

मेतत्प्रकारान्तरेणाववोधयति, तथाहि सृष्टिसामञ्जस्यं सुरक्षति जडचेतनात्मकसृष्टिप्रपञ्चे जीवो जड़राज्यात् चेतनराज्याभिमुखमग्रेसरन् यदा मानवत्वं प्रतिपद्यते, तदानीमसौ स्वकीयया स्वाधीनतयैव कर्म-भोग-प्राचुर्यदशामुत्पादयति, तथा च तदीयोद्ध्र्वगतिरावागमनचक्ररूपावर्त्ते निमग्ना किञ्चिदवरुध्यते। परन्तु दशायामस्यां जीवो नैजं कर्मानुतिष्ठन् दुःखभोगेन तिरस्कृतः सुखभोगेन च पुरस्कृतः सन् आत्मानं सावधानीकुर्वन् पुनश्च क्रमशः स्वीयामूद्ध्र्वगतिमासादयति। स्वकीयस्य सुखस्य दुःखस्य च सन्धिकाले सावधानो जायते प्रकृतिसामञ्जस्यकारिणो नियमस्य च साहाय्येन जगदाधारतेजसा समाकृष्टो धर्मस्य धारिकायाः शक्तेर्वलेन अभ्युदयं निःश्रेयसं चाधिगच्छति। सृष्टिसामञ्जस्यरक्षणशीलस्य प्राकृतिकनियमस्यायमुदर्कः। अन्यच्च जड़स्य जगतः सामञ्जस्यरक्षा चैवमधेया यत् पञ्चभूतात्मके जगति पाञ्चभौतिकाः परमाणवः सदैव समानास्तिष्ठन्ति, केवलं तेषां वाह्याकारे रूपान्तरं प्रतीयते। जलीयपरमाणुराशयः वाष्पस्वरूपेण; मेघरूपेण, वारिधारात्मना, नदीप्रवाहात्मना, समुद्ररूपेण च पृथक् पृथक् प्रतीयन्ते। परन्तु जलपरमाणुसमन्वयरक्षायां नाणीयानप्यन्तरायः॥ ३१२॥

विज्ञानमिदं परिपोषयति—

तदर्थं स्वयोनिहिंसा ॥ ३१३॥

पूर्वोक्तप्राकृतिकनियममनुसृत्येदमवलोक्यते यत् स्वयोनिहिंसा सर्वत्रैव सृष्टिविभागे प्राप्यते। रागद्वेषौ वृत्तिविशेषौ द्वावप्यन्योन्यविरुद्धौ। उभावप्येतौ प्रकृतेराकर्षणविकर्षणशक्तिमूलकौ। उभयोः समन्वयेन सृष्टिरक्षा। अतः स्वस्मिन राग: स्वयोनावन्यस्मिन् द्वेष इत्युभयोः सामञ्जस्येन सृष्टिसंरक्षणं स्वतः सम्पद्यते। अत एव सर्गेऽत्र सर्वेष्वपि जीवेषु स्वयोनिविद्वेषो दृश्यते। आकर्षणरूप-

रजोगुणविकर्षणरूपतमोगुणयोः समन्वये सृष्टिधारकस्य सत्त्वगुणस्योदयः, तेन च धर्मस्थितिरिति पूर्वमेव सविस्तरमभिहितम् ॥३१३॥

स्वसिद्धान्तपुष्ट्यै उदाह्रियते—

**मृगहिंसा केसरिणाम् ॥ ३१४ ॥**

केशरिणां सिंहानां मृगहिंसनं तदुदाहरणमित्यर्थः। मृगजातीयाः पशवो जीवरक्षकाणामोषधिप्रभृतिजीवप्राणरक्षकानां नानानैरुज्यकारिवनस्पत्यादीनां विनाशं प्रकुर्वते। मृगसंख्यायां प्रवृद्धायां वहुमूल्यवनस्पतीनां संसारतः समूलनाशः प्रसज्येत, शस्यानां संरक्षणमप्यसम्भवम्। अतः सिंहैर्मृगहिंसने समनुष्ठीयमाने सृष्टिसामञ्जस्यरक्षा भवितुमर्हति ॥ ३१४ ॥

द्वितीयमुदाहरणं दीयते—

**कीटभक्षणं विहङ्गमानाम् ॥ ३१५ ॥**

विहङ्गमानां पक्षिणां कीटभक्षणं द्वितीयमुदाहरणम्। जरायुजजातीयोदाहरणानन्तरमण्डजजातेरुदाहरणं दीयते। पक्षिणः कीटाश्चाण्डजयोनावन्तर्भवन्ति। विषाक्ताः कीटपतङ्गाः शस्य-पुष्पफलनाशकाः, एवं हि कीटैः सामान्यतः सर्वेषां विशेषतश्च मानवानां सुमहत्या हानेः सम्भावना। कीटभुजः पक्षिणः कीटान् भक्षयित्वा सृष्टिसामञ्जस्यरक्षायां साहाय्यमातन्वते ॥ ३१५ ॥

तृतीयमुदाहरणं ददाति—

**स्वेदजस्य स्वेदजभक्षणम् ॥ ३१६ ॥**

स्वेदजस्य जीवस्य स्वेदजो जीवो भक्ष्यत्वेन उपकल्पितः, सृष्टावत्र स्वेदजा अमृतस्वरूपा विषरूपाश्चेति श्रेणिद्वयविभक्ताः। अमृतस्वरूपाः प्राणरक्षकाः, विषरूपाश्च प्राणनाशका भवन्ति।

स्वाभाविकोऽयं नियमो यत् प्राणरक्षकाः स्वेदजाः प्राणनाशकान् स्वेदजान् विनाशयन्ति, प्रमाणमेतत्प्रायशः समुपलभ्यते यत् प्राणरक्षकस्वेदजानामाहाराय प्राणनाशक स्वेदजशरीराणि समुत्पद्यन्ते । यद्यमृतमयस्वेदजानां द्वारा विषमयस्वेदजविनाशो न स्यात् तर्हि मानवाः पशवश्च महामारीप्रभृतिरोगैर्विनश्येयुः । अतो हि स्वेदजयोनिषु स्वयोनिसंघर्षः सृष्टिसमन्वयसंरक्षणहेतुरवधेयः ॥ ३१६ ॥

चतुर्थमुदाहरणं प्रदीयते—

## तरोस्तरुनाशनम् ॥ ३१७ ॥

तरोर्वृक्षस्य तरुनाशनम् वृक्षविनाशनं चतुर्थमुदाहरणमवधेयम् । उद्भिज्जयोनिषु पद्धतिरियं विविधप्रकारेण परिदृश्यते । छायां द्वारीकृत्य अन्येषां तरूणां विनाशः, परगाच्छात्मना च वृक्षान्तरप्रणाशः, लतारूपेण च महीरुहान्तरविनाशः, एकजातीयानां समधिकसमुत्पन्नानामुद्भिज्जानां द्वाराऽन्यदुद्भिज्जविनाशश्चेति नानापद्धत्योद्भिज्जाः स्वयोनिविनाशकारणतां व्रजन्ति । एवं किल प्रकृतेरानुकूल्येन सृष्टिसमन्वयस्य सुरक्षा सम्पद्यते ॥ ३१६ ॥

पञ्चममुदाहरणम्—

## धर्मयुद्धं स्वास्थ्यकरं समाजस्य ॥ ३१८ ॥

धर्मयुद्धं हि समाजस्य स्वास्थ्यकरमभ्युपगन्तव्यम् । मानवयोनौ धर्मयुद्धद्वारा सृष्टिसामञ्जस्यं सुरक्ष्यते । धर्मरक्षणमधर्मनाशः, साधुपरित्राणमसाधुध्वंसः, सदाचारप्रचारः, कदाचारविनाशः, पशुबलसंहारः, आत्मबलप्रसारः, पापतिरस्कारः, पुण्यपुरस्कारः, राजसिकतामसिकशक्तिसमन्वयेन सात्त्विकशक्तिविकासः, समाजे शान्तिस्थापनं, राजप्रजाशक्तिसमन्वयश्चेत्यादीनि धर्मयुद्धस्य शुभफलान्यवधेयानि, अतो मानवसमाजे धर्ममवलम्ब्य युद्धप्रवृत्तिर्मनुष्यसमाजस्वास्थ्यकरीति नात्र सन्देहावसरः ॥ ३१८ ॥

षष्ठमुदाहरणं प्रदीयते—

देवासुरसंग्रामश्च ॥ ३१६ ॥

अन्तर्जगति सम्पद्यमानो देवानामसुराणां च संग्रामोऽपि दैवजगतस्वास्थ्यरक्षकः, दैवसृष्टिसामञ्जस्यप्रतिष्ठापकश्च बोभवीति । तथाहि श्रुतौ स्मृतौ च—

"द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुराः, त एषु लोकेष्वस्पर्द्धन्त, ते ह देवा ऊचुः—हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति"—इति बृहदारण्यकश्रुतिः ।

सामञ्जस्यं तथा सृष्टेर्गत्या द्वन्द्वस्वरूपया ।
समन्तान् सर्वथाप्यातुं सुरा अप्यसुरा अपि ॥
दैवे जगति लिप्सन्ते प्रभुत्वमतियत्नतः ।
सुरासुरविरोधस्तत् सूक्ष्मे जगति सर्वदा ॥
दैवराज्ये यदा देवाः प्राधान्यं यान्ति सर्वदा ।
धर्मपूर्णत्वतः सृष्टेः सामञ्जस्यं तदाऽनघम् ॥

कालप्रभावाज्जीवानां प्रारब्धाच्च समष्टितः ।
शैथिल्यं देवसाम्राज्यं यदा प्राप्नोति सर्वथा ॥

प्राधान्यमसुराणां तु वृद्धिमेति तदा ध्रुवम् ।
देवक्रियासु वैषम्यात् सृष्टौ नानाविपर्ययः ॥

क्षीणे तपसि देवानामसुरा यान्ति मुख्यताम् ।
तेषां तपःक्षये देवा लभन्ते ।प्रभुतां पुनः ॥

आधिदैवे सदाराज्य इत्थं यान्ति सुरासुराः ।
प्रभुत्वं नित्यसंग्रामरहस्यं हि तयोरिदम् ॥ इति—विष्णुगीता ]

उपर्य्युक्तश्रुतिस्मृतिप्रमाणैरिदं सिध्यति यत् दैवे जगति देवासुरसंग्रामः सदैव बोभवीति, देवा असुरराज्यमपहर्त्तुं नेच्छन्ति, परन्तु-

दानवा देवराज्यमात्मसात्कर्त्तुमभिलषन्ति । एतया पारस्परिकस्पर्द्धया देवाः सावधानाः संतिष्ठन्ते, तेषां पतनसम्भावना न भवति। एतेनोद्र्ध्वलोकव्यवस्था सुरक्षिता तिष्ठति, इयमेव हि दैवराज्यसामञ्जस्यभित्तिरवधेया, एतद्भावेन देवानां पतने जायमाने दैवशृङ्खलायां विगुणितायां सत्यां सम्पूर्णस्यापि ब्रह्माण्डस्य शृङ्खला विशीयते । एतदवस्थायां स्थूलस्यास्य मृत्युलोकस्यापि व्यवस्था प्रणाशमुपगच्छति । यतः स्थूलमिदं जगत् दैवजगदधीनं विद्यते। असुराणामस्तित्वमपि स्वसीमाभ्यन्तर्गतत्वं च तादृशसुव्यवस्थानुकूलमेव । अन्यच्चासुराणां प्रभावयुद्धशक्तिभयादिना देवराजस्तदधीनस्थाः पदधारिणश्च सावधानाः स्वधर्मे स्वीयकर्त्तव्ये च परायणाः सन्तिष्ठन्ते। येन दैवलोकशृङ्खला संरक्ष्यते। ततश्च स्थूलमृत्युलोकव्यवस्थापि सुरक्षिता तिष्ठति। एतदेवैतद्विज्ञानसामञ्जस्यरहस्यम् ॥ ३१९ ॥

प्रसङ्गाद् वर्णाश्रमधर्ममहत्त्वं प्रतिपाद्यते—

**नितरां सामञ्जस्यरक्षको वर्णाश्रमधर्मः ॥ ३२० ॥**

वर्णाश्रमधर्मस्तु निरन्तरं सामञ्जस्यस्य समन्वयस्य रक्षको विज्ञातव्यः। सृष्टिसामञ्जस्यरक्षणमेव प्रकृत्यनुकूलं कर्म तदेव च धर्मोदयस्य मौलिकं तत्त्वम्, सामञ्जस्याभावात् सृष्टेर्विनाश एव । सामञ्जस्यसुरक्षणेनैव सर्गस्य रक्षणम् । आर्यजातीयजातिगतजीवनसामञ्जस्यरक्षा वर्णाश्रमव्यवस्थयैव सम्पद्यते । वर्णाश्रमधर्मस्य सामञ्जस्यकारिण्या व्यवस्थयैवेयमार्यजातिश्चिरं जीवति । तदभावादेवानार्या जातयो जलबुद्बुदवदुदीयमानाः स्वल्पेनैव समयेनासभ्यतामुपगता नष्टभ्रष्टाः कालकवलिताः सम्पद्यन्ते । अनादिकालतो मृत्युलोके अत्रानन्तानार्यजातयः समुत्पद्यमाना बलशालिन्योऽपि यथाकालं करालकालकवलिताः समभूवन् ।

परन्त्वियमार्यजातिरनादिकालादारभ्येदानीं यावत् स्वीयवर्णाश्रमव्यवस्थयैव चिरं जीवति जीविष्यति च। प्रवृत्तिरोधकेन वर्णधर्मेण निवृत्तिपोषकेण आश्रमधर्मेण च प्रत्येकं चतुर्धाविभक्तेन कथमिव मानवसमाजस्य अधिभूताधिदैवाध्यात्मशुद्धयः सम्भवन्ति, कथमिव च मनुष्यजातेरभ्युदयनिःश्रेससमार्गो निष्कण्टक इति प्रागेव सविस्तरं प्रपञ्चितम्। वर्णाश्रमधर्मेणैवाधिभौतिके जगति रजोवीर्यशुद्धया सामञ्जस्यरक्षणम्, तेनैवाधिदैविके जगति यथोचितधर्मसाधनद्वारा दैव्याः शृङ्खलायाः सुरक्षायां साहाय्यमधिगम्यते, तेनैव वर्णाश्रमधर्मेण च यथाक्रमं विषयवैराग्यसमुन्नत्या ज्ञानभूमिक्रमोन्नत्या चाध्यात्मिकस्य जगतः शृङ्खला सुरक्षिता तिष्ठति। समन्वयविज्ञानद्वारा सृष्टेः कल्याणस्यैतदेवाद्भुतं रहस्यमवगन्तव्यम् ॥ ३२० ॥

प्रकृतविज्ञानं पोषयति—

## नाध्यात्मशक्तः संकरोऽनधिकारित्वात् ॥ ३२१ ॥

सांकरी प्रजा अनधिकारिणीत्वादाध्यात्मिकोन्नतौ न समर्था। वर्णधर्मस्य मौलिकतत्त्वसाहाय्येन महर्षिः सूत्रकारः प्रकृतं विज्ञानं परिपोषयति। रजोवीर्यशुद्धिद्वारा उभयसंस्काराकर्षणेन मानवे कथङ्कारं योग्यताऽधिगम्यत इति पूर्वमेव सिद्धान्तितम्। रजोवीर्यशुद्ध्यभावात् मनुष्येषु संकरोत्पत्तिः। वैगुण्यादेव हेतोः संकरे नाध्यात्मिकी क्रमोन्नतिः। रजोवीर्ययोरेकस्याप्यशुद्धतायां बाधोत्पत्तिः। एवं संस्कारविपर्ययेण मलस्याशुद्धिः, तथा च विक्षेपस्याशुद्धिः। उभयोरेव मलविक्षेपयोः प्रभावेण आवरणाधिक्यं स्थास्यत्येव। अतो वर्णसंकरी प्रजा कामार्थलोलुपा नेयं धर्मज्ञानाधिकारिणी॥३२१॥

विज्ञानं तत्प्रकारान्तरेणापि पोषयति—

## तस्मान्निषिद्धमध्यात्मदानं नीचे ॥ ३२२ ॥

तस्मादेव हेतोर्नीचे वर्णसंकरेऽध्यात्मज्ञानस्य दानं शास्त्रे निषिद्धम् । सम्प्रति आश्रमधर्ममौलिकतत्त्वावलम्बनेन प्रकृतं विज्ञानं परिपोष्यते। आचारप्रचुरो वर्णधर्मः, ज्ञानप्रचुरश्चाश्रमधर्मः। वर्णधर्मे कर्मप्राधान्यात् योग्यताधिगमाय तत्र रजोवीर्यशुद्धेरावश्यकता। आश्रमधर्मे तु ज्ञानक्रमोन्नति सम्बन्धः। ब्रह्मचर्याश्रमे विद्यायै प्रयत्नोऽनुष्ठीयते। ततश्च ज्ञानं लब्ध्वा गृहस्थाश्रमे ज्ञानजनन्या विद्यायाः साहाय्येन साधारणं ज्ञानं प्रत्यक्षं क्रियते। यतो गृहस्थाश्रमे द्वन्द्वमूलकानुभवस्य घातप्रतिघाताभ्यां ज्ञानराज्यस्य सर्वेषामपि वैभवानां मननावसरः समधिगम्यते। वानप्रस्थाश्रमेऽध्यात्मविद्याभिवृद्धेः, संन्यासाश्रमे च तदुपलब्धेः समयः समुपलभ्यते । आश्रमधर्मयथोचितनियमपालनद्वारा समधिगताध्यात्मविद्याधिकारिणामेव क्रमोन्नतिमार्गः सरलायते, नान्येषाम् । आश्रमधर्मभ्रष्टनीचापूतमानवेभ्योऽध्यात्मविद्योपदेशो नैव केवलं निष्फल एव तदहितकरोऽपि। यस्याध्यात्मिकोन्नतिमार्गः प्रशस्तस्तस्यैवाध्यात्मिकपथप्रदर्शनमुचितम्। नीचापवित्रानधिकारिणेऽध्यात्मविद्योपदेशादहंकाराभिवृद्ध्या तत्पतनमनिवार्यमेव। अहंकारस्तु ज्ञानोन्मादमूलकः। प्रकाशान्धकारवत ज्ञानाहंकारसम्बन्धः । अध्यात्मज्ञानोपदेशदानेन नीचेऽहंकारोदयः स्वाभाविकः। अहंकारोदयेन तदवनतिरनिवार्या। अत्र शङ्कते—यत्र मनुष्यजातौ नास्ति वर्णाश्रमधर्मव्यवस्था किं तत्राध्यात्मविद्याप्राप्तयेऽधिकारिणो न भवन्ति ? किं वर्णाश्रमधर्माणः सर्वे एवोच्चाधिकारिणः ? सूत्रेऽत्र नीचशब्दोपादानस्य किं तात्पर्यमित्यादि, समाधत्ते—वर्णधर्मेण प्रवृत्तिरोधो विषयवैराग्याभिवृद्धिश्च। आश्रमधर्मद्वारा च निवृत्तिपोषणमात्मज्ञानक्रमोन्नतिसौविध्यं च,

अत एव वर्णाश्रमधर्मस्य प्रशस्तिः। वस्तुतो वर्णाश्रमधर्मावलम्बिष्वपि सतोऽसतो नीचा उच्चाः सर्वविधाधिकारिणो भवितुमर्हन्ति, वर्णाश्रमधर्मः स्वकीयं वैशिष्ट्यं रक्षति। व्यक्तिविशेषस्य योग्यताऽयोग्यता वा तत्प्रारब्धं पुरुषार्थं च निर्विभक्ति। वर्णाश्रमधर्ममस्वीकुर्वाणा अपि जातयोऽत्र पृथ्वीतले भवन्ति, भविष्यन्ति च यासु कर्मणो विचित्रां गतिमनुसृत्य तत्त्वज्ञानस्य क्रियनधिकारः समुदेतुं शक्यः। एतादृशजातावपि नीचोच्चाधिकारिणो भवन्ति। परन्तु तासु ज्ञानस्यासाधारणोऽधिकारो दुर्लभ एव न सुलभः। वर्णाश्रमधर्मावलम्बिन्यां प्रजायां यथा किल चिरस्थायिन्या योग्यतायाश्चिह्नानि विलोक्यन्ते, न तथाऽन्यजातिष्विति निश्चप्रचम्। सूत्रेऽत्र नीचशब्दोऽनधिकारिसूचकः, व्यक्तिधर्मसूचको नेति॥ ३२२॥

प्रसङ्गतो विद्याशक्तिरहस्यमभिधत्ते—

**इष्टानिष्टे विद्यया महाशक्तिस्वरूपत्वात्॥ ३२३॥**

महाशक्तेः स्वरूपत्वाद् विद्ययैवेष्टानिष्टे भवतः। ज्ञानजनन्यां विद्यायां बीजरूपेणात्मज्ञानं निहितं विद्यते। सुतरां ज्ञानजननी विद्या सर्वामपि शक्तिमतिशेते। विद्याया एव साहाय्येनामङ्गलमयोऽपि जीवो मङ्गलमयं शिवत्वमभ्युपैति। तत्र विद्या परापराभेदेन द्विधा विभक्ता। अध्यात्मज्ञानविवर्धिनी तत्त्वज्ञानमूलिका स्वस्वरूपप्रकाशिनी परेत्युच्यते। तस्याः साधनभूता सम्पूर्णा अपि लौकिक्यो विद्याः अपरा इत्युच्यते। सुतरां विद्या सर्वशक्तिमयी महाशक्तिस्वरूपा च। पूर्णशक्तित्वादियमिष्टानिष्टविधायिनी, पराविद्यायास्तु कथाऽतीव विचित्रा। यतो हीयं केवलं ब्रह्मज्ञानप्रदायिनी। लौकिकसम्बन्धयुक्तत्वादपरायाः किलानेके भेदाः सन्ति। अपराविद्याऽपि प्रकारान्तरेण सृष्टेर्द्वन्द्वमूलकस्वाभाविकास्वाभाविक सिद्धान्तानुसारेण भागद्वयविभक्ता। एका दैवी द्वितीया आसुरी च। पराविद्यायाः साधनभूता दैवीविद्या परम-

मंगलकारिणी। इन्द्रियसेवामूलिका, अर्थकामपरा रजस्तमसाश्रिता आसुरी विद्या तु जीवामंगलकारिणी। अतोऽनन्तशक्तिधारिणी विद्या जीवानां मंगलामंगलयोरुभयोरपि साधिका विद्यत एव, ऊर्द्ध्वगामिनी सा जीवेभ्योऽभ्युदयं निःश्रेयसं च प्रयच्छति। यद्यधोगामिनी तर्हि जीवान् निम्नादपि निम्नस्तरं प्रापयितुमर्हति ॥ ३२३ ॥

प्रसङ्गाद् वेदाधिकारं निर्णयति—

**शूद्रो नातो वेदमध्याप्यः ॥ ३२४ ॥**

अस्मात् कारणात् शूद्रो वेदं नाध्याप्यः। त्रैवर्णिकानामेव वेदाध्ययनाधिकारो न शूद्रस्येति शास्त्रेषु प्रतिपादितम्। वेदस्त्वध्यात्मज्ञानस्याकरः। प्रागेवेदं सिद्धान्तितं यत् अनधिकारपूर्वकमात्मज्ञानचर्चयाऽनिष्टोत्पत्तिः, विद्या हि पूर्णशक्तिविशिष्टत्वात्सर्वं सम्पादयितुमर्हति। अतस्तमःप्रधानशूद्रेण वेदाध्ययने कृते तदनिष्टसम्भावना। अतोऽनिष्टाशङ्कया शूद्रस्य वेदाध्ययनं शास्त्रे निषिद्धम्। एतदतिरिक्तमपि अनाचारः, सत्संस्काररहित्यम्, ज्ञानाप्रवृत्तिः, यथोचितकर्मानधिकार इत्याद्यपि वेदाध्ययननिषेधस्य प्रबलं कारणमवगन्तव्यम् ॥ ३२४ ॥

पुनः प्रकृतविषयमभिधत्ते—

**प्रतिक्रियापरिणतिः फलाय ॥ ३२५ ॥**

प्रतिक्रियायाः परिणामः फलाय फलनिमित्तको भवति। कर्मणस्तद्विपाकस्वरूपा या प्रतिक्रिया समुत्पद्यते, सा फलोत्पत्तये भवतीति उदाहरणेनेदं सर्गेऽत्रापि निभाल्यते। विज्ञेयं यत् एकस्माद् वृक्षाद् बीजोत्पत्तिः नूतनफलोत्पत्तिकारणतां भजते। यतः फलं भोगस्वरूपं, तेन च जीवानां तृप्तिर्जायते। एतेनैतदवगन्तव्यं यत् मनुष्यक्रियमाणकर्मबीजसंस्कारश्चित्ताकाशे चिदाकाशे वा तिष्ठति, ततश्च पुनः प्रतिक्रियारूपः कर्मविपाकः समुत्पद्यते, स एव जीवस्य सुखस्य दुःखस्य हेतुत्वमुपैति ॥ ३२५ ॥

तद्भेदं प्रदर्श्यते—

## सा पूर्वानुरूपापि ॥ ३२६ ॥

सा पूर्वोक्ता क्रियापरिणतिः पूर्वानुरूपापि दृश्यते। कर्मैव तद्-विपाकोऽपि वैचित्र्यपूर्णः। भोगस्वरूपकर्मविपाकस्यानन्त्येऽपि तस्य साधारणो भेदोऽयं यत् स कर्मानुरूप एव। सुतरां कर्मानुरूपैव प्रतिक्रियापि नूनं भाविनी। उदाह्रियतेऽत्र यत् यदि कश्चित् पुमान् प्रजायै जलकष्टं दद्यात् तर्हि स घोरे मरुस्थले प्रादुर्भवति। यदि वा कश्चिन्मानवः कस्यचिद्धनमपहृत्य तस्मै क्लेशं दद्यात् तदासौ जन्मान्तरे नूनं दरिद्राति। अथवा कोऽपि मनुष्यः स्वकीयायाः स्वाधीनतायाः शक्तेश्चापि दुरुपयोगं कुर्यात् तर्ह्यसौ परस्मिन् जन्मनि ध्रुवमेव पराधीनः शक्तिहीनश्च जायते, उतवा कश्चिन्नरः कस्यचन प्राणान् हन्यात्तदा नूनमसौ जन्मान्तरे तेन हन्यते स्वल्पायुर्वा जायते। प्रजापीड़ाकारको राजा जन्मान्तरे प्रजा-पीड़कस्य राज्ञः प्रजारूपेण प्रादुर्भवति। दानहीनो जन्मान्तरे धनहीनः, विद्यादानविमुखो जन्मान्तरे मूर्खः, पतिशुश्रूषाविहीना पतिदुःखदात्री च नारी जन्मान्तरे पतिहीना वैधव्यमासादयति। सर्वमेतत् कर्मविपाकस्य प्रोज्ज्वलमुदाहरणम् ॥ ३२६ ॥

विज्ञानमिदं परिपोष्यते—

## दानादिषु च ॥ ३२७ ॥

दानप्रभृतिकर्मस्वपि तद्विपाकरूपफलस्य समुत्पत्तिर्जायते। साधारणनियमनिर्देशानन्तरं पूज्यपादेन सूत्रकृता महर्षिणा सम्प्रति विशिष्टो नियमः प्रतिपाद्यते यत् दानतपोयज्ञादीनि कर्माणि यादृशेन शुभसंकल्पेनानुष्ठीयन्ते तादृशसंकल्पमनुसृत्यैवेह जन्मनि जन्मान्तरे वा तत्तत्कर्मक्रियाणां संकल्पानुरूपं कर्मविपाकफलमुत्प-

द्यते। उदाहृतिस्त्वेदमवधेयं यत् दानकाले दाता स्वदीयमानदानस्यानुरूपं यादृशं सुखमधिगन्तुमभिलषेत् तादृशमेव सुखं तेन लब्धं स्यात्। तपोनुष्ठानसमये तपस्वी जन्मान्तरे राज्यसुखमिच्छेत्, अथवाऽपरं सुखविशेषं वाञ्छेत् तदाऽसौ तत्संकल्पानुसारेण तपस्योग्रतामनुसृत्य वा जन्मान्तरे नूनमेव तादृशं फलमधिगच्छति। अश्वमेधादियज्ञानां संकल्पानुसारं महेन्द्रपदमधिगम्यते। अत्युग्रस्य कर्मण इहैव जन्मनि फलोत्पत्तिर्भवितुमर्हति ॥ ३२७ ॥

इदानीं देशकालपात्रसम्बन्धं व्याचष्टे—

## योग्यदशायाम् ॥ ३२८ ॥

योग्यदशायां प्रतिक्रियापि तद्योग्यैवावधेया। कर्मविपाकस्यैतादृशो नियमो निभाल्यते यत् यस्यां दशायां क्रिया विधीयते, तस्याः प्रतिक्रियाऽपि तद्दशायामेव प्रादुर्भवति, यत्र वयसि देशे काले वा क्रिया समनुष्ठिता तत्प्रतिक्रियाऽपि तत्रैव समुत्पद्यते। विपन्नदशायां कस्यचिद्धनापहरणेन विपन्नदशायामेवासौ दरिद्रतामापद्यते। विपत्तौ दानविधानेन तादृशदशायामेव दातुः साहाय्याधिगमः स्यात्। एतद्विज्ञानस्यैतदुदाहरणदिग्दर्शनमवधेयम्॥३२८॥

अन्यदपि—

## पारस्परिका सा ॥ ३२९ ॥

सा क्रिया-परिणतिः पारस्परिका पारस्परिकसम्बन्धयुक्ताऽपि ज्ञातव्या। कर्मविपाकस्यायं नियमो यत् भोगावस्थायां परस्परसम्बन्धेन युज्यते। उदाहरणत एतदवगन्तव्यं यत् यदि केनाऽपि कश्चित् हन्यते तदा जन्मान्तरे हन्ताऽपि तेन हतो भवति। एतस्य साक्षाद्रूपेण परोक्षरूपेण वा कारणमवसीयते। यादृशः कर्मवेगस्तादृश्येव प्रतिक्रियाऽपि ॥ ३२९ ॥

अयुक्तं कर्म निर्णीय युक्तकर्मस्वरूपं निर्णीयते—

युक्तकर्म मुक्तिदमेकञ्च ॥ २२० ॥

युक्तं कर्म मुक्तिदायकम् एकमद्वितीयं च विज्ञातव्यम् । अयुक्त-कर्मविपाकपद्धते दिंग्दर्शनं पूर्वस्मिन् सूत्रे बहुशः प्रपञ्चितम् । बहुशाखासंयुक्तत्वादयुक्तं कर्म बहुप्रकारकं निर्दिष्टम् । वासनाया अनन्तत्वाद् अयुक्तं कर्मादि अनन्तस्वरूपधारकम् । अतस्तत-प्रतिक्रियास्वरूपः कर्मविपाकोऽपि वैचित्र्यपरिपूर्ण इत्यत्र कः सन्देहः । विभिन्नवासनामूलकत्वेन शुभाशुभोमयविधात्मकातिवैचित्र्यपूर्णगमा-गमचक्रावर्त्तानुसारेण च प्राप्तं अयुक्तं कर्म नास्ति किल सीमा-बद्धम् । परन्तु युक्तकर्मविपाको नैवं विधः । युक्तं कर्मैकलक्ष्यो-पेतमात्माभिमुखसंलग्नं मुक्तिप्रदं च, तत्स्वरूपमप्येकमेव । यथोक्तं गीतोपनिषदि—

"युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कर्मकारेण फले सक्तो निवध्यते ॥"

युक्तं कर्म विचारप्राधान्यं भक्तिप्राधान्यं चेति द्विविधं भवति । एतदुदाहरणमपि गीतोपनिषदि, यथा —

"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥"

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥

प्रथमं विचारप्रधानस्य द्वितीयं च भक्तिप्रधानस्य कर्मण उदाहरणमवगन्तव्यम्, द्वयमप्येकमेव। वस्तुतः उभयत्रापि कर्मफलसमीहानाशः, लक्ष्यमेकमात्रमात्माभिमुखं तिष्ठति। एकतत्त्वयुक्तमन्तःकरणमुभयत्रापि तिष्ठति, इयानेव भेदो यत् एकत्र कर्त्तव्यबुद्धेः प्राधान्यमन्यत्र च जगदीश्वराभिमुखभक्तियुक्तभावस्य प्राधान्यम्। अत एव युक्तं कर्म एकतत्त्वयुक्तं मुक्तिकारणं च। अयुक्तकर्मणि जैव्या वासनायाः साक्षात् सम्बन्धः। वासनाया अनन्तशाखासंयुक्तत्वात् अयुक्त कर्मणि नैव भवितुमर्हत्येकत्वोदयः। परमयुक्तस्य कर्मणो यादृशमपि स्वरूपं भवेत्, तत्र वासनालेशसम्भावनाराहित्यात् एकतत्त्वोदयस्तिष्ठत्येव। अन्यच्च कर्मणोऽपरिहार्यशक्तिः स्वकीयाभ्युदयकारिण्या क्रियया आत्मलक्ष्ययुक्तस्यैकतत्त्वस्य सहयोगेन कर्त्रे निःश्रेयसपदं प्रयच्छति ॥ ३३० ॥

प्रसङ्गतो वर्णाश्रममहत्त्वं प्रतिपादयति—

**वर्णाश्रमधर्मौ नैसर्गिकं युक्तकर्म ॥ ३३१ ॥**

वर्णश्चाश्रमश्च वर्णाश्रमौ तयोर्धर्मः कर्तव्यमिति यावत् नैसर्गिकं युक्तकर्म। व्यक्तिगते युक्तकर्मणि यथा क्रिलोत्मनोभिमुखमवाधगतिस्तिष्ठति, तथैव वर्णाश्रमधर्मेऽपि स्वभावतः सा स्थायिनीति हेतोः पूज्यपादो महर्षिः सूत्रकारो वर्णाश्रमधर्ममहत्त्वं प्रतिपादयति। वर्णाश्रमधर्मे कथमिवात्मन उदूर्ध्वगतिस्तिष्ठतीत्यस्य विवेचनं प्रागेव समनुष्ठितम्। जीवो हि विवेकमन्तरेणापि वर्णाश्रमधर्माचारान् यथोचितं परिपालयन् अनेकजन्मानन्तरेऽपि नूनमेव ब्राह्मणवर्णमासाद्य संन्यासी भूत्वा परमहंसगतिं प्राप्य च मुक्तिपदमधिगच्छत्येव। युक्तं कर्म यथा एकस्मिन् एव जन्मनि निःश्रेयसं प्रयच्छति, तथैव वर्णाश्रमधर्मो ह्यनेकजन्मान्तरे जीवं मुक्तिभूमिं नयति। कर्मयोगिनः

एकजन्ममार्गो वर्णाश्रमधर्मणामनेकजन्मनः पन्थाः निःश्रेयसफलार्पणे समान इति हेतोर्वर्णाश्रमधर्ममहत्त्वं स्वतः सिद्धम् ॥ ३३१ ॥

तत्पवित्रतां वर्णयति—

**स पावनस्तपोवनवत् ॥ ३३२ ॥**

स वर्णाश्रमधर्मस्तपोवन इव परमपावनो वेद्यः। त्रिलोक पवित्रकारिणस्तपोवनस्य महत्त्वं सर्वातिशायीति निश्चप्रचम्। स्थूलशरीरे मस्तकमिव, सूक्ष्मे शरीरे बुद्धिरिव मृत्युलोके तपोवनं सर्वाभ्यर्हितम्। वेदाविर्भावस्थानत्वात्, आर्यजातेर्लीलाभूमित्वात्, आत्मज्ञानस्य विकासस्थलत्वाच्च मृत्युलोके आर्यावर्त्त उत्तमाङ्गरूपः। पुनश्चानेकतीर्थराजिविराजिते आर्यावर्त्तेऽत्रापि तपोवनसमूहो महातीर्थभूतः सर्वोत्तमश्च। तपःस्वाध्यायनिरत-विषय-विरागरहितपरोपकारव्रतपरायणात्मरतिनिरतदेवाराध्य-ब्राह्मणवर्गो जगत्कल्याणबुद्ध्या तपोवने निवसति। तदीयविवेकनिःसृतऋतम्भरा परिणामरूपशास्त्रसमूहावलम्बनेन निर्गतो ज्ञानज्योतिषां विस्तरो न केवलं मृत्युलोकमेव प्रत्युत त्रिलोकमेवालोकयति। शूद्राणां शिल्पकलादीनामैश्वर्येण, वैश्यानां धनधान्यसमूहेन, क्षत्रियाणामतुलनीयराज्यवैभवेन, किम्बहुना जागतिक-सर्वविधैश्वर्यसमूहेनापि विच्छिन्नसम्बन्धास्तपोवनवासिनो निवृत्तिसेविनो ब्राह्मणाश्चातुर्वर्ण्यमर्यादासंरक्षणं सम्पूर्णाया अपि जागतिकमानवजातेराध्यात्मिकाधिदैविकाधिभौतिकाख्यत्रिविधिकल्याणेषु निरताः सन्तस्तपोवनानां पवित्रतां परिरक्षन्ति। एतादृशब्राह्मणावासपूत-तपोवनमहिम्नां समधिकमपि गानं स्वल्पमेव। रागद्वेषरूपो रजस्तमोविकारो नैव तपोवनं स्पृशति। एतस्य प्रत्यक्षं समुज्ज्वलत् प्रमाणमिदमवधेयं यत् हिंस्रपशवोऽपि स्वीयां हिंसनप्रवृत्तिं विस्मरन्तस्तपोवने विचरन्तस्तदीयां शोभामभिवर्धयन्ति। प्रकृतिमाता स्वयमपि स्वीय-सर्वप्रियपुत्र-

प्रेमवशीभूता निजं सम्पूर्णसौन्दर्यं विकासयन्ती तत्र विराजते। अध्यात्मचिन्ताव्यतिरिक्तचिन्ताया अवसर एव तपोवने नायाति। एतादृशतपोवनमहत्त्ववर्णनं केन कर्त्तुं शक्यते ? साधारणबुद्ध्या मनुष्यो यथा पृथ्वीमेव क्षेत्रं समाम्नाति, तथाऽन्तर्दृष्टिसम्पन्नो योगी स्थूलं शरीरं हि क्षेत्रं जानाति। भूमिविचारेण यथा तपोवनपवित्रता सर्ववादिसम्मता, तथैव स्थूलशरीरपवित्रतासंरक्षणाय वर्णाश्रमधर्मपरिपालनं परमपवित्रं कार्यमवगन्तव्यम्। सिद्धान्तोऽयमन्तर्दृष्टिसम्पन्नैर्दार्शनिकप्रवरैः स्वकीयाभ्रान्तयुक्तिद्वारा सुनिर्णीतः। स्थूलशरीरसाहाय्येन जीवोऽभ्युदयनिःश्रेयसमार्गे सरलतयाऽग्रेसरो भवितुमर्हति। परन्तु सरलतेयं तदैव स्थास्यति यदा किलोत्तरोत्तरं स्वाधिकारानुरूपं स्थूलशरीरमभ्युदयकरं लभ्येत। यतोह्यनधिकारजनकं स्थूलशरीरमधिकारावरोधकं भवति। अतो वर्णाश्रमव्यवस्थायुक्तः स्थूलशरीरसमूह आत्मनः क्रमोन्नतिसाधकः। अतएव तपोवनेन वर्णाश्रमधर्म पवित्रता किलोपमिता ॥ ३३२ ॥

तृतीयं महत्त्वमभिधत्ते—

## स निर्विषयः शान्त्यानन्दमयश्च ॥ ३३३ ॥

स वर्णाश्रमधर्मो निर्विषयो विषयविरहितः, शान्तिरानन्दश्च तन्मय एतत्स्वरूप इत्यर्थः। प्रवृत्तिरोधको वर्णधर्मो निवृत्तिपोषकश्चाश्रमधर्म इति प्रागेव निर्णीतम्, अत इदं स्वतः सिध्यतियद् वर्णाश्रमधर्मसदाचारक्रमोविषयरागराहित्येन श्रेष्ठतम उपायस्वरूपः। यत्र साधनपद्धतौ विषयरागो ह्रासमुपैति, तत्र शान्तिरधिगमोऽपि निश्चित एव। वर्णाश्रमधर्मावलम्बी जनो यदि किमप्यन्यत्र कुर्यात् किन्तु स्वीयवर्णाश्रमानुकूलानाचारान् परिपालयेत् तर्हि स्वत एव तत्र विषयवासना ह्रसति क्रमशः शान्तेरुदयश्चावश्यम्भावी। रज-

स्तमोभ्यां दुःखाधिगमः, सत्त्वगुणक्रमाभिव्यक्त्यैव आनन्द-स्वरूपस्य श्रीमतो भगवतः साधकचित्ताकाशे समुदयो जायते। सत्त्वगुणक्रमाभिव्यक्तिरेव यदि वर्णाश्रमसदाचारलक्ष्यमूता तर्हि तद्द्वाराऽऽनन्दविकाशो ध्रुव एवेत्यत्र कः सन्देहः ॥ ३३३ ॥

चतुर्थमहत्त्वमुदीरयति—

**स्वतस्तेनेन्द्रिय-प्रत्याहारात्मप्रसादौ ॥ ३३४ ॥**

तेन वर्णाश्रमधर्मेण स्वत एव इन्द्रियाणां प्रत्याहारो निग्रह आत्मनः प्रसादश्च बोभवीति। वर्णाश्रमधर्मपरिपालनेन जन्मजन्मान्तरेषूत्तरो-त्तरं रजस्तमसोर्ह्रासेन क्रमशश्च सत्त्वगुणोदयेनेन्द्रियाणां विषयेभ्यः प्रत्याहारः स्वतः सम्पद्यते। आश्रमधर्मे च तत्प्रत्याहारचारिताथ्र्येन तुरीयाश्रमे तत्पूर्णसिद्धिः संजायते। ब्राह्मणवर्णे एव संन्यासाधिकार-प्राप्त्या वर्णाश्रमसदाचारान्तिमावस्थायामिन्द्रियप्रत्याहारस्य पूर्णो-ऽधिकारो मनुष्येण स्वत एवासाद्यते। विषयतः पूर्णरूपेणेन्द्रिय-गणेषु निवृत्तेषु तुरीयावस्थायामात्मप्रसादपूर्णोदयो जायते। वस्तुत एतत्प्रत्याहारयोगसिद्धेरात्मप्रसादलाभस्य च हेतवे जीवस्य स्वतन्त्ररूपेण परिश्रमान्तरविधानस्य प्रयोजनमेव न भवति। कर्मपारदर्शिभिर्महर्षिभिर्वर्णाश्रमधर्मनियमा एवं व्यवस्थापिताः, येषां परिपालनेन गमागमचक्रे भ्राम्यन्तोऽपि जीवाः स्वत एव निःश्रेयस-पदमधिकुर्वन्ति ॥ ३३४ ॥

पञ्चमं महत्त्वमाचष्टे—

**क्रमोन्नतिस्ततो गङ्गाप्रवाहवत् ॥ ३३५ ॥**

ततो वर्णाश्रमधर्मात् गङ्गाप्रवाह इव क्रमोन्नतिर्जायते, यथा किल पतितपावनी जान्हवी गोमुखीस्थानात् प्रवहन्ती लघुरूपिणी

उत्तराखण्डीय-बहुविधस्वर्गीयनदीसमूहमिलिता शक्तिशालिनी सती हरिद्वारमासाद्य समतलभूमौ तरलतङ्गिणी प्रवहमाना अनेकाः सङ्गिनीः सरितो नयन्ती त्रिवेणीमासाद्य प्रबलस्वरूपा महतीमिर्महानदीभिः संगत्य सर्वोत्तममहानदी भूत्वाऽन्ते महोदधिमासादयति, तथैव जीवोऽपि वर्णचतुष्टयस्याश्रमचतुष्टयस्य च भूमिमतिक्रम्य उत्तरोत्तरमभ्युदयमधिकुर्वन् अन्ते ब्रह्मसमुद्रं प्राप्नोत्येव ॥ ३३५ ॥

षष्ठं महिमानं वक्ति—

## रजोवीर्यशुद्धया साध्यमखिलं धराधररसालवत् ॥ ३३६ ॥

धराधरस्य पर्वतस्य रसालवत् आम्रफलवत् रजोवीर्यशुद्धया सर्वमपि साधयितुं शक्यते। प्रायशः समनुभूतमिदं यत् रसालतरुर्भारतस्य समतलभूमिभाग एव सर्वोत्तमं सुमधुरं च फलं प्रयच्छति। स एव यदि तुङ्गे पार्वत्यप्रदेशे विरोपितो भवेत् तर्हि असौ लघुस्वरूपमम्लं च फलं प्रसूते। यदि पुनरेव पर्वतीय-सहकारद्रुमबीजं समतलभूभागे उप्यते तदा भूमेरानुकूल्यात् समयान्तरे तस्मादेवाम्लरसालबीजतः सुमिष्टमाम्रफलमुद्भवति, तथैव रजोवीर्यशुद्धौ सत्यां कालप्रभावतः प्रमादग्रस्तस्य, मूर्खस्य, अशुचेः, पतितस्याऽपि ब्राह्मणादिवर्णस्य कुलेषु महामहिमशालिनो ब्राह्मणादयः समुत्पद्यन्ते। यदि कश्चिद् ब्राह्मणवंशः, क्षत्रियान्वयो वा स्वीयसदाचारच्युतः पतितो वा भवेत् तर्हि तद्वंशे कालान्तरे योग्या सन्ततिः प्रादुर्भवतीति रजोवीर्यशुद्धिमहत्त्वमेवैतत् ॥ ३३६ ॥

सप्तमं महत्त्वं विविनक्ति—

## तेन समष्टिशक्तिविशेषः उपलाहतिप्रवाह-विशेषवत् ॥ ३३७ ॥

उपलस्य पर्वतस्य आहत्या घातप्रतिघातेन प्रवाहविशेषवत् स्रोतो विशेष इव तेन वर्णाश्रमधर्मेण समष्टिशक्तिविशेषः प्रादुर्भवतीतिशेषः। यदा तरलतरङ्गिणी नदी पार्वत्यप्रदेशे प्रवहति तदानीं

स्थाने स्थाने दृषद्भिराहतस्तदीयः प्रवाह उत्तरोत्तरं शक्तिशाली जायते, तथैव जीवस्याभ्युदयप्रदो धर्मः वर्णाश्रमस्वरूपवन्धैराहतः समष्टिकर्मशक्तिं परिवर्धयति । पार्वत्यनदीप्रवाहदर्शनादिदमवगम्यते यत्, पर्वते नदी यावद्बाधामधिगच्छति तावदेवासौ प्रबलेन वेगेन परिवहति, प्रत्येकबाधायामेव तदीयो वेगोऽधिकाधिकं प्रवर्धते। बाधास्थाने एकत्र स्थितं समधिकं जलं तदीया शक्तिश्च प्राबल्यमासादयतः। चत्वारो वर्णा आश्रमाश्चेत्यष्टौ संघातस्थानानि। अष्टसु स्थानेषु जीवः प्रवृत्तिरोधस्य निवृत्तिवर्धनस्य चाधिकारं प्राप्नोति। अष्टसु स्थानेषु जीवो यावतीमिन्द्रियेभ्य उपरतिं शिक्षते तावदेवासौ आत्मनोऽभिमुखमग्रेसरति। वर्णस्य चत्वारो विभागा जन्मना, आश्रमस्य च शिक्षाऽभ्यासादिभिरतिक्रमणीयाः सन्ति। एवं हि जीवोऽभ्युदयमार्गे अष्टस्वपि विश्रामस्थलेषु नवीनां शक्तिमधिकुर्वन् स्वीयामूर्द्ध्वगतिं सरलीकरोति ॥ ३३७॥

अष्टमं महत्त्वं वर्णयति—

**ततः क्रमविकाशो धर्मस्य ॥ ३३८॥**

ततस्तेन वर्णाश्रमधर्मेण धर्मस्य क्रमविकाशो विज्ञेयः। पूर्वमेवेदं निर्णीतं यत् धर्म एव जीवं क्रमशो ह्यैहलौकिकं पारलौकिकञ्चाभ्युदयं सम्पादयन् अन्ते विमोचयति। इदमपि प्रागेव निश्चितं यत् स्वाभाविकः संस्कारः क्रमविकाशं प्राप्तो धर्मस्य धारिकायाः शक्तेः सहायको भूत्वा इमाम् ऊर्द्ध्वगतिं सम्पादयति। अतो वर्णस्य आश्रमस्य च चतुर्षु चतुर्षु सन्धिषु तत्रत्यनिर्धारितसदाचारद्वारा धर्मस्य क्रमविकाशं कुर्वन् वर्णाश्रमधर्म एव जीवस्याभ्युदयनिःश्रेयसयोर्हेतुतां भजते। जीवो यत्र तत्रैव वर्त्तमानो वर्णाश्रमधर्मपरिपालनेन निजामूर्द्ध्वगतिमधिकरोति। न कदापि तस्याधोगतिसम्भावना। इयं किल वर्णाश्रमसदाचारस्य वैज्ञानिकी रीतिः ॥३३८॥

नवमं महत्त्वं व्याहरति—

**ततः स्वातन्त्र्यादिहानं गृहपशुवत् ॥ ३३९ ॥**

ततो वर्णाश्रमधर्मेण गृहपशुवत् स्वातन्त्र्यादीनां हानं जायते, गोमहिषकुक्कुरादयो गृहपशवो यथा पाशवीं निरङ्कुशतां विस्मरन्ति, तथैव वर्णाश्रमसदाचारपरिपालनपरायणो जीवो जैवीं निरङ्कुशतां विस्मृत्य स्वीयामिन्द्रियप्रवृत्तिं निरोद्धुं स्वयमेव समर्थो भवति । वन्या गावो महिषाः श्वानश्च कीदृशा भयङ्करा भवन्तीति सर्वे विदन्ति । परन्तु गृहपालितेष्वेषु भयानकतायाः किमपि लक्षणं प्रायो न दृश्यते । वन्यानां पशूनां सन्निधौ गमने आखेटकुशला बिभ्यति । परन्तु गृहपालितपशुसमीपे बालकोऽपि निर्भयस्तिष्ठति । उदाहरणेनैतेनावधार्यम् यत् वर्णाश्रमधर्मविरहितमनुष्येषु पशुप्रवृत्तयो न कदापि संयमिता भवितुमर्हन्ति, किन्तु वर्णाश्रमधर्मयुक्तमानवेषु पाशविकी प्रवृत्तिः स्वयमेव विलीयते ॥ ३३९ ॥

दशमं महिमानं वक्ति—

**वर्णबीजं छायाक्रान्तवृक्षवत् ॥ ३४० ॥**

वर्णानां बीजं छायया आक्रान्तवृक्षवद् विज्ञेयम् । छायया समाक्रान्ता यथा आम्रादयो वृक्षा लतागुल्मतां प्रपद्यन्ते, किन्तु छायायामपसृतायां पुनः स्वस्वरूपमासादयन्ति, तथैव ब्राह्मणादिवर्णविशुद्धबीजात् पुनरप्यनुकूलकाले सुयोग्याधिकारवन्तो ब्राह्मणादयः समुत्पद्यन्ते । वर्णधर्मसदाचाररजोवीर्यशुद्धेरसाधारणमिदं महत्त्वं यत् यदि किमपि ब्राह्मणादि कुलं विद्यादिस्वकर्त्तव्यच्युतमयोग्यमपि भवेत् किन्तु तदीयरजोवीर्यशुद्धौ सत्यां पुनः कालान्तरे सदवसरसमागते बहुपुरुषपरम्परायां व्यतीतायामपि तत्र कुले पूर्णयोग्यतासम्पन्नो ब्राह्मणादिः प्रादुर्भवितुमर्हति ॥ ३४० ॥

एतदभावे दोषं प्रदर्शयति—

**ध्रुवं वैपरीत्यं तदभावे ॥ ३४१ ॥**

तदभावे रजोवीर्य-शुद्ध्यभावे ध्रुवमेव वैपरीत्यं विपरीतफलमुदेति। यत्र मानवजातौ वर्णाश्रमव्यवस्था नास्ति, तत्र पूर्वोक्तं फलं नोत्पद्यते। किञ्च विपरीतफलोत्पत्तिरेव सम्भवा, वर्णाश्रमविहीनायां मानवजातौ न नियमेन प्रवृत्तिनिरोधो नापि च निवृत्तिवृद्धिर्भवितुमर्हति। तथा च तत्रोद्दामपाशववृत्तिनियमित-विलयाभावात् अभ्युदयक्रमे नष्टे तदधोगति र्न निवारयितुं शक्यते ॥ ३४१ ॥

तदधोगतेः परिणामो निरूप्यते—

**तस्माद् वर्णाश्रमहीना जातिर्विलीयते ॥३४२॥**

तस्मात् कारणात् वर्णाश्रमधर्महीना जाति विलयमुपगच्छति। नेयं संसारे स्थायिनी भवितुमर्हति। पूर्वमेवेदं सुनिर्णीतं यत् मानव-शरीरमुपढौकमानस्य पूर्णावयवस्य जीवस्य नियमिताभ्युदयक्रमो निरुध्यते। अतो मानवयोनौ क्रमोदूर्ध्वगतिस्थाने अधोगतिक्रम एव स्वाभाविकतामुपयाति। तदानीं वर्णाश्रमधर्मेण संरक्षणत्वा-भावात्, तेन च तज्जातीय-क्रमोदूर्ध्वगतिस्थापनासद्भावेन च सा मानवजातिरधोगामिनी निरङ्कुशाऽसभ्या सती मनुष्यत्वरहिता भूत्वा विनश्यति। सांसारिकासु अनार्यमानवजातिषु परिणामोऽयं नियमेन विलोकितो विलोकयिष्यते च। अनन्तकालतोऽगणिता अनार्यजा-तयोऽभूवन्, आधिभौतिके जगति समुन्नतिमपि प्राप्ताः, किमन्यत् आर्यजातिमपि परास्तामकरोत्, परमन्ततो गत्वा करालकालकवलिता अभूवन् भविष्यन्ति च ॥ ३४२ ॥

पुनः प्रकृतमनुसरति—

**कर्मायत्ताः पितृदेवर्षयः ॥ ३४३ ॥**

पितरो देवा ऋषयश्च कर्मायत्ताः कर्माधीना विज्ञेयाः। वर्णाश्रम-सदाचारमहत्त्वमुपवर्ण्य सूत्रकृता महर्षिणा प्रकृतविषयं दृढीकर्तुं तद्विशेषशक्तिरालोच्यते। पितरो देवा ऋषयश्चेति त्रयो ब्रह्माण्ड-चालकाः समाम्नाताः। एतान् ब्रह्माण्डस्य कः कः कार्यविभागो निर्दिष्टोऽस्तीति प्रागेव विवेचितम्। इमे त्रयोऽपि कर्माधीनाः। प्रत्येकपिण्डव्यष्टिकर्मानुसारं, प्रत्येकब्रह्माण्डसमष्टिकर्मानुसारेण च आधिभौतिक्यां पितरः, आधिदैविक्यां देवाः, आध्यात्मिक्यां व्यव-स्थायां च ऋषयः सदैव संलग्नाः सन्ति। कर्मणः प्रतिकूलाचरणं न ते कर्त्तुमर्हन्ति। स्वस्वाधिकार-शक्तिमनुसृत्य स्वाधीनाः सन्तोऽपि ते कर्मराज्यनियमविरुद्धाचरणं न कर्त्तुं शक्नुवन्ति। महाशक्ति-शालिनां देवर्षिपितॄणां क्रियाकलापनियामकं ब्रह्माण्डधारकं कर्मैव ॥ ३४३ ॥

विज्ञानमेतत् परिपोषयति—

## भगवदवतारोऽपि ॥ ३४४ ॥

भगवतः परमेश्वरस्य अवतारोऽपि कर्मायत्तोऽवगन्तव्यः। निर्गुण-मद्वितीयं सच्चिदानन्दमयं ब्रह्मैव स्वत एव निजां प्रकृतिं व्यञ्जयत् सगुणं द्वैतस्वरूपं भजते। गुणमय्या ब्रह्मप्रकृत्यैव ब्रह्म सगुणायते, ईश्वरो वा जायते। सगुणस्यैवेश्वरस्यावतारः। सर्वव्यापकस्येश्वरस्य विग्रहधारणमनावश्यकम्। यतो निखिलोऽपि संसारस्तद्रूप एव। तदीयविराड्विग्रहात् नाविर्भवितुमर्हति किमपि वस्तु। तदीयो विराड्देहः समष्टिरूपः, ब्रह्माण्डीयानन्तपिण्डसमूहो व्यष्टिस्वरूपो बोध्यः। स हि भगवान् स्वीयां विशिष्टशक्तिशालिनीं कलां पिण्ड-विशेषे प्रकटयन् अवतारस्वरूपं बिभर्त्ति। ब्रह्मप्रकृतिर्महामाया यत्र शरीरे तदीयावतारोपयोगिनीं कलामाविर्भावयति, शरीरं तदेवावतार-नाम्नाभिधीयते। इममेव सिद्धान्तमनुसृत्य दश-द्वादश-चतुर्दश-कलाभिः कलावतारः, षोडशकलाभिः परिपूर्णो भगवदवतारः

पूर्णावतार इत्युच्यते। वस्तुतः कारणेनामुनैव सगुणे ब्रह्मणि तदवतारेषु चाभेदः। यतो हि स एव भगवान् कलारूपेणावतारविग्रहेषु विराजते। अवतारतत्त्वरहस्यं दैवीमीमांसादर्शने सम्यग् विवेचितमास्ते। अवताराणामाविर्भाव-तिरोभावावपि कर्मायत्तौ। यतो जैवसमष्टिकर्मविपाकानुरूपमेव धर्मसंस्थापनाय सर्वशक्तिर्भगवान् शरीरं धृत्वाऽवतरति, अत इदमभ्युपगन्तव्यमेव यद् भगवदवतारोऽपि कर्माधीन एव॥ ३४४॥

अन्यदपि—

## जीवन्मुक्तोऽपि॥ ३४५॥

जीवन्मुक्तोऽपि कर्माधीन एव। यद्यपि जीवन्मुक्तो महापुरुषो रहितकर्मबन्धनो ब्रह्मस्वरूपान्नातिरिच्यते, तथाऽपि प्रकारान्तरेण तदीयं शरीरमपि कर्मणोऽधीनं वेद्यम्। ब्रह्मकोटिग ईश्वरकोटिगश्चेति जीवन्मुक्तो द्विविधो विज्ञेयः। उभावपि सञ्चितेन क्रियमाणेन कर्मकलापेन विमुच्येते, किन्तु कुलालचक्रवत् तौ प्रारब्धकर्माधीनौ। द्वाभ्यामपि प्रारब्धं कर्म भुज्यते। अन्यच्च ईशकोटिगो जीवन्मुक्तो भगवदवतार इव समष्टि-कर्माधीनो जगत्सेवायां प्रवर्त्तते। अतो जीवन्मुक्तोऽपि कर्माधीन इति सिध्यति॥ ३४५॥

अन्यच्चापि—

## पूर्णावतारोऽपि ततो न विमुच्यते॥ ३४६॥

ततः कर्मणः पूर्णावतारोऽपि न विमुच्यते न मुक्तो भवतीत्यर्थः। पूर्णशक्तिशाली षोडशकलापरिपूर्णः सगुणब्रह्मस्वरूपः पूर्णावतारोऽपि कर्मणः सार्वभौमशक्त्या समतीतो नास्ति। यतोऽसावपि सृष्टिसम्बन्धीयसमष्टिकर्माधीनो भवन् साधूनां परित्राणं दुष्कृतां

विनाशं च सम्पादयति। समष्टि-कर्मविपाकानुकूलमेव तेन स्वीया लीला नियमिता विधीयते। अधिभूताधिदैवाध्यात्मसंज्ञकाभिस्तिसृभिरपि शक्तिभिः पूर्णावतारः परिपूर्णो विज्ञेयः। अतः सर्वशक्तिः कर्त्तुमकर्त्तुमन्यथा कर्त्तुं समर्थोऽप्यसौ समष्टिकर्मगतिं न निरोद्धुं पारयति ॥ ३४६ ॥

विज्ञानमिदमुदाहृत्या परिपोषयति—

**यथा भगवान् कृष्णः ॥ ३४७ ॥**

भगवान् सर्वशक्तिशाली श्रीकृष्णः साक्षाद्भगवत्स्वरूपः। सोऽपि कर्माधीन एव। "कृष्णस्तु भगवान् स्वयम्" इति सर्वशास्त्रसम्मतः सिद्धान्तः। आनन्दकन्दो भगवान् श्रीकृष्णचन्द्रः षोड़शकलापरिपूर्णत्वात्पूर्णावतार इति सर्वसम्मतो राद्धान्तः। तदीयलीलापर्य्यालोचनयेदं विज्ञानं परिपोषमेति। स्वयमेव भगवता श्रीकृष्णेन गीतायां प्रोक्तम्। तथाहि—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

वचनानीमानि पूर्णतयोपर्युक्तविज्ञानपरिपोषकाणि। एतादृशसर्ववादिसम्मतपूर्णावतारेणापि स्वीयकर्ममर्यादा परिपाल्यते। सर्वशक्तिशालिनाऽपि तेन बाल्यलीलावसरे साधारणजीवपिण्डधारिवत् मथुरास्थं पितृगृहं परित्यज्य गोकुले परकीयं गृहं समाश्रितम्। कर्मवशादेवासौ व्रजभूमौ अनेकलौकिकान् अलौकिकांश्च क्रियाकला-

पानन्वतिष्ठत्। कर्मवशगेनैव तेन लोकोत्तरव्रजलीलायाम् मर्यादाऽमर्यादयोः समत्वं परिदर्शयता स्वकीयं कर्मातीतमीश्वरत्वमपि संरक्षितम्। कर्माधीनतामाश्रयन्नेवासौ स्वीययौवनावस्थायां लोकातिगं निष्कामं कर्मयोगमास्थितो गृहस्थाश्रमवैभवस्य राजवैभवस्य च पराकाष्ठां जगत्सम्मुखं प्रादर्शयत्। जगद्विख्यातकुरुक्षेत्रमहाहवेऽपि भगवतो नेतृत्वं कर्मणो विशिष्टं महिमानं प्रदर्शयति। श्रीमतो भगवतः श्रीकृष्णस्य शरीरान्तोऽपि कर्मणो गौरवं द्योतयति ॥३४७॥

प्रकारान्तरेण तन्महत्त्वं प्रतिपादयति—

**पौरुष्यविशेषादन्योऽन्यः स्याद् गुल्मवत् ॥ ३४८ ॥**

विशेषपुरुषार्थेन गुल्मवद् वृक्षवदिति यावत् अन्यः अन्यो जायते। उद्भिज्जा वृक्षजातीया औषधादिप्रयोगतो यथासमयं लूनाः सन्तो-यथाकालं गुल्मरूपतां परिदधते। उद्भिज्जतत्त्ववेत्तारो रसालवृक्षं कदाचित् गुल्मरूपेण, कदापि च लतारूपेण परिणमयन्ति, तथैवासाधारणेन कर्मणा एकजातीयो मानवो विजातीयो जायते। निम्नाश्रमस्थितो मानव उच्चाश्रममधिकरोति। योगतपोऽध्यात्मचिन्तनादिना असाधारणेन पुरुषार्थेनान्यो वर्णो निजवर्णापेक्षयोत्तमवर्णतां प्रतिपद्यते। एवं किलासाधारणेन पापकर्मणा आर्यजातिरनार्यतां प्रतिपद्यते। एवं हि ब्रह्मचारी संन्यासी चापि पतितो भवन् गृहस्थतामधिगच्छति ॥ ३४८ ॥

विज्ञानमिदं परिपोषयितुमुदाह्रियते—

**यथा विश्वामित्रः॥ ३४९ ॥**

विश्वामित्रो यथा एकेनैव जन्मना क्षत्रियाद् ब्राह्मणत्वं लेभे। ब्राह्मणादय उच्चवर्णाः स्वीयेन प्रबलेन पापकर्मणा शूद्रतामनार्यताम-

सुरतां वाऽधिगन्तुं शक्नुवन्ति। एतत्प्रमाणानि पुराणेषु बहुशः समुपलभ्यन्ते। ब्रह्मचर्याश्रमादेव तुरीयाश्रमापरनामकं संन्यासाश्रमप्राप्तिं स्मृतिशास्त्राणि प्रमाणयन्ति। आश्रमात् पतनमपि स्वाभाविकमेव। परन्त्वेको निम्नवर्णः एकेनैव जन्मना उच्चवर्णतामधिगन्तुं शक्नोति नवेत्युदाहृत्या विज्ञानमिदं परिपोषयति। वर्णधर्मेण सह रजोवीर्यसाक्षात्सम्बन्धत्वादेकोनिम्नवर्णं उच्चवर्णतां नासादयितुमर्हति। परमुग्रेण कर्मणा कुत्रचित् तत्सम्भव इति शास्त्रेषु समुपलभ्यते। विश्वामित्रस्य जीवनमेवात्र प्रमाणम्। राजर्षिर्विश्वामित्र एकेनैव जन्मना महोग्रेण तपसा ब्रह्मर्षित्वं प्रपेदे। कर्मासाधारणशक्तिमहिम्नोज्वलदिदमुदाहरणम्॥ ३४६॥

प्रसंगतः शङ्का समाधीयते—

अलौकिकमेतत्॥ ३५०॥

एतद् विश्वामित्रस्योदाहरणम् अलौकिकम् लोकसाधारणासाध्यमानं विज्ञेयम्। जिज्ञासुरत्र शङ्कते—ननु क्षत्रियोऽपि विश्वामित्र एकेनैव जन्मना ब्राह्मणत्वमध्यगच्छच्चेत् तर्हि जन्मना जातिनिर्णयो न कथं व्यर्थः? कर्मणैव जातिनिर्णयः कथं न? एतादृशशङ्कासमाहितये पूज्यपादेन सूत्रकृता महर्षिणा सूत्रमेतदाविश्चक्रे। महर्षिविश्वामित्रो जन्मनैकेन ब्राह्मणत्वमधिगतवानिति सत्यम्। स हि परमोग्रेण तपसा सातिशयबलवच्छुभकर्मफलेन निजशरीरक्षत्रियपरमाणून् परिवर्त्य ब्राह्मणत्वमासादितवानिति पुराणानि प्रमाणयन्ति। इदं हि कर्मणः पूर्णशक्तिमत्तायाः परिणामोऽवगन्तव्यः। परन्तु कर्माधिकारोऽयमलौकिकः। यतो हि जन्मन्येकस्मिन् एव मातुः पितुश्च कृपयाऽधिगतान् तद्रजोवीर्याकृष्टान् शरीरपरमाणून् समूलं परिवर्त्य, तत्रैव च जन्मनि ब्राह्मणशरीरोचितपरमाणूनां

संग्रहो नैव भवितुमर्हति लौकिकं कार्यम्। नेदं लौकिकमनुष्ठानम्। अलौकिकं कार्यं किल प्रबलतपोयोगशक्तिसापेक्ष्यम् ॥ ३५० ॥

प्रकारान्तरेण विज्ञानमिदं परिपोषयति—

**असत्कर्मणा सर्वावनतिर्वृक्षलतावत् ॥ ३५१ ॥**

वृक्षा लताश्च वृक्षलतास्तद्वत् असत्कर्मणा सर्वावनतिः सर्वेषामवनतिः सर्वविधाऽवनतिर्वा सम्पद्यते। असतोऽशुभकर्मणः शक्तिमुदाहृत्य कर्ममहत्त्वं प्रतिपाद्येदानीम् असतोऽशुभस्य कर्मणः प्रसंगेन स्वविज्ञानं परिपोषयति। कर्मणो बलानि महिमानश्च सर्वमतिशेरते। कर्म सदसत् किमपि वा स्यात् शक्तिदृष्ट्योभयमपि समानमेव। पूर्वोक्तनिर्णयमनुसृत्य धर्मापरनामकं सत्कर्म यथा जीवेभ्यः समुन्नतमधिकारं प्रयच्छति ; तथैवाधर्मापरनामकमसत्कर्म जीवान् निम्नातिनिम्नां गतिं गमयति। अत्र लौकिकमुदाहरणमवधेयं यत् वृहज्जातीया महातरवोऽपि यथा छायां, प्रतिकूलभूमिं, देशकालप्रभावं च द्वारीकृत्य गुल्मलतारूपेण परिणमन्ति, तथैव जीवः असत्कर्मप्रभावतः तिर्यक्त्वमप्यासादयति। निम्नतोऽपि निम्नावस्था या पतनस्य विद्यते, साऽपि असत्कर्मप्रभावतोऽधिगन्तुं शक्यते ॥ ३५१ ॥

प्रसंगतः शङ्का समाधीयते—

**अनुष्ठानादितो विपन्मुक्तिः साम्यस्थित्या तरणिवत् ॥ ३५२ ॥**

साम्यस्थित्या समानावस्थया तरणिवत् नौकावत् अनुष्ठानादितः अनुष्ठानादिकर्मणा विपन्मुक्तिर्विपदो मोचनं भवति। शुभमशुभं वा कर्म समानबलशालि चेत्तर्हि अनुष्ठानादिना न किमपि प्रयोजनमिति कथं नाभ्युपगन्तव्यम्, दशायामेतस्यामनुष्ठानादीनां कथमिव सार्थक्यम्? एतादृशशङ्कासमाहितये पूज्यचरणो महर्षिः

सूत्रमिदमाविश्चकार। अनुष्ठानादिकमपि कर्मान्तर्गतमेव। तत्रापि कर्मणोऽपरिहार्या शक्तिस्तिष्ठत्येव, अतोऽनुष्ठानादीनां नास्ति वैफल्यम्। स्थितेः साम्यरक्षां विधाय नौकायाश्चालनेन, न च तस्या गतौ बाधा, न चापि तन्निमज्जने भयम्। अस्यामवस्थायां तद्गतिः सरला द्रुतगामिनी च सम्पद्यते। तद्वदेवानुष्ठानादि-क्रियाफलमप्यवगन्तव्यम्। नौका यदि कुटिला, तस्याश्चैकत्र दिशि भारोऽधिकोपरत्र च लघुः, तत्स्थितावसाम्यायां सत्यां तद्गतिर्निरुध्यते। पवनप्रकोपे समुद्भूते नौका निमज्जति चापि। किन्तु नौकायाः स्थितिसाम्ये न च तद्गतिबाधा, न चापि तन्निमज्जनभीतिरेव तथैवानुष्ठानादिद्वारा कर्मविपाकगतिः सरलायते, समुपस्थित-कर्मविपाकोद्भूतविपदा मानवो विमुच्यते। अनुष्ठानं कार्यद्वयं विदधाति। दुःखभोगस्यावधिं शक्तिं च ह्रासयति ततश्चाचिरेणैव विमोचयत्यपि। ननु प्रबलानुष्ठानेन विपत्तिः समूलैव विनाश्येत, कर्मविपाकप्रतिघातः पूर्णरूपेण निरुध्येत, तर्हि एतत्सूत्रविज्ञानस्य कथंकारं सार्थक्यमिति सन्देहश्चेत् श्रूयताम्, यदि कर्मविपाकस्तदानीं काले न भवेत् तर्हि शोभनमेव। तस्य जीवस्याभ्युदयमार्गो नूनं निष्कण्टकः स्यात्, यद्यसौ शुभमेव पुरुषार्थमाचरेत् तदा पुनः प्राचीनाशुभकर्मवेगः समापतितुमेव नार्हत्॥ ३५२॥

कर्मणः सर्वोत्कृष्टं महत्त्वं विवृणोति—

## त्रिमूर्त्तिः कर्मायत्तम्॥ ३५३॥

त्रयाणां मूर्त्तीनां समाहारस्त्रिमूर्त्तिः। तदपि कर्मायत्तं कर्माधीनमित्यर्थः। भगवन्तो ब्रह्मविष्णुरुद्राश्च कर्माधीनास्तिष्ठन्तीति कर्मणोऽसाधारणो महिमा। प्रत्येकस्मिन्नपि ब्रह्माण्डे ते त्रयो हि सगुणब्रह्मस्वरूपाः सन्ति, सर्गस्थितिप्रलयानां पूर्णाऽपि शक्तिस्तेषु तिष्ठति। साक्षादीश्वरस्वरूपा अपि ते कर्माधीना इत्येष कर्मणो

महामहिमेत्यत्र नास्ति सन्देहलेशोऽपि। वस्तुतस्त्रिमूर्त्तिषु सर्वशक्तिमत्त्वे विद्यमानेऽपि ब्रह्माण्डस्य सृष्टिस्थितिलयकार्यकलापास्तैर्ब्रह्माण्डसमष्टिकर्मानुसारमेव विधीयन्ते । तेषु शक्तिपूर्णतायां सत्यामपि ब्रह्माण्ड-समष्टिकर्मविपाको यादृशः समुपतिष्ठते, तेषु तदनुकूलसमीहा समुदेति । यतस्ते कर्मातीतादिच्छारहितादीश्वरान्नातिरिच्यते ॥ ३५३ ॥

प्रसङ्गतः शंकां समाधत्ते—

**न च जीव ईश्वरभावात् ॥ ३५४ ॥**

न च ते त्रिमूर्त्तयो जीवाः सन्ति, तेषु ईश्वरत्वसद्भावात्। जिज्ञासुरत्र शङ्कते—ननु त्रिमूर्त्तयो ब्रह्मविष्णुरुद्रा अपि कर्माधीनास्तदा तेषां जीवत्वं कथं न ? समाधत्ते—ब्रह्माण्डसमष्टिकर्मानुसारं सृष्टिस्थितिलयान् विदधतोऽपि ते कर्मबन्धनादतीता एव । अज्ञानजनन्या अविद्याया अधीनो जीव इत्युच्यते, ज्ञानजननी विद्या किलेश्वराधीना तिष्ठति । अविद्याऽस्मितारागद्वेषाभिनिवेशादिभिः पञ्चभिः क्लेशैः कर्मभिस्तद्भोगैश्च जीवो ग्रस्तो विद्यते । सर्वशक्तिमान् ईश्वरस्तु सर्वान् तानतीत्य वर्त्तते । एकपिण्डनायकत्वाज् जीवः पिण्डनिबद्धः । अनन्तकोटिब्रह्माण्डनायककत्वादीश्वरस्तदाबद्धो नास्ति, सचानन्तकोटिपिण्डद्रष्टाऽपि । अयं किल जीवेश्वरयोर्विभेदः। त्रिमूर्त्तिषु जीवलक्षणाभावात् बहुधा चेश्वरलक्षणसद्भावात्, सर्वविद्यानामैशीनां सिद्धीनां विद्यमानत्वाच्च त्रिमूर्त्तयो न कदापि जीवाः, प्रत्युतेश्वररूपा एव ॥ ३५४ ॥

उपसंहरते—

**तस्मात् कर्म प्रशस्यं प्रमाणं च प्रशस्यं प्रमाणं च ॥३५५॥**

तस्मात् कारणात् कर्म प्रशस्यं श्रेष्ठं प्रमाणं चावगन्तव्यम् ।

ब्रह्माण्डपिण्डात्मिकायां सृष्टिलीलायां कर्मण एव प्राधान्यम्। यदि पूर्वप्रतिपादित-नियमानुसारेण कर्मणः सर्वमुखीनशक्तिमत्त्वम्, लौकिकमलौकिकं वा निखिलमपि फलं यदि कर्माधीनं यदि चापि सृष्टिराज्येऽत्र न किमपि वस्तु कर्मातीतम्, तर्हीदमभ्युपगन्तव्यमेव यत् कर्मैव सर्वश्रेष्ठम्, सर्वेषामपि कर्माधीनत्वात् कर्मैव प्रमाणमपि। वस्तुतस्तु कर्मणः सर्वशक्तिमत्त्वे तदस्तित्वे च न कस्यापि संशीतिलेशः। सूत्रेऽत्र श्रेष्ठप्रमाणशब्दयोः पुनरावर्त्तनं सिद्धान्तदृढतानिमित्तकमवधेयम्॥ ३५५॥

❀ क्रियापादः समाप्तः ❀



# कर्ममीमांसादर्शनम्

## मोक्षपादः ।

---

प्रागुक्तेषु त्रिष्वपि पादेषु यथाक्रमं धर्म-संस्कार-क्रिया वर्णयित्वा साम्प्रतं क्रियाशुद्धि फलस्वरूपस्य सर्वसाधनान्तिमलक्ष्यरूपस्य मोक्षस्योपवर्णनायान्तिमं चतुर्थपादमुपक्रामति, तस्येदमिदमादिमं सूत्रं यथा—

**उभयतः सृष्टिः ॥ १ ॥**

सृष्टिः सर्गं उभयतः उभयाभ्यां प्रकृतिपुरुषाभ्यां सम्पद्यते, सृष्टिरहस्यज्ञानमन्तरेण न भवितुमर्हति लयज्ञानम् । जीवस्य मोक्षप्राप्तिरेव तल्लयः । अतः सर्गस्य मौलिकं कारणमवगमयितुमुच्यते यत् प्रकृतिपुरुषयोरुभयोरेव संगमात् सृष्टिः । पूज्यपादेन महर्षिणा कपिलेन सांख्यदर्शने प्रकृतिपुरुषस्वरूपं सम्यग् विवेचितम् अतः प्रकृतिपुरुषयोर्लक्षणविस्तरो नात्रापेक्षितः । पदार्थवादरूपयोः न्याय-वैशेषिकदर्शनयोरनन्तरं सांख्यप्रवचनस्वरूपयोर्योगसांख्यदर्शनयोरधिकारो निर्णीतः । तदनन्तरं चैतद्दर्शनस्य पञ्चमोऽधिकारो विद्यते । अतः कारणात् प्रकृतिपुरुषयोरत्र सविस्तरवर्णनमकृत्वा पूज्यपादो महर्षिः सूत्रकारः केवलं स्वविज्ञानसाधनाय संक्षिप्तमिदं वक्ति यत् मनुष्यपिण्डसृष्टिमारभ्य सर्वेषामपि चतुर्विध-भूतसंघानां सृष्टिः प्रकृतिपुरुषात्मिकैवास्ते । अतो दृष्टान्तेनैतेन ज्ञातव्यमिदं यत् ब्रह्माण्डस्य सर्वोऽपि सर्गः मूलपुरुष-मूलप्रकृतिसम्भूत एव ।

जिज्ञासुरत्र शंकते-ननु सांख्यदर्शनेन प्रकृतेरेकत्वं पुरुषस्य च बहुत्वं समाम्नातम्। किमेतत्तात्पर्यम्? विशेषश्चान्यानि दर्शनशास्त्राणि परमात्मनो मायायाश्चैकत्वं प्रतिपाद्योभयसम्बन्धेन सृष्टिविलासं निश्चिन्वन्ति कथंकारं तस्यैतेन समन्वयः? उच्यते-यो हि दार्शनिकः सिद्धान्तो ब्रह्ममायातः सृष्टिसम्बन्धमाचष्टे, तेन मायाया अनादित्वं सान्तत्वं च निर्णीतम्, ब्रह्मणो निर्लिप्तत्वञ्च प्रतिपादितम्। सांख्यदर्शनेन तु प्रकृतेरनादित्वमनन्तत्वं च साधितम्, तथैव स्फटिकस्य मणेर्जवाकुसुमसम्बन्धवत् पुरुषेण प्रकृतेः सम्बन्धयुक्तत्वमुक्तम्। अतः सांख्यस्य पुरुषबहुत्वस्वीकारः संगत एव। मायाया अनादित्वं सान्तत्वञ्च स्वीकुर्वाणो दार्शनिकः सिद्धान्त इदमभिधत्ते यत् यथा जलाशयतरङ्गेषु प्रतिबिम्बित एको दिनमणिरनेकानि रूपाणि बिभ्रदपि वस्तुतो निर्लिप्त एक एव, जलीयतरङ्गा एव बहुरूपाणि धारयन्ति, दिनमणिस्तु न लिप्यते, सोऽद्वितीय एव। परन्तु सांख्यविज्ञानुसारमेका मूलप्रकृतिरनन्तपुरुषेषु जवास्फटिकसम्बन्ध इव प्रतिफलति, स्फटिकमणीन् लोहितान् विधत्ते। उदाहरणेनैतेन सांख्यस्य बहुपुरुषवादोऽपि युक्तियुक्त एव। यतो हि सांख्यविज्ञानं जवारूपप्रकृतेः रक्तवर्णः अनन्तपुरुषेषु प्रतिफलितोऽनन्तानपि पुरुषान् रक्ततारञ्जितान् प्रत्याययति। प्रथमविज्ञाने कार्यस्वरूपं प्रकृतितरङ्गेषु विज्ञायते। सांख्यविज्ञाने च कार्यरूपम् अनन्तपुरुषेषु प्राकट्यमापद्यते। उभयत्र सिद्धान्ते प्रतिबिम्ब-सिद्धान्तवैपरीत्याद् विचारपार्थक्यमवधेयम्। अतो ब्रह्ममायासंयोगेन प्रकृतिपुरुषयोगेन च सृष्टिरेकैव कथा। द्वन्द्वसम्बन्धेन सृष्टिरित्यत्र सर्वेषामैकमत्यम् ॥ १ ॥

प्रसङ्गत ईश्वरस्वरूपं निर्दिशति—

**उभयविलक्षण ईश्वरः ॥ २ ॥**

उभयाभ्यां प्रकृतिपुरुषाभ्यां विलक्षण ईश्वरोऽवगन्तव्यः।

प्रकृतिरूपाया मायाया विषये तु कस्यापि मतभेदो नास्ति । परन्तु वेदान्तस्यैकात्मवादतः सांख्यस्य बहुपुरुषवादो विभिन्नवत्प्रतिभाति। परन्तु तद्रहस्यमेतद् यत् प्रकृतिप्रतिबिम्बितम् आत्मानं प्रकृतिवन्मन्यमानो हि सांख्यपुरुषः, ईश्वरस्त्वेतदवस्थातो नितरां विलक्षणः। यतोऽयं प्रकृतेः सांख्यपुरुषस्यापि द्रष्टा । सांख्येनापि ईश्वरोऽलौकिकप्रत्यक्षगम्यः स्वीकृतः । सांख्यदर्शनस्येश्वरवादस्वीकारो निरतिशयमहत्त्वसंवलितो विज्ञेयः । यतः सांख्यभूमिमनुसृत्य ईश्वरस्वीकारस्य नास्त्यावश्यकत्वम्, सुतरां सांख्यदर्शनं परममास्तिकदर्शनम् । पूज्यपाद-महर्षिपतञ्जलिकृतं योगदर्शनमीश्वरस्वरूपं सुस्पष्टमङ्गीकरोति यत् अविद्याऽस्मितादिक्लेशैः, प्रकृतितरङ्गसम्भूतशुभाशुभकर्मभोगरूपविपाकैः, आशयैः कर्मबीजरूपसंस्कारैश्चापरामृष्टः पुरुषविशेष ईश्वर इति । अतोऽयं पुरुषविशेष ईश्वर उभयविलक्षण इत्यत्र कः सन्देहः ? जीवोऽल्पज्ञः, ईश्वरस्तु सर्वज्ञः। जीवो मायाधीनः, माया तु ईश्वराधीना। जीवोऽल्पशक्तिविशिष्टः, ईश्वरस्तु सर्वशक्तिशाली। कर्माधीनो जीवः, कर्म तु ईश्वराधीनम्। जीवो दृश्यः, ईश्वरो द्रष्टा। ब्रह्माण्डपिण्डात्मिका सृष्टिरनन्ता। ईश्वरस्तु एकोऽद्वितीयः। अतो ह्येश्वर उभयाभ्यामपि प्रकृतिपुरुषाभ्यां विलक्षण इत्यत्र नास्त्यणीयानपि संशीतिलेशः ।।२।।

प्रसंगतो जीवं लक्षयति—

**उभयाधीनो जीवः ॥ ३ ॥**

जीवस्तूभयाधीनः प्रकृतिपुरुषयोरुभयोरेवाधीन इत्यर्थः। जीवत्वं किल प्रकृतिपुरुषाभ्यामुभाभ्यामेव संबद्धम्। सांख्यविज्ञानमनुसृत्य पुरुषस्य स्वच्छता प्रकृत्या रञ्जनतेत्युभयं मिलित्वा तृतीयं वस्तु जीव इत्युच्यते। पुरुषस्य चेतनत्वम्, प्रकृतेश्च गुणपरिणाम इत्युभयसम्बन्धेन जीवस्य जीवत्वं प्राकट्यमापद्यते। जीवस्यान्तकरणे प्रकृते-

धारणा शक्तिः, पुरुषस्य च चिदाभासश्चैकत्र स्थित्वा बन्धमोक्षयोर्हेतुतां प्रतिपद्येते । उभयाधीनमन्तःकरणं बन्धनदशां प्राप्नोति । चित्पुरुषः, जड़ा प्रकृतिः, इत्युभयसत्ताधीनो जीवश्चिज्जड़ग्रन्थि-स्वरूपतामाधत्ते ॥ ३ ॥

सम्प्रति लक्ष्यसिद्धिं निर्दिशति—

**उभयज्ञानान्मुक्तिः ॥ ४ ॥**

उभययोः प्रकृतिपुरुषयोर्ज्ञानात् अवबोधान्मुक्तिर्जायते । अस्य चतुर्थपादस्य प्रवृत्तिरेव मुक्तिनिमित्ता, तथापि जिज्ञासुरत्र शंकते—ननु सर्गेऽत्रोभयव्यतिरिक्तं तृतीयं किमपि वस्तु नास्ति-तर्हि मुक्तिः कस्य कथं वेति ? समाधत्ते—एकमेवाद्वितीयं ब्रह्मेति सर्वदर्शनसिद्धान्तः । तस्य ब्रह्मणः प्रकृतिः शक्तिर्वा यदा कर्मणि प्रवर्त्तते, तदैव सृष्टिसम्भावना । प्रकृतिपुरुषयोः सम्बन्धात् सृष्टिरित्यपि सिद्धान्तितम्, तर्हीदमभ्युपगन्तव्यमेव यत् प्रकृतेः पुरुषस्य च सत्तयोः पार्थक्येऽपि उभयं ब्रह्मसत्तातो नातिरिच्यते । अतो ज्ञानी महापुरुषः प्रकृतिपुरुषयोः स्वरूपं सम्यगवधारयति, तथा तेन ज्ञानिना महापुरुषेणेदं विज्ञायते यत् प्रकृतिसत्ता पुरुषसत्ता चोभयमपि जीवान्तःकरणपरिणाममूतम्, वस्तुतोऽद्वितीयमेकमेव ब्रह्म, तदानीं मुक्तिस्वरूपमुदेति । प्रकृतेः पुरुषस्य च सत्ताद्वयं ब्रह्मशक्तेर्महामायायाः प्रभावादेव स्वतन्त्रमनुभूयते सुतरामात्मज्ञानसाहाय्येन प्रकृतिपुरुषात्मकविश्वहेतुमूतस्य प्रकृतिपुरुषरूपकार्यस्यावगतौ सत्यां ज्ञानी महात्मा कारणे ब्रह्मणि संयुज्यते । एतदेव मुक्तिपदमाम्नातम् ॥ ४ ॥

विज्ञानमेतत्परिपोषयति—

**कार्यकारणयोरेकत्वापादनं मोक्षः ॥ ५ ॥**

कार्यं च कारणं च तयोरेकत्वापादनम् अभिन्नता स्वीकार एव मोक्षः। तत्त्वदर्शिभिर्मुनिभिः कार्यं कारणं च ब्रह्मेति ब्रह्मणो भावद्वयमुदीरितम्। कारणं ब्रह्मस्वरूपम्, कार्यं ब्रह्म तु दृश्यप्रपञ्चमयं जगदित्युक्तम्। प्रकृतेरव्यक्तदशायां दृश्यं जगत् स्वस्वरूपे विलीयते। प्रकृते र्व्यक्तदशायां तत् प्राकट्यमासाद्य द्वैतमयं प्रपञ्चं वितनुते। ब्रह्म नो ब्रह्मप्रकृति र्यदा पृथग्भवन्तो व्यक्ततामापद्यते तदानीमेकतोऽनन्तो वैभवः प्राकृतिकः प्रकाशतेऽपरतश्चानन्ताः पुरुषा जीवपिण्डेषु पावकस्फुलिङ्गवत् प्राकट्यमापद्यन्ते। तत्त्वज्ञानी महापुरुषो यदा स्वीयदार्शनिकज्ञानवृद्ध्या राजयोगपरिधिमासादयन् आत्मज्ञानस्य पूर्णाधिकारवान् जायते, तदानीमसौ स्वानुभवेन प्रकृतिपुरुषोः सम्यग्ज्ञानमधिगच्छति। तदानीमिदमप्यसावनुभवति यद् अहंममेतिवद् ब्रह्म तत्प्रकृतिश्च न परस्परं भिद्यते। इदमपि तेनानुभूयते यत् द्वैतप्रपञ्चं सर्वविधवैभवकारणं प्रकृतिपुरुषयोः पृथक्सत्तामूलकारणं चैका ब्रह्मप्रकृतिरेव। आत्मज्ञानस्य परिपूर्णज्ञानावस्थायामस्यां कार्यब्रह्मणः कारणब्रह्मणश्चाद्वैतभावं हृगयंगमं कुर्वन् जीवन्मुक्तो महापुरुषो ब्रह्मस्वरूपं प्रतिपद्यमानः स्वयंधन्यो जगदपि धन्यतां नयति। ज्ञानिन इयमुन्नततमाऽवस्था मोक्षस्वरूपमभिधीयते ॥ ५ ॥

सम्प्रति बन्धमोक्षयोः स्वरूपमाचष्टे—

**बन्धमोक्षौ द्वन्द्वैकत्वाभ्याम् ॥ ६ ॥**

द्वन्द्वं च एकत्वं च ताभ्यां बन्धमोक्षौ भवतः। द्वन्द्वेन बन्धः, एकत्वेन मोक्ष इत्यर्थः। बन्धमोक्षकारणकलापान्वेषणकाले दार्शनिकाचार्या विभिन्नमतानि प्रदर्शितवन्तः सन्ति। केचिदाचार्या मुक्तिकारणं ज्ञानमज्ञानं च बन्धकारणमिति वदन्ति। सूत्रकृन् महर्षिः भरद्वाजो वैज्ञानिकं सिद्धान्तमनुसरन् मुक्तिपथं सरलीकुर्वन् इदमाह यद् द्वन्द्वानुभवोऽवन्धनदशामूलकारणम्, एकतत्त्वयथार्थस्वरूपोदयो मोक्षस्य

कारणम्। वस्तुतो ब्रह्मशक्तिर्ब्रह्मणः पृथग्भूत्वा स्वीययाऽविद्यया सृष्टिप्रपञ्चं वितनोति, तदैव स्वीयां पृथक्सत्तां भजति जीवे द्वैतभावः समुदेति। अतो हीदं स्वीकार्यमेव यद् द्वन्द्वानुभव एव जीवत्वसिद्धिकारकः, द्वन्द्वानुभवेनैव बन्धनदशायाः समुदयः। ब्रह्मप्रकृतेर्ययावस्थया दशेयमुत्पद्यते, सा अविद्या। जीवस्य च ययावस्थया दशेयमाविर्भवति सैवाज्ञानमिति चेदुच्यते तर्हि बन्धनं द्वन्द्वोत्पन्नमिति सिद्ध्यति। तथैव ब्रह्मप्रकृतेर्ययावस्थया मुक्तिपदमुदेति, सा विद्या जीवस्य च येनावस्थाविशेषेण मुक्तिस्तदेकतत्त्वज्ञानमिति चेदभिधीयते तदापि एकतत्त्वोदयेन मोक्ष इत्यभ्युपगन्तव्यमेव। कर्मोपासनाज्ञानसाहाय्येन यदाऽन्तःकरणस्य वैषम्यास्थितिः समत्वमवाप्नोति, साधकस्य च चित्तं तैलधारावत् अविच्छिन्नदशामधिगत्य एकतत्त्वात्मनि प्रधावति, तदानीं तयैवावस्थया मोक्षस्योदयो जायते, नैव केवलं कर्ममीमांसादर्शनेनैतेनेव, प्रत्युत सर्वेनन्त्रसिद्धेन योगदर्शनेनाऽपि सिद्धान्तोऽयं स्वीकृतः ॥ ६ ॥

मुक्तिप्रसंगात् सृष्टिरहस्यं विवृणोति—

**बीजांकुरतरुबीजवत् सृष्टिः ॥ ७ ॥**

यथा बीजेन अंकुरः तेन च बीजमुत्पद्यते तथैव सृष्टिरियं विज्ञेया। सृष्टिप्रवाहरहस्यमवधारयितुमेतदवगन्तव्यं यद् यथा संसारे धान्यबीजेन धान्यवृक्षः, तेन च पुनर्धान्यबीजं, ततश्च पुनर्वृक्षः पुनर्बीजमिति परम्परा प्रचलिता दृश्यते, तथैवानन्तकोटि-ब्रह्माण्डात्मकः सृष्टिप्रवाहोऽपि प्रचलन्नेव तिष्ठति। विज्ञानमिदमनेकाः शङ्काः समाधत्ते। मुक्तेर्बन्धनस्य च कारणं यदि मृग्यते, तर्हि सृष्टेरादिकारणमपि मृग्यमिति शंकासमाहितिरपि सूत्रेणैतेन सम्भवति। यतः सृष्टेरादिकारणं शंकाशून्यमेव, सृष्टिप्रवाहचक्रं निरवच्छिन्नं प्रचरति। यथैकस्मिन् जीवपिण्डे नष्टे, अनन्तानि जीवपिण्डानि तिष्ठन्ति, तथैवे-

कस्मिन् ब्रह्माण्डे विनष्टेऽपराण्यनन्तकोटि-ब्रह्माण्डानि विलसन्त्येव। इयं सृष्टिप्रवाहधाराऽविनाशिनी वेदितव्या ॥ ७ ॥

सृष्टेरुपरामप्राप्तिं निर्दिशति—

**सृष्टेरात्मभावज्ञानेच्छाकर्मफलभोगाः सप्तस्तराः ॥ ८ ॥**

आत्मा, भावः, ज्ञानम्, इच्छा, कर्म, फलम्, भोगश्चेति सृष्टेः सप्तस्तरा भवन्ति। द्रष्टृदृश्यद्वन्द्वं यत्र चिदाभासे समुत्पद्यते, स एवान्तःकरणविशिष्टचिदाभासो जीवात्मेत्युच्यते। अयं सर्गस्य प्रथमः स्तरः। अनन्तरं द्वन्द्वमूलकभावानुभवः, ततश्च त्रिपुटीमूलज्ञानस्यानुभूतिः। जीवात्मनो जायमाना स्वतन्त्रसत्ता परमात्मनश्चिदाभासमूलिका। ततश्च जीवात्मनः प्रथमं द्वैतभानं भावमूलकम्, तद्धि परमात्मनः सत्तामूलकम्। विज्ञानमिदं प्रकारान्तरेणापि बोद्धुं शक्यते। तथाहि सच्चिदानन्दमयस्य परमेशितुश्चित्सत्ताया जीवस्य जीवत्वं सत्सत्ताया च भावतत्त्वं समुदेति। वस्तुतो भावतत्त्वं सर्गे प्रथमं सूक्ष्मातिसूक्ष्मं तत्त्वम्, भावोऽभावविरोधी। भावोत्पत्तिस्तद्विस्तारश्च बुद्ध्यहंकारसंगमेनोत्पद्यते। भावोऽसौ द्वन्द्वमूलकत्वात् सन्मूलकोऽसन्मूलकश्च। सद्भावो मोक्षकारणम् असद्भावश्च बन्धनहेतुः, सर्गस्य तृतीयः स्तरः प्रोच्यते। तथाहि—ज्ञानतत्त्वं ज्ञातृ-ज्ञान-ज्ञेयस्वरूपत्रिपुटीमूलकम्। ज्ञानं च तत्र सत्त्वरजस्तमोभेदेन त्रिविधम्। जीवान्तःकरणे प्रथमायामवस्थायां भावपरिणामः, द्वितीयायां ज्ञानपरिणतिः, तृतीयायां च इच्छायाः परिणामो बोमूयते। ज्ञानं यथा बुद्धिधर्मस्तथैव इच्छा मनसो धर्मः। इच्छैव सृष्टेश्च तुर्थः स्तरः। इच्छयैव सृष्टिरग्रे विस्तृतिं गच्छति। इच्छाशक्त्या क्रियाशक्तिरुत्पद्यते, सैव कर्म। कर्म किल सृष्टिप्रपञ्चस्य पञ्चमः स्तरो वेद्यः। कर्मणा फलोत्पत्तिः। कर्म कारणं फलं च कार्यम्। अतः फलं हि सृष्टेः षष्ठः स्तरः। तच्च कर्मफलं सुखदुःखभोगमयम्। नरकादयोऽधोलोकाः स्वर्गादय-

श्चोर्ध्वलोकाश्च तत एव सम्भवन्ति । सुतरां सृष्टिराज्ये भोगस्तरः सप्तमोऽत्रगन्तव्यः । एतदेव ब्रह्माण्डपिण्डात्मक सर्गकारणम् । सृष्टिसम्बन्धिनां सप्तस्तराणामेतेषां यथार्थानुभवे जाते सृष्टिबन्धनं छिद्यते भिद्यते च ॥ ८ ॥

अन्यच्च—

## स्थूलसूक्ष्मे कामनिमित्ते ॥ ९ ॥

स्थूला सूक्ष्मा च सृष्टिः कामनिमित्ते, काम एव निमित्ते ययोस्तथाभूते स्तः । साधारण्येन सर्गस्य स्थूलः सूक्ष्मश्चेति द्वौ स्तरौ । पञ्चीकृतमहाभूतसम्बन्धयुक्तः स्थूलः, अपञ्चीकृतमहाभूतसम्बद्धो मनोराज्यसम्बन्धसंवलितश्च सूक्ष्म इत्युच्यते । एतत्सृष्टिद्वयमूले कामोऽत्रगन्तव्यः । वासनामूलकेन कामेन सर्वविधाऽपि सृष्टिरुत्पद्यते । अतः काम एवोभयकारणमित्यत्र नास्ति सन्देहः । विज्ञानमिदं सूक्ष्मप्रकारेणापि त्रिविच्यते । समष्टिसृष्टिर्व्यष्टिसृष्टिर्वा, आधिभौतिक आधिदैविकी वा सृष्टिः सर्वाऽपि कामजा । मानसो वैजो वा सर्गः काममूलक एव । वैज्यां सृष्टौ कामकलालक्षणं स्पष्टतो दृश्यत एव । कामवासनामूलकत्वात् प्रजापतीनां मानससृष्टिप्रपञ्चेऽपि काम एव मूलं कारणम् । अतः सिद्धमिदं यत् सर्वविधस्यापि सर्गस्य मौलिकं कारणं काम एव ॥ ९ ॥

कामप्रभावो वर्ण्यते—

## आसक्तिः कामजा ॥ १० ॥

आसक्तिः कामजा कामेनैव जायमाना भवति । समष्टि-सृष्टिमूलतत्त्वेन सह कामस्य घनिष्ठसम्बन्धं प्रदर्श्य महर्षिः सूत्रकारो व्यष्टिसृष्टावपि घनिष्ठं तत्सम्बन्धं वर्णयति । अन्तःकरणवृत्तिराज्यस्य द्वे गती स्वाभाविके ऊर्ध्वगतिरधोगतिश्च । ऊर्ध्वगतिर्भावोत्पन्नाऽनो-

मुक्तिदा। अत इयं सृष्टिनिरोधकरीतिहेतोर्वर्त्तमानप्रसंगतः समतीता अन्तःकरणस्य द्वितीया गतिरधोगामिनी, सा किलासक्तिसमुत्पन्नाऽज्ञानमूलिका जीवानामावागमनचक्रस्य कारणतामापद्यते, जीवांश्च सृष्टिपाशे पातयति । अत इयं निम्नगामिनी आसक्तिमूलिका । आसक्तिश्च चित्तमनःसंयोगेन कामप्रभावतः प्रादुर्भवति । अतः समष्टिसृष्टाविव व्यष्टिसृष्टावपि कामस्य दुर्दमनीयोऽधिकारो विद्यत एव ॥ १० ॥

महत्त्वान्तरमाचष्टे—

**तन्महत्त्वं प्रत्यक्षमुद्भिज्जेऽपि ॥ ११ ॥**

तस्य कामस्य प्रत्यक्षं महत्त्वम् उद्भिज्जेऽपि दृश्यते । सृष्टिमूलस्य कामस्य प्रभावः सर्वव्यापकः । सर्वतोऽपि निम्नयोनावुद्भिज्जेऽपि कामप्रभावादेव सृष्टिविस्तारः। मनुष्येषु पशुषु कथैव का उद्भिज्जसृष्टावपि कामप्रभावः सुस्पष्टसिद्धः। यथा किलाण्डजादिपक्षिणामण्डेषु स्त्रीणां पुरुषाणां चोभयांशास्तिष्ठन्ति, तथैव उद्भिज्जबीजेष्वपि अंशद्वयं वर्त्तते। उद्भिज्जानां पुष्पपरागेषु स्त्रीशक्तेः पुंशक्तेश्च लक्षणमधिगम्यते। सर्गोत्पत्तिकालेऽन्यजीवेष्विव उद्भिज्जेष्वपि भावान्तरोत्पत्तिर्निभाल्यते। वसन्तकालस्य प्रभावः अन्यजीवेष्विव उद्भिज्जेष्वपि निपतत्येव। एतादृशलक्षणं विलोकयद्भिः सर्वैरेवेदं स्वीकर्त्तव्यमेव यत् सर्गेऽत्र कामासक्तिः सर्वव्यापिका ॥११॥

कामजयस्य महत्त्वं निर्दिशति—

**सर्वजयित्वं कामवशीकारात् ॥ १२ ॥**

कामस्य वशीकाराद् विजयात् सर्वजयित्वं. सर्वत्रैव विजयलाभ इत्यर्थः। यदि काम एव सृष्टे मौलिकं तत्त्वम्, स एव यदि सृष्टिबीजस्वरूपस्तदा कामजयेन सर्वेषु विषयेषु च विजय इति

निःप्रचम् । भगवता सदाशिवेन निजतृतीयनेत्राग्निना कामो भस्मीकृत इति पुराणानि स्वीकुर्वन्ति । तस्य तृतीयं नेत्रं ज्ञानमेव । मनसोत्पन्नस्य प्रवृत्तिदायिन्या रतेः पत्युः कामस्य नाशः तृतीयनेत्रेणैव सम्भवः । विज्ञानमेतत्प्रकारान्तरेणाप्यवबोध्यते । तथाहि—ज्ञानेनैव यद्यात्मज्ञानसम्भवस्तदा ज्ञानमेव मुक्तिकारणमपि भवितुमर्हति । मुक्तात्मनः सर्गस्य लयोजायते, अतः सृष्टेर्बीजस्वरूपस्य कामस्यापि लयो ज्ञानेनैव सम्भवति । एतदेव कामभस्मरहस्यम् । गुरुतरं कार्यमिदं नैव जीवेन शिवेनैव कर्तुं शक्यते । वस्तुत आत्मज्ञानी शिवस्वरूपो महापुरुषो ज्ञानाग्निना कामं भस्मसात् सम्पाद्य सर्वविजयी भवितुमर्हति ॥ १२ ॥

प्रसंगतः स्वाभाविकीवृंत्तीर्विश्लेपयति—

**कामभये बाधके मुक्तेः ॥ १३ ॥**

कामश्च भयं च ते मुक्तेः मोक्षस्य बाधके स्तः । ज्ञानं सुखेच्छा च सत्त्वगुणस्य, आहारो निद्रा च तमोगुणस्य, कामो भयं च रजोगुणस्य स्वाभाविकवृत्तयः सन्ति । एतदस्तिता सर्वश्रेणिजीवेपु समानरूपेण तिष्ठति । रजोगुणस्य कामभयवृत्त्योर्विलयमन्तरेण जीवो न बन्धनाद् विमुच्यते । कामः सृष्टिस्वरूपः भयं चाज्ञानरूपमित्युभे मुक्तिबाधके । उपर्युक्तानां षण्णामपि वृत्तीनां स्वाभाविकत्वात् सर्वव्यापकत्वाच्च तासु वृत्तिषु कामभययोर्मोक्षबाधकत्वाच्च प्रसङ्गोऽत्र तद्रहस्यविवृत्तिरुचितैव ॥ १३ ॥

कामजनितदृश्यस्य गुरुत्वमाचष्टे—

**दृश्यप्रसारो रक्तबीजवत् ॥ १४ ॥**

रक्तमेव बीजं यस्य तद्वत् रक्तबीजवत् दृश्यस्य प्रसारो बोध्यः । मार्कण्डेयपुराणादौ वर्णितमिदं यद् देवासुरसंग्रामे देव्या हन्यमानस्य रक्तबीजनामकस्यासुरस्य शरीरात् पृथिव्यां पतितैरक्त-

विन्दुभिस्तावन्तो रक्तबीजाः समुत्पद्यन्तेस्म पूर्ववरदानप्राप्त्या तत्र तादृशी शक्तिः समुद्भूत् । उक्तं च सप्तशतीस्तोत्रे—

यावन्तः पतितास्तस्य शरीराद् रक्तविन्दवः ।
तावन्तः पुरुषा जातास्तद्वीर्यबलविक्रमाः ॥ इति ।

रक्तबीजस्य वधेऽसम्भवे जाते देवी कालिकामुक्तवती यत् "त्वम् स्वीयवक्त्रे रक्तबीजरक्तं गृहाण तदीयं रक्तं पृथिव्यां "न पातय ।" एवं कृते रक्तबीजनामकस्यासुरस्य वधोऽभवत् । प्रागेवेदं निर्णीतं यत् स्वाभाविकः संस्कार एको मुक्तिप्रदश्च, अस्वाभाविकस्तु दृश्य-प्रपञ्चोत्पादको बन्धनहेतुरनन्तश्चेति । जैववासनाजन्योऽस्वाभाविक-संस्कार एव रक्तबीजस्यासुरस्याध्यात्मरूपम् । वैराग्यस्वरूपसम्पन्ना-याः तत्त्वज्ञानरूपिण्याः कालीदेव्याः सहायतयैव तादृशस्यासुरस्य वधः सम्भवति । एवमेव वासनासम्भूतदृश्य-प्रपञ्चप्रसारो वोभूयते । यथा किल रक्तबीजासुरस्य प्रत्येकविन्दुनाऽपरो रक्तबीजः समुत्पद्यते-स्म, तथैव वासनाजनित-कर्मबीजरूपसंस्कारात् कर्मवृक्षस्वरूपं दृश्य-प्रपञ्चं निरन्तरमुत्पद्यमानं वोभवीति, तेनैव कारणेन गमनागमनचक्रो नित्यं बम्भ्रम्यते ॥ १४ ॥

तस्य हानोपायं निर्दिशति—

**तन्नाशः क्रियाबीजहाने ॥ १५ ॥**

क्रियाबीजस्य हानेन तस्य नाशो जायते । क्रियाबीजसंस्कारस्य विनाशे क्रियाक्रमविनाशः स्वतः सिद्धः । यथा कुत्रचिद् क्षेत्रे बहवः कण्टकतरवः समुत्पद्यन्ते, तैश्च क्षेत्रं कण्टाकीर्णं जायते । तदानीं समुत्पद्यमानानि सर्वाण्यपि कण्टकवृक्षबीजानि विनष्टानि क्रियेरन्, तदा नूतनकण्टकवृक्षोत्पत्तिरसम्भवा । कालप्रभावतश्च कण्टकवृक्षे नष्टे कर्त्तिते वा क्षेत्रं निष्कण्टकं भवितुमर्हति, तथैव कर्मबीज-

संस्कारस्य नाशे कर्मभोगे च विनष्टे जीवः कर्मबन्धनान्मुच्यते। रक्तबीजोदाहरणमप्येवमेवावधेयम्। युद्धे रक्तबीजं नाशयितुं कालीदेव्या तदीयं रक्तं स्वमुखेन गृहीतम्। एवं कृते रक्तबीजनाशो बभूव। एवं हि सर्वविधसंस्कारनाशेन जीवः कर्मबन्धनान्मुच्यते ॥१५॥

उपायमुपदिशति—

**अस्वाभाविकस्य स्वाभाविकपरिणतौ चक्रभेदः॥ १६ ॥**

अस्वाभाविकस्य संस्कारस्य स्वाभाविकसंस्काररूपे परिणमनेन चक्रभेदः, चक्रस्य गमागमचक्रस्य भेदो विनाशो भवति। संस्कारस्वरूपबीजस्य नाशात्, तस्य कार्यकारिण्याः सत्तायाश्च विनाशात् वृक्षसृष्टिर्लुप्यते इति पूर्वसूत्रे निर्णीतम्। लौकिकावस्थायामिदं परिदृश्यते यत् यदि कस्यचिदुद्भिज्जस्य बीजं विनाशमुपगच्छेत्, किं वा तदीयबीजजीवसत्ता मर्जिता सती प्रणाशमुपेयात्, तदा तद्बीजतो वृक्षसृष्टिर्न भवितुमर्हति, तद्वदेव जीवस्वतन्त्रसंकल्पप्रादुर्भूतोऽस्वाभाविकसंस्कारः सुकौशलपूर्णप्रयत्नेन स्वाभाविकसंस्काररूपेण परिणतः क्रियेत, तर्हि तत्सत्ता मर्जितबीजवत् भवति, नैव तेन संस्कारेण पुनर्नूतनकर्मोत्पत्तिः। कालेनासौ भाग्यशाली महापुरुषो गमागमचक्रभेदने समर्थो जायते। स्वाभाविकः संस्कारो ब्रह्मशक्तेरधीनः अस्वाभाविकस्तु जीवाधीनः। विज्ञानमिदं प्रकारान्तरेणापि बोधयति—तथाहि—ईश्वराधीना या प्रकृति र्ब्रह्माण्डस्य सृष्टिस्थितिप्रलयान् विदधाति, तत्सम्बद्धः संस्कारः स्वाभाविक इत्युच्यते। या च जीवं स्ववशवर्त्तिनं विधाय स्वीययाऽविद्याशक्त्या जीवं पाशे पातयति, तत्सम्बद्धः संस्कारः अस्वाभाविक इति, ईश्वराधीनशुद्धप्रकृतिसम्बन्धयुक्तः स्वाभाविकः संस्कारो विकाररहितः शुद्धः सरलश्च बोध्यः। अविद्यासम्बन्धोत्पन्नो जैवसंस्काराऽस्वाभाविको

जीवबन्धनकरो विकृतोऽसरलोऽशुद्धश्च । उभयोरेवानयोः संस्कारयोः पार्थक्यहेतू ज्ञानाज्ञानजनन्यौ विद्याविद्ये स्तः । ईश्वरे विद्याया नित्यस्थितित्वात् वासना तज्जनितसंकल्पो वा नैवोदेति । अत एवेश्वर संबन्ध-युक्तप्रकृत्या सम्बन्धनिबन्धनः संस्कारः स्वाभाविकः । स्वाभाविकत्वात् तस्य क्रमाभिव्यक्तिरबाधा सरला च जायते । जैवोऽस्वाभाविकः संस्कारो जटिलतामापद्यते, नासौ सुधारयितुं योग्यः । तज्जटिलतैव गतागतचक्रं स्थितिशीलं विधत्ते । यदि कयाऽपि सुकौशलपूर्णप्रक्रिययाऽस्वाभाविकसंस्कारस्य जटिलतादूरी भवेत्तदाऽस्वाभाविकसंस्कारोऽसौ सरलो भूत्वा जीवं बन्धनान्मोचयितुमर्हति । ईश्वरो वासनाऽहंकाररहितो ज्ञानस्वरूपः जीवस्तु वासनाहंकारयुक्तोऽज्ञानो च, तत्त्वज्ञानी महात्मा लब्धात्मज्ञानो निरहंकारो यदा वासनां विनाशयति, तदा तदीयोऽस्वाभाविकः संस्कारः स्वाभाविकसंस्कारस्वरूपतां धत्ते । तदानीं तदीयः संस्कारो निजां जटिलतामसरलतां च विदूरयति । तस्य च क्रमाभिव्यक्तिरबाधा भूत्वा सरलायते । तर्हि स्वत एव गमागमचक्रो भिद्यते ॥ १६ ॥

अन्यदपि—

## स्वाभाविकाश्रयादपवर्गः ॥ १७ ॥

स्वाभाविकस्य संस्कारस्य आश्रयणेन अपवर्गो निःश्रेयसरूपो मोक्षो लभ्यते । अज्ञानमेव जीवबन्धनकारणम् । तस्य च मूलभूतोऽहंकारः, सच गमागमचक्रे जीवं निपातयति । गमागमचक्रमूलतत्त्वं जीववासना । सुतरामस्वाभाविके संस्कारे स्वाभाविकसंस्काररूपेण परिणतेऽज्ञानविलयेनाहंकारे तिरोहिते वासनानाशेन आवागमनचक्रस्य भेदो जायते । तदानीं बद्धो जीवः शिवस्वरूपतां प्राप्नोति । जीवन्मुक्तदशायामस्वाभाविक-संस्कारस्य स्वाभाविक संस्कारस्वरूपेण

परिणतौ सत्यां जीवन्मुक्ते सर्वमपि कर्म निष्कामतां प्रपद्यते। अतःकामनाशून्यस्य कर्मणो बन्धनविधानेऽसामर्थ्यात् भाग्यवान् महापुरुषोऽपवर्गमधिगच्छति ॥ १७ ॥

प्रसंगादध्यास उच्यते—

## संस्कारहेतुरध्यासः ॥ १८ ॥

अध्यासः अभ्यास एव संस्कारहेतुः। नूतनसंस्कारोत्पत्तौ अध्यास एव साहाय्यसम्पादकः। तथाहि—यदि कोऽपि शूद्रजातीयः साधना-भजन-पवित्रता गुरुभक्ति-शास्त्रश्रवणमनन-भगवद्भक्तिनिवृत्तिसेवादिषु नियमितमध्यासं प्रवर्धयेत् तर्ह्यसौ जन्मान्तरे नूनमेव ब्राह्मण्यमधिगच्छेत्। यतस्तदीयाध्यासे ब्राह्मणोचिताः संस्कारराशयः सञ्चीयन्ते। तद्वदेव यदि कश्चिद्ब्राह्मणवंशोद्भवः प्रवृत्तिमार्गमनुसरन् नीचजनोचितं संस्कारं संगृह्णीयात्, तदा जन्मान्तरेऽन्त्यजजातौ तज्जन्मलाभः सम्भवेत्। अध्यासबलेनैव संस्कारा उद्भूयन्ति। तेन च कर्मबीजस्वरूपसंस्कारेण जात्यायुर्भोगा निष्पद्यन्ते ॥ १८ ॥

तन्मूलतत्त्वमनुसन्धीयते—

## व्युत्थानात् सः ॥ १९ ॥

सोऽध्यासो व्युत्थानादुत्पद्यत इत्यर्थः। दृश्यप्रपञ्चोत्पत्तेर्मौलिकंरहस्यमुक्त्वा ज्ञानोत्पत्त्याऽपवर्ग-प्राप्तिनिमित्तमुच्यते यदध्यासेन बन्धनहेतुभूतः कर्मबीजसंस्कारः समुत्पद्यते। अध्यासोऽपि व्युत्थानदशाया प्रादुर्भवति। यतः स्वरूपावस्थायां द्रष्टृदृश्यसम्बन्धाभावात् नाध्यासः-समुत्पद्येत न वा कर्मसंग्रहः सम्भवेत्। व्युत्थानदशायामेव द्वैतसम्बन्धो जागर्त्ति। तदानीं प्रकृते दृश्यत्वात् पुरुषस्य च द्रष्टृत्वात्, किं वा जीवस्य द्रष्टृत्वात् विषयस्य च दृश्यत्वात् अध्याससम्बन्धः स्वत एव प्राकट्यमापद्यते। अत इदमभ्युपगन्तव्यमेव यद् व्युत्थानेन सहाध्यासस्य पूर्वापरसम्बन्धः।

जिज्ञासुरत्र शङ्कते—ननु सत्यलोकवासिषु मुक्तात्मसु किं वा परमेश्वरस्वरूपेषु ब्रह्मविष्णुमहेश्वरेषु व्युत्थानदशा नूनमेव तिष्ठति। यतो व्युत्थानदशामन्तरेणेश्वराणामीश्वरीयक्रियायाः सत्यलोकवासिनां च ब्रह्मानन्दभोगस्य समापत्तिरसम्भवा, तत् किमेष्वपि चाध्यासस्तत्फलानि वा संभवन्ति ? उच्यते—बद्धजीवान्तःकरणव्युत्थानेन सह मुक्तात्मनां सृष्टिकर्त्रादीनामन्तःकरणव्युत्थानावस्थाया अन्धकार-प्रकाशवद् भेदोऽवगन्तव्यः। तेषु जैववासनासम्बन्धाभावात् तदीयान्तःकरणैर्मलिनाहंकारादीनां लेशतोऽपि संयोगासत्त्वात् तेषामन्तःकरणव्युत्थानादिक्रियाः भर्जितबीजवदवगन्तव्याः। भर्जितबीजैर्यथा भोगतृप्तिस्तु जायते किन्तु अहंकारोत्पत्तिर्न सम्भवति, तथैव लोकातीताधिकारेषु व्युत्थाने सत्यपि अध्यासादिसम्बन्धो नास्त्येव। यद्यपि विशिष्टश्रेणयो मुक्तात्मान एवावस्थान्तरे ब्रह्मादिपदमधिगच्छन्ति, परन्तु त्रिमूर्तिपदभाजामलौकिकान्यन्तःकरणानि व्यापकतामधिगत्य ब्रह्माण्डमयानि जायन्ते। तेषु जैवान्तःकरणस्य सद्भावात्यन्तराहित्यात्, बन्धनकारिणोऽध्यासस्य च सम्भावनाविरहात् न जैवाध्यासस्तिष्ठति। सत्यलोकवासिनामपि सैव दशा। इयानेव भेदो यन्मुक्तात्मसु ईश्वरीय शक्तीनां विकासो न भवति। ऐशकर्माणि द्वारीकृत्य त्रिमूर्तिपदप्राप्तानां किं वा जैवकर्मपराकाष्ठाधिगतवतां सत्यलोकवासिनां मुक्तात्मनामवस्थाविशेषस्य लोकातीतत्वात् जैववासनाराहित्यात् स्वरूपज्ञानमयत्वाच्च तदीयाः सर्वेऽपि पूर्वसंस्कारा भर्जितबीजवत् तिष्ठन्ति। अग्रे चाध्यासाभावात् क्रियमाणसंस्कारा अपि भर्जितबीजवत् शक्तिहीना जायन्ते। अतस्तेष्वध्यासाभावः सर्वैर्बुद्धिधनैः स्वीकार्य एव ॥ १९ ॥

व्युत्थानहेतुमुदीरयति—

**संगात् तत् ॥ २० ॥**

संगेन व्युत्थानमुत्पद्यते। द्वैतमन्तरेण व्युत्थानस्योत्पत्तिर-

संभवा। स्वरूपे द्वैतप्रपञ्चाभावात व्युत्थानसमापत्तिरसिद्धा। द्रष्टृ-दृश्यसम्बन्धेनैवैकतो द्वितीयस्यानुभवः अस्यामेवावस्थायां त्रिपुटी-युक्तं तटस्थज्ञानमुदेति। द्रष्टृदृश्यसम्बन्धस्थापनसमकालमेव व्यु-त्थानमाविर्भवति। किं वा एवमिधीयतां यद् द्रष्टृदृश्यसम्बन्धस्थापनं व्युत्थानं च सहैवोत्पद्यते। शंकासमाहितये प्रोच्यते यद् व्युत्थान-मिदं द्विधा विभक्तुं शक्यते। ईश्वरेऽपि द्रष्टृदृश्यसम्बन्धस्थापनं निभाल्यते। तदानीं मूलप्रकृति दृश्यरूपा परमपुरुषो द्रष्टा च। द्विती-याऽवस्था जीवपिण्डे समुत्पद्यते। तत्र विषयो दृश्यभूतो जीवश्च द्रष्टा। आद्याऽलौकिकदशायां द्वितीया च लौकिकदशायां निर्लिप्ता। परमिद-मभ्युपगन्तव्यमेव यद् द्रष्टृदृश्यसंगतो व्युत्थानसिद्धिः॥ २०॥

निःश्रेयसोद्देश्येन क्लेशहेतुं निर्णयति—

स तु क्लेशहेतुः॥ २१॥

स संगः क्लेशस्य कारणम्। स्वरूपात् तटस्थभूमेः समुद्यकरः, द्रष्टृदृश्यसम्बन्धस्य स्थापयिता, द्वैतप्रपञ्चहेतुः संग एव क्लेशकारणम्। संगस्य क्लेशहेतुत्वनिर्णयार्थमेवात्र सूत्रे "तु" शब्दप्रयोगः। क्लेश-विषये पूज्यपादोमहर्षिः पतञ्जलिरभिधत्ते—

"अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः"

"नित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या"

"दृग्दर्शनशक्त्योरेकात्मतैवाऽस्मिता"

"सुखानुशयी रागः"

"दुःखानुशयी द्वेषः"

"स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" इति।

शङ्कते—ननु द्रष्टृदृश्यसम्बन्धस्थापनसमकालमेव किं क्लेशो-द्गमः? यद्येवं चेत्तर्हि परमेश्वरसम्मुखेऽपि प्रकृते दृश्यत्वात्

किमीश्वरेऽपि क्लेशसम्भावना ? व्युत्थानेन सहैव किं क्लेशोऽपि समुत्पद्यते ? समाधत्ते-पूज्यपादो महर्षिः पतञ्जलिः क्लेशरहितं पुरुषविशेषमीश्वरमुवाच, तद्वद्धिरुक्तिरनुचिता। सुतरामीश्वरे क्लेशसम्भावनाविरहात्, ब्रह्मणि च द्रष्टृदृश्यसम्बन्धस्थापनसमकालमेव परमेश्वरभावोद्गमात्, पूज्यचरणेन महर्षिणाऽङ्गिरसा दैवीमीमांसादर्शने तदेतत्सिद्धान्तितत्वाच्चैतदभ्युपगन्तव्यमेव यद् द्रष्टृदृश्यसम्बन्धस्थापनेन सहैव क्लेशस्योदयो नैव जायते। ईश्वरे द्रष्टृदृश्यसम्बन्धोऽलौकिको बुद्ध्यगम्यश्चातः क्लेशसम्भावना नास्ति। वस्तुतो द्रष्टृदृश्यसम्बन्धस्थापनकरी विद्योपस्थितिः क्लेशजननी न भवति। प्रकारान्तरेणापि विज्ञानमिदमवबोधयति, तथा हि—व्युत्थानेनैव क्लेशो न समुत्पद्यते, यत्र विद्याविलासस्तत्र व्युत्थानं वा द्रष्टृदृश्यसम्बन्धसद्भावो वा स्यात् न तत्र क्लेशसम्भावना। विज्ञानमेतदेवमप्यवगम्यताम्—यत्र प्रकृतिर्दृश्या न तत्र क्लेशो यत्र विषयो दृश्यस्तत्र क्लेशसम्भावना निश्चिता ॥ २१ ॥

प्रसंगात्तद्विरतेरुपायः प्रोच्यते—

**कर्मभक्तियोगसमन्वितस्त्वानन्दकरः ॥ २२ ॥**

कर्मणा भक्त्या योगेन च समन्वितो युक्तः संग आनन्दकर आनन्दोत्पादको विज्ञेयः। संगावस्था यदि कर्मभक्तियोगैरन्विता चेत्तदानीं साऽऽनन्ददायिनी जायते। क्लेश आनन्दश्चेत्युभौ परस्परविरुद्धौ, क्लेशो जीवभावः, आनन्दश्च ब्रह्मभावः। तमः प्रकाशवद् विरुद्धधर्माणौ क्लेशानन्दौ। विषयप्रसंगात् अभ्याससाहाय्येन कथमिव क्लेशसमुत्पत्तिरिति प्रागेव प्रपञ्चितम्। स्वस्वरूपच्युतिमात्रेणैव पुरुषः प्रकृतिपतित आत्मानं प्रकृतिवन्मन्यमानो ब्रह्मस्वरूपतो जीवत्वमनुभवति। तदानीमविद्यादयः क्लेशास्तत्र समुद्यन्ति, एभिरेव क्लेशैर्ग्रस्तो जीवो नानादुःखमनुभवन् जन्म-मृत्युचक्रे बम्भ्र-

ऽयते। एभ्यः क्लेशेभ्यो विरतिमवाप्य मुक्तिमार्गेऽग्रेसरीकर्त्तुं पूज्यचरणो महर्षिः सूत्रकारो व्याहरति यद् यथायथा जीवः कर्मभक्तियोगैर्युक्तो भवन् अग्रेसरति, तथातथा क्लेशस्तत्र ह्रासमुपैति आनन्दश्च प्रवर्धते। तात्पर्यमेतद् यत् विहितकर्मानुष्ठानेनाधिभौतिकशुद्ध्यधिगमो मलनाशश्च, उपासनाप्राणस्वरूपाया भक्तेः, उपासनाशरीरस्वरूपस्य योगस्य च साधनेन संवलितस्योपासनाकाण्डस्य साधनेनाधिदैवशुद्धिलाभः, तथैव विक्षेपनाशात् ज्ञानराज्यप्राप्तिः। इत्थं प्रकारेण जीवो ब्रह्मानन्दपारावारावगाहनाधिकारवान् जायते ॥२२॥

तदन्तिमं फलं निर्णयति—

**ततः स्वरूपाधिगमः ॥ २३ ॥**

ततस्तेन स्वरूपस्याधिगमो भवतीत्यर्थः। एवं हि कर्मभक्तियोगानां नियमितसेवनेनाध्यात्मशुद्धौ सत्यां साधकान्तःकरणादावरणं विनश्यति। तदानीमसौ भाग्यवान् तत्त्वज्ञानी साधकः स्वरूपोपलब्धिसामर्थ्यमधिगच्छति ॥ २३ ॥

अन्यदपि—

**संगाभावात् जीवन्मुक्तौ तन्नाशः ॥ २४ ॥**

संगस्य अभावात् जीवन्मुक्तौ, तन्नाशः तस्य क्लेशस्य व्युत्थानस्य वा नाशो जायते। यत्र पूर्णताप्राप्तमहापुरुषे स्वरूपोपलब्धिरसौ जीवन्मुक्तः प्रोच्यते। तत्र वासनाविलयात् तत्त्वज्ञानप्रभावतश्च संगनाशात् स्वत एव व्युत्थानं विलीयते। स हि महापुरुषः सशरीरोऽपि ब्रह्मस्वरूपः। प्रारब्धकर्मोपभोगाय तदीयं शरीरं कुलालचक्रवत् क्रियते कालाय जीवितं परिदृश्यते। अन्यथा तदर्थं शरीरस्य स्थितिरस्थितिर्वा समानैव। सच जीवन् एव मुक्तो निःश्रेयसपदमधिकरोति ॥ २४ ॥

नाशक्रममुदीरयति—

तन्नाशात् तन्नाशः ॥ २५ ॥

तन्नाशात् व्युत्थानस्य नाशात् तन्नाशः अध्यासस्य नाशो भवतीत्यर्थः। कारणनाशे कार्यनाशोऽवश्यम्भावी। विषयसंगविनाशादेव व्युत्थाननाशो जायते। अज्ञानी जीव एतदवधारयितुं न पारयति। प्रलयस्य मुक्तेश्चाप्यवस्थायामेवमेव दृश्यते। दृश्यप्रकृतौ विलयं गतायां प्रपञ्चमपि विलीयते, केवलं ब्रह्मैवात्रावशिष्यते। मुक्तावस्थायां तत्त्वज्ञानोदयेन दृश्यप्रपञ्चाभावानुभूतौ सत्यां स्वरूपमुपलभ्यते। अतो निश्चप्रचमिदं यत् दृश्याभावाद् व्युत्त्थानाभावः, व्युत्त्थानाभावेऽध्यासाभावश्च। व्युत्थानस्यानस्तित्वेऽभ्यासो नैव स्थातुमर्हति। अतो जीवन्मुक्तमहापुरुषे व्युत्थानस्य क्षणिकत्वादध्यासस्यापि क्षणिकत्वमेव, न तस्य स्थायित्वम्। अतः सिद्धमेतद् यत् व्युत्थाननाशाद् अध्यासनाशोऽप्यवश्यं जायते॥ २५॥

अन्यदपि—

तन्नाशात्तन्नाशः॥ २६॥

तस्य अध्यासस्य नाशात् तन्नाशः कर्मबीजसंस्कारस्यापि नाशोऽभ्युपगन्तव्यः। अध्यासोत्पत्तिराहित्यात् जीवन्मुक्तमहात्मनि व्युत्थानस्य क्षणिकत्वादस्थायित्वाच्च तदीयशक्तिविहीनान्तःकरणे नोत्पद्यतेऽध्यासप्रभावस्तदा तदन्तःकरणे संस्कारचिन्हं नोदेतुं शक्नुयात्। सुतरां संस्कारजननासामर्थ्यात् जीवन्मुक्ते क्रियमाणसंस्कारो नोत्पद्यते। स्मर्यते चात्र—

निःसंगरूपतोभोगात्तत्त्वज्ञे भोगजास्तथा।
संस्काराः क्रियमाणानां जायन्ते नैव कर्मणाम्॥

ज्ञानिनां नैव सम्बन्धः पद्मपत्रमिवाम्भसा ।
विद्यतेऽसंशयं कल्याः ! सार्द्धमागामिकर्मभिः ॥
अतस्तान्यपि नश्यन्ति ज्ञानयोगेन सुव्रताः ।
सर्वाण्यागामि कर्माणि नात्र कार्या विचारणा ॥ २६ ॥

निःश्रेयसलक्ष्यतोऽभिधीयते—

## उपाधितो भ्रान्तिर्मेघचन्द्रवत् ॥ २७ ॥

मेघचन्द्रवत् मेघस्य चन्द्रमा यथा गतिशीलः प्रतीयते तथैवोपाधितो भ्रान्तिर्भ्रमो जायते । संस्कारोत्पत्तिविनाशक्रमं वर्णयित्वा पूज्यपादेन महर्षिणा सूत्रकारेणाभिधीयते यत् स्वाभाविकसंस्कारव्यतिरिक्तास्वाभाविकसंस्कारोत्पत्तिमूलकारणं तत्त्वज्ञानाभावः, अज्ञानकारणादनात्मन्यात्मभानमुपाधिसंयोगतः समुद्भवति । वर्षर्त्तावाकाशे मेघाच्छन्ने पवनप्रभावादेकस्या दिशाया अन्यत्र दिशि मेघगमनोपाधिना चन्द्रश्चलन्निव प्रतिभाति, चन्द्रमसो गतिशीलत्वेऽपि तद्गतिर्नैव नेत्रप्रत्यक्षयोग्या, परन्तु वर्षर्तौ चन्द्रमाः कदाचित् पूर्वस्यां कदापि पश्चिमस्यां कर्हिचिद्दक्षिणस्यामुत्तरस्यां वा गच्छन् निभाल्यते, एतादृशभ्रमप्रतीतिनिराकृतिरनुमानतः सम्भवा । आकाशे मेघं गतिशीलं निरीक्ष्य निश्चीयते यन्मेघगमनोपाधिनैव चन्द्रगतिरनुभूयते, वस्तुतस्तद्गतिर्भ्रममूलिकैव । भ्रमोऽयमज्ञानमूलकः । अज्ञानजनन्यविद्या, विद्याया उदयेन ज्ञानोत्पत्तिस्तया च भ्रमप्रमादौ दूरीभवतः सत्यविकासश्च जायते ॥ २७ ॥

प्रसंगतः कर्मबीजभेदानाह—

## बीजं त्रिविधं सञ्चितक्रियमाणप्रारब्धभेदात् ॥ २८ ॥

बीजं संस्कारबीजमित्यर्थः सञ्चितक्रियमाणप्रारब्धभेदेन त्रिविधं त्रिप्रकारकं भवति । अज्ञानहेतुकोपाधिजनितभ्रमोत्पत्त्या यो ह्यस्वाभा-

विकः संस्कारो बद्धमूलो जायते, तस्य सञ्चितक्रियमाणप्रारब्धाख्यास्त्रयो भेदाः । अनेकेषु पूर्वजन्मजन्मान्तरेषु यो हि कर्म्मबीजरूपः संस्कारः सञ्चीयते, स सञ्चितनाम्नाऽऽख्यायते । वर्त्तमाने जन्मनि यश्च नूतनः संस्कारः संगृह्यते, स क्रियमाणाख्यया प्रोच्यते । यश्च किल संस्कारोऽङ्कुरितो जात्यायुर्भोगादिफलाधिगमाय वृत्तस्वरूपं शरीरमुत्पादयति, स प्रारब्धसंज्ञया समाम्नायते ॥ २८ ॥

विज्ञानं सुस्पष्टयति—

## धानुष्कशरवत् ॥ २९ ॥

त्रयाणामपि संस्काराणां गतिर्धानुष्कशरवद् वेद्या । अस्वाभाविकसंस्काराणां भेदत्रयं स्पष्टयितुं महर्षिः पूज्यपादः सूत्रकारो वक्ति —यथा हि शरसन्धानकारी योद्धा शरसन्धानकर्म्मणि प्रवर्तते, तदानीं शराणां तिस्रोदशाः सम्भवन्ति । बहवः शरास्तूणीरे सञ्चितास्तिष्ठन्ति, एकः शरो धनुषा युक्तो भवति, अपरश्च लक्ष्यस्याभिमुखं प्रधावति । उदाहरणेनैतेनावगन्तव्यमिदं यत्तूणीरे संस्थापितशरवत् सञ्चितसंस्कारो वेद्यः । यतो ह्यसौ जीवकर्म्माशये सञ्चितो भविष्यज्जन्मजन्मान्तरेषु जात्यायुर्भोगादिफलान्युत्पादयितुं प्रारब्धरूपेण परिणमति । यश्च शरो धनुषि नियोजितः स क्रियमाणसंस्कारतुल्यः । यतो धानुष्कस्तं मोक्तुं तूणीरे स्थापयितुमप्यर्हति । वस्तुतः क्रियमाणसंस्कारे कर्त्तुराधिपत्यं तिष्ठति, यतः क्रियमाणे कर्त्ता स्वाधीनो भवति क्रियमाणं कर्त्ता सकामं निष्कामं वा कर्त्तुं प्रभुः । तेन पापपुण्यसंग्रहे कर्त्तुः स्वतन्त्रता तिष्ठत्येव । परन्तु धानुष्कस्य यो हि शरः स्वहस्താद्लक्ष्यस्याभिमुखं प्रक्षिप्तः, तस्योपरि धनुर्धारिणः किञ्चिदप्याधिपत्यं न तिष्ठति, स च क्रियावसान एव शान्तो भवति । एवं हि प्रारब्धसंस्कारो जात्यायुर्भोगफलाधिगमाय शरीरमुत्पाद्यैव शान्तो भवति नान्यथा ॥ २९ ॥

निःश्रेयसं लक्ष्यीकृत्य तदीयहानोपायो निर्दिश्यते—

द्वे भ्रष्टबीजवत् ॥ ३० ॥

द्वे सञ्चितक्रियमाणसंस्कारबीजे भृष्टबीजवद् भर्जितबीजवद् विज्ञातव्ये। त्रिविधेष्वपि संस्कारेषु सञ्चितः क्रियमाणश्च संस्कारौ बीजरूपौ नाङ्कुरोत्पत्तिलब्धावसरौ। भर्जितबीजवत्तौ हानं प्राप्नुतः। चणकगोधूमादिबीजानि वह्निना भृष्टानि स्वरूपे विद्यमानानि बुभुक्षा-शान्तिकराण्यपि अङ्कुरफलोत्पादने नितरामशक्तानि जायन्ते, तद्वदेव सञ्चितक्रियमाणसंस्कारसम्बन्धः कर्माशय-स्मृति-चित्ताकाशादिभि-र्विद्यमानोऽपि सुकौशलपूर्णयौगिकप्रक्रियादिना फलोत्पादने नष्ट-शक्तिर्जायते। वासनात्यागपूर्वककर्मयोगोऽहंतत्त्वविनाशपूर्वकोपास-नायोग—सदसद्विवेकस्वरूपज्ञानयोगैश्च त्रिभिरेकेनापि वा लोको-त्तरफलमवश्यमुपलभ्यते। बीजभर्जनेऽग्निरिव सुकौशलपूर्णयोगक्रिया तत्र साहाय्यमाचरति। एतदेव योगस्यालौकिकत्वम् ॥ ३० ॥

अन्यहानोपायो निर्दिश्यते—

भोगाद्धानमन्यस्य ॥ ३१ ॥

अन्यस्य प्रारब्धस्य कर्मणो भोगादेव हानं विनाशो जायते। तृतीयस्य प्रारब्धकर्मणोऽन्यैव गतिः, प्रारब्धकर्मसंस्कारसमूहो भूमि विरोपितबीजवत् ध्रुवमङ्कुरमुद्भावयति। प्रारब्धबीजस्यैव परिणामो देहरूपवृक्षोऽवधेयः। अतो दग्धबीजवत् प्रक्रिया नात्र सम्भवा। बीजात् समुत्पन्नोऽङ्कुरः पूर्णवृक्षरूपेण परिणमन् फलमुत्पाद्यैव विर-मति, तदनन्तरं प्रणश्यति च। अतः प्रारब्धसंस्कारो जात्यायुर्भोगान् नूनमुत्पादयति। प्रारब्धसंस्कारस्य भोगादेव क्षयः। योगिनो वासनाविरहितास्तत्त्वज्ञानमाश्रयन्तो भोगद्वारैव प्रारब्धकर्मक्षयं विदधते ॥ ३१ ॥

विज्ञानमेतत्पुनरपि स्पष्टयति—

**निष्पन्नाङ्कुरत्वात् ॥ ३२ ॥**

निष्पन्नो योऽङ्कुरस्तस्य भावो निष्पन्नाङ्कुरत्वम् , तस्मात् प्रारब्धकर्मणो भोगेनैव क्षयो जायत इत्यर्थः। बीजस्वरूपाणि प्रारब्धकर्माणि यद्यङ्कुरमुत्पाद्य वृक्षरूपं शरीरमुत्पादयन्ति, तदा निश्चप्रचमिदं यत् तद्भोगोऽवश्यम्भावी। यदि योगिनः समीहेरन् , तदा ते स्वल्पसमयेनाधिकं भोगमधिकसमयेन स्वल्पभोगं देशकालतारतम्यमनुसृत्य कर्त्तुं प्रभवः। परन्तु प्रारब्धकर्मणां भोगादेव क्षय इतिसर्ववादिसम्मतः सिद्धान्तः ॥ ३२ ॥

प्रसंगतः शङ्कासमाधानार्थमुच्यते—

**तौ कालनिमित्तौ ॥ ३३ ॥**

तौ सञ्चितक्रियमाणौ कालनिमित्तौ काल एव निमित्तौ ययोस्तथाभूतौ वेद्यौ। जिज्ञासुरत्र शंकते—ननु प्रारब्धस्य तु भोगेन क्षयः, किन्तु सञ्चितक्रियमाणयोः का दशा ? कर्म प्रतिक्रियोत्पत्तिमन्तरेण न क्षीयते, तर्हि तयोः कीदृशी प्रतिक्रिया जायते ? समाधत्ते सत्यम्। एतादृशवैज्ञानिकशङ्कायाः समाधानार्थमेव पूज्यपादेन महर्षिणा सूत्रकारेण सूत्रमिदमाविष्कृतम्। संस्कारो न प्रणश्यतीति यथार्थमेतत्। अत एव क्रियमाणसञ्चितकर्माणि मुक्तात्मनोऽन्तःकरणकेन्द्रं परित्यजन्ति, यतोऽसौ निःसङ्गो जायते। निःसङ्गत्वाद्धेतोर्मुक्तात्मनः केन्द्रं सञ्चितक्रियमाणाभ्यां स्वत एव परित्यज्यते। अगत्या मुक्तात्मनः सञ्चितक्रियमाणकर्माणि कालमाश्रित्य ब्रह्माण्डसमष्टिसंस्कारराशिं प्राप्नुवन्ति। जीवन्मुक्तात्मनोऽन्तःकरणस्य स्वरूपे युक्तत्वात्, तन्मनसः क्लीवत्वात्, वासनायाः स्थायिरूपेण विनाशाच्च नित्यस्थिततत्त्वज्ञानसाहाय्येन तदीयौ सञ्चितक्रियमाणसंस्कारौ न फलोत्पादने

प्रभवतः, विशेषतश्च जीवन्मुक्तेऽविद्याया लेशतोऽप्यसत्त्वात्प्रकृतिपुरुष-सम्बन्धः स्वत एव नश्यति। अन्यश्च कर्मणो नाशासम्भवात् तत मुक्तपिण्डं परित्यज्य ब्रह्माण्डप्रकृतिमाश्रयति भविष्यत्कालस्य सहायकं भवति, उग्रकर्माणं शत्रुं मित्रं वा समाश्रयति ॥ ३३ ॥

विज्ञानमिदं पुनः स्पष्टयति—

**महाकाशावलम्बि जीवन्मुक्तकर्म ॥ ३४ ॥**

जीवन्मुक्तस्य महात्मनः कर्म महाकाशावलम्बि, महाकाशमवलम्बत इत्यर्थः। चित्ताकाशचिदाकाश-महाकाशरहस्यं पूर्वमेवोपवर्णितम्। बद्धदशायां कर्मबीजसंस्कारराशिसम्बन्धश्चित्ताकाशेन चिदाकाशेन च नियमितरूपेण तिष्ठति, परन्तु मुक्तस्य जीवस्य पिण्डे प्रकृतिपुरुषसम्बन्धस्य विच्छिन्नत्वात् तत्सम्बन्धयुक्तकर्मबीजसंस्कारराशयो महाकाशमाश्रयन्ति। वस्तुतो मुक्तात्मनः स्वस्वरूपोपलब्ध्या तच्चिज्जडग्रन्थिनाशेन सह चित्ताकाशचिदाकाशयोरपि तत्त्वतो लयो जायते। घटमठनाशे तत्तदाकाशोऽपि यथा महाकाशे विलीयते तथैव मुक्तात्मनो महापुरुषस्य चित्ताकाशचिदाकाशदशा भवति। अतस्तत्र विद्यमानसंस्कारसमूहो महाकाशमाश्रयति।

जीवन्मुक्तमहापुरुषस्य पापमयकर्मराशयो हि तन्निन्दकं तद्द्वेष्टारं, पुण्यमयकर्मराशयश्च तदीयं भक्तगणं सेवकसमुदायं च समाश्रयन्तीति केचिद्दार्शनिकाचार्याः सम्मन्वते। एतस्याः शंकायाः समाधानमप्यावश्यकमेव। जीवन्मुक्तप्रारब्धकर्मणां भोगेनैव क्षयः, सञ्चितक्रियमाणानि महाकाशमाश्रयन्तीति साधारणो नियमः, किन्तु कदापि महात्मनामनिच्छारूपेच्छायाः प्रभावात्, निन्दकस्य भक्तस्य च कर्मण उग्रत्वकारणात् जीवन्मुक्तस्य सदसत्कर्म भक्तं विद्वेषिणमपि समाश्रयन्ति। एतद्विज्ञानसिद्धं योगदर्शनविज्ञानद्वारा निर्णीतमपि यद् उग्रत्वहेतुना अदृष्टजन्मवेदनीयमपि कर्म दृष्टजन्मवेदनीयं भवति। एतद्विज्ञानमनुसृत्यैव महत्याः

सेवायाः सुमहतोऽपराधस्य चात्युग्रकर्मप्रभावान्महाकाशाश्रयणयोग्य-संस्कारराशय आकृष्टाः सन्तः साधुद्वेष्टुर्दुःखाय साधुसेवकस्य च सुखाय कल्पन्ते ॥ ३४ ॥

पूर्वानुसृतविज्ञानदार्ढ्याय पुनरुच्यते—

## गजादिवत् ॥ ३५ ॥

गजादिचतुर्विधभूतसंघरूपसहजपिण्डसंस्काराः स्वाभाविका मानवपिण्डसंस्काराश्चास्वाभाविकाः। स्वाभाविकाः संस्काराः किलैकरसाः। अतस्तेषां सम्बन्धो ब्रह्माण्डस्य समष्टिभूतसंस्कारैः सह तिष्ठति। जीवन्मुक्तो महात्मा प्रकृतिस्वाभाविकगतिप्रवाहे आत्मानं प्रवाहयितुं यदा समर्थो जायते, तदानीं मनुष्येतरचतुर्विधभूतसंघकर्मवत् तदीयान्यपि कर्मबीजानि महाकाशमवलम्बन्ते ॥ ३५ ॥

विज्ञानमिदं सुस्पष्टयितुं साधारणसम्बन्धः प्रदर्श्यते—

## प्रारब्धं चित्ताकाशेन सम्बद्धम् ॥ ३६ ॥

प्रारब्धकर्मणः सम्बन्धश्चित्ताकाशेन बोद्धव्यः। जीवन्मुक्तासाधारणावस्थासंस्कारविज्ञानं प्रतिपाद्य सम्प्रति संस्काराणां साधारणसम्बन्धं विविनक्ति। साधारणरीत्या प्रारब्धसंस्कारश्चित्ताकाशसम्बन्धयुक्तो वर्त्तते। मुक्तात्मनो बद्धात्मनो वा प्रारब्धं कर्म भोगमन्तरेण न कदापि क्षीयत इति पूर्वमेव सिद्धान्तितम्। जीवपिण्डेन सह चित्ताकाशस्य साक्षात्सम्बन्धो यतश्चित्तमन्तःकरणस्यैको विभागो वर्त्तते। अन्तःकरणं च जीवशरीरस्यैकमङ्गम्, अतोऽङ्कुरितस्य प्रारब्धसंस्कारस्य चित्ताकाशेन साक्षात्सम्बन्ध इत्यत्र कः सन्देहः ॥ ३६ ॥

द्वितीयस्य सम्बन्धं प्रदर्शयति—

## क्रियमाणं चिदाकाशेन ॥ ३७ ॥

क्रियमाणः संस्कारश्चिदाकाशेन सम्बद्धः। चित्ताकाश-चिदा-

काश-महाकाशानां त्रयाणामप्येतेषां दार्शनिकः सिद्धान्तः संक्षेपतो निर्णीतपूर्वः। पिण्डेन सह चित्ताकाशस्य, ब्रह्माण्डेन सह चिदाकाशस्य अनन्तकोटिब्रह्माण्डेन च साकं महाकाशस्य सम्बन्धः स्वाभाविकः। इममेव स्वाभाविकं नियममनुसृत्य यस्य संस्कारस्य यादृशं बलं, स हि स्वेनैवाकाशेन सह घनिष्ठतां बिभर्त्ति। प्रारब्धसंस्काराणां चित्ताकाशवत्, क्रियमाणसंस्काराणां समधिकसम्बन्धश्चिदाकाशेन सन्तिष्ठते। दृष्टजन्मवेदनीयसंस्कारस्य चित्ताकाशेन, अदृष्टजन्मवेदनीयस्य च चिदाकाशेन सह घनिष्ठः सम्बन्धः। एतस्मादेव कारणात् योगदर्शनं संस्कारद्वयमेवाङ्गीकरोति। दृष्टजन्मवेदनीयः संस्कारोऽङ्कुरोत्पत्तिं जनयति। जात्यायुर्भोगोत्पादकं शरीरं तस्यैवाङ्कुरस्य वृक्षस्वरूपम्। योगदर्शनस्यैतद्वैशिष्ट्यं यदद्यो ह्यत्रमभ्युपगच्छति यदसाधारणयोगशक्त्याऽत्रैव शरीरेऽदृष्टजन्मवेदनीयः संस्कारो दृष्टजन्मवेदनीयः कर्त्तुं शक्यते, दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयो विधातुं शक्य इति, इदमपि दर्शनं यदि प्रबलकर्मशक्तिमङ्गीकुरुते तर्हि तत्त्वतो उभयत्र दर्शने न कोऽपि भेदः। सिद्धान्तमिममनुसृत्यैव क्रियमाणसंस्कारसाक्षात्सम्बन्धश्चिदाकाशेन सह सिध्यति। चिदाकाशस्तु महाकाशस्यासावंशो यश्चित्ताकाशतो व्यतिरिक्तः। समधिक–व्यापकत्वान्निकटवर्तित्वाच्च. अत एव केचित्संस्काराः समाकृष्टाः प्रारब्धस्वरूपं धृत्वा स्थूलशरीरमुत्पादयन्ति, सुतरां घनिष्ठत्वान्निकटस्थत्वाच्च साधारणतो नवीनानि क्रियमाणकर्माणि संस्काररूपेण चिदाकाश एवाङ्कितानि जायन्ते। एतत्स्थितिमात्रमेवावस्थाविशेषे चित्ताकाशे परिलक्ष्यते। अतो विशिष्टविचारतः क्रियमाणकर्मसम्बन्धश्चिदाकाशेन साकं वर्त्तत इति स्वीकार्यम्॥ ३७॥

तस्य साधारणगतिरुच्यते—

**तदविशेषतः सम्मिलितं सञ्चिते॥ ३८॥**

तत् क्रियमाणं कर्म अविशेषतः साधारणतः सञ्चिते कर्मणि सम्मिलितं तिष्ठति । प्रारब्धसंस्कारस्वरूपं सुस्पष्टयितुं पूज्यपादो महर्षिः सूत्रकारस्तस्य साधारणगतिमुपवर्णयति । जीवो निजवर्त्तमानजन्मनि प्रारब्धसंस्कारफलमुपभुङ्क्ते । वर्त्तमानशरीरेण यो हि नवीनः संस्कारः संगृह्यते स एव क्रियमाणोऽभिधीयते । स हि सञ्चितसंस्कारे सम्मिलतीति साधारणो नियमः । वस्तुतः सञ्चितः संस्कारः स एवोच्यते, यः किल जीवेनानन्तकोटिजन्मभ्यः संगृह्यते, तत्कर्मबीजात् भोगस्वरूपवृक्षोत्पत्तेः समयः समागतो नास्ति । जीवः प्रतिमुहूर्त्तं यावतः संस्कारान् संगृह्णाति तेषां शतांशमपि भोक्तुं न शक्नोति । आहारविहारादिना जीवः प्रतिदिनं द्वित्रीः कर्मणो भोगं भुङ्क्ते । परन्तु प्रतिदिनं तेन एतावन्ति कर्माणि क्रियन्ते, यानि संख्यातुमशक्यानि, सुतरामेतदस्युरगन्तव्यमेव यत् सञ्चित-संस्कारा एतावन्तोऽसंख्याता स्तिष्ठन्ति येषां भोगकाल आगन्तुमेव न शक्नोति । एतत्त्ववश्यमेव भवति यत्तेषु कियन्तः संस्कारा अग्रेसरन्तो जन्मान्तरोत्पादने प्रभवन्ति । क्रियमाणसंस्कारस्य साधारणो नियमोऽयमेव यदसौ नवीनकर्मणा संगृहीतः सञ्चितसंस्कारपुञ्जे सम्मिलति ॥३८॥

तद्विशिष्टगतिं वक्ति—

**तत्तु कदाचिद्विशेषतः प्रारब्धे ॥ ३९ ॥**

तत् तु क्रियमाणसंस्कारबीजं विशेषतो विशिष्टं सत् प्रारब्धकर्मणि सम्मिलति, नूतनान् जात्यायुर्भोगान् उत्पादयति च । इयं तस्यासाधारणगतिः । नवीनजात्युत्पत्तेरुदाहरणं महर्षिर्विश्वामित्रो नन्दीश्वरश्च । आयुष उदाहरणं मार्कण्डेयस्य मुनेर्जीवनम् । ब्रह्माण्डव्यापिनाऽऽकाशेन सह यः किल क्रियमाणसंस्कारसम्बन्धः पूर्वं निरूपितः स हि मध्यवर्त्ती । अतः क्रियमाणसंस्कारः साधारणरूपेण सञ्चिते, विशिष्टस्तु प्रारब्धे सम्मिलति । योगदर्शनेन तु दृष्टजन्मवे-

दनीयोऽदृष्टजन्मवेदनीय इति द्वौ संस्कारौ स्वीक्रियेते इतिपूर्वमेवोक्तम्। एतद्विज्ञानमनुसृत्य प्रारब्धसंस्कारो दृष्टजन्मवेदनीयः क्रियमाणसंचितसंस्कारौ चादृष्टजन्मवेदनीयौ स्तः। किन्तु योगशक्त्या तौ दृष्टजन्मवेदनीयावपि कर्त्तुं शक्येते। सुतरां योगविज्ञानानुसारेणापि विशेषशक्तिसम्पन्नः क्रियमाणसंस्कारः प्रारब्धकर्मणि सम्मिलितो भोगमुत्पादयितुं प्रभवति। योगसाधनेन तपश्चर्य्याप्राबल्येन च एकस्मिन्नेव जन्मनि मातुः पितुश्च रजोवीर्यंप्राप्तान् क्षत्रियदेहोपयोगिनः परमाणून् परिवर्त्त्य महर्षेर्विश्वामित्रस्य ब्रह्मर्षित्वाधिगमो विज्ञानेनैतेनैव सिध्यति, एवं हि नन्दिकेश्वरस्य पार्थिवतत्त्वप्रधानं शरीरम् अग्नितत्त्वप्रधानदेवशरीरे परिणतमभवदित्येतत् विज्ञानानुमोदितम्। महर्षेर्मार्कण्डेयस्यापि प्रबलशिवभक्तिस्वरूपलोकातीत-क्रियमाणसंस्कारबलेन पञ्चवर्षायुष्कस्य कल्पव्यापिताप्राप्तिरपि एतस्यैव लोकोत्तरकर्मरहस्यस्य फलमवधार्यम्॥ ३९॥

प्रसङ्गतः शङ्का समाधीयते—

## फलं वेगानुरूपं सद्वाऽसद्वा॥ ४०॥

वेगस्यानुरूपमेव सत् असत् वा फलमुत्पद्यते, जिज्ञासुरत्र शङ्कते—ननु प्रबलपुरुषार्थद्वारा शुभः क्रियमाणः संस्कार एव प्रारब्धे सम्मिलति किं वा शुभाशुभौ द्वावपि क्रियमाणसंस्कारौ प्रारब्धे मिलतः, समाधत्ते—भवदीयशंकासमाधानार्थमेवैतत्सूत्राविर्भावः, श्रूयताम्—शुभमशुभं वा कर्म बलाबलविचारतः समानमेव। शुभं कर्म शुभफलमुत्पादयति, अशुभं चाशुभमित्युभयोरेतावानेव भेदः। शक्तिविचारेणोभयोः समानत्वे तीव्रमशुभमपि क्रियमाणं प्रारब्धे मिलितं शीघ्रमेवाशुभं फलमुत्पादयितुमर्हति। तीव्राशुभक्रियमाणकर्मशक्त्यैव वेनकंसादयोऽल्पायुषोऽभूवन्। नहुषोऽपि स्वर्गात् पतितः सर्पयोनिमवाप्तवान्। वशिष्ठपुत्रस्याप्यन्त्यजत्वाधिगमः। स्मर्यते चात्र—

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते ॥ ४० ॥

प्रसंगतस्तद्भोगस्वरूपं निर्णयति—

**भोगस्त्वस्य दिव्यस्नानवत् ॥ ४१ ॥**

प्रारब्धीभूतस्य क्रियमाणसंस्कारस्य भोगो दिव्यस्नानवदवगन्तव्यः । समधिगतप्रारब्धः क्रियमाणस्तीव्रः कथमिव त्वरितं भोगमुत्पादयतीत्यभिधीयते—शास्त्रेऽष्टविधं स्नानम् । तत्र दिव्यस्नानमप्येकम् । उदीयमाने सूर्ये, तदीयरश्मीनामधिगमे मेघे वर्षति च यत् स्नानं तद्दिव्यमित्युच्यते । अन्यानि सप्तविधस्नानानि सर्वदैव भवितुमर्हन्ति । परन्तु दिव्यस्नानाय दैवस्य साहाय्यस्य समपेक्षा । अत एव तद्दिव्यमित्युच्यते । यथाहि दिव्यस्नानेन आतपसेवनं सूर्यदर्शनं, वृष्टिजलसेवनं चेति त्रिविधं फलं स्नानकर्त्ता सहैवाधिगच्छति, तथैव शुभाशुभकर्मभोगप्राप्त्या साकमेव स्वकृतकर्मज्ञानेनालौकिकदैवसाहाय्यलाभेन च कर्मफलभोक्तुर्विशिष्ट उपकारो जायते । ज्ञानसत्त्वेऽशुभकर्मकर्त्ता भविष्यति सावधानो भवितुमर्हति । शुभकर्मकर्त्ता तु समधिकशुभकर्मणि प्रवर्त्तते, दुर्ज्ञेयकर्मगतौ दैवराज्ये विश्वसिति च ॥ ४१ ॥

विज्ञानमिदं पुनर्द्रढयति—

**तदस्मिन् प्रारब्धं वा सञ्चितं वा ॥ ४२ ॥**

क्रियमाणं कर्म देहावसान इतिशेषः प्रारब्धं वा सञ्चितं वा भवितुमर्हति । क्रियमाणस्य प्राबल्याभावे साधारणत्वे पिण्डपातानन्तरं किं स्यादित्युच्यते । क्रियमाणं कर्म भविष्यति जन्मनि प्रारब्धे वा सञ्चिते वा सम्मिलति । भविष्यत्कालाय तस्य गतिद्वयं स्वाभाविकम् । एतत्सूत्राविर्भावेन पूज्यपादमहर्षेः सूत्रकारस्यैष आशयः ।

प्रतीयते यत्कर्त्रा चैतत् स्मर्त्तव्यं–सदसद् वा कर्म तीव्रमिहैव जन्मनि भोगमुत्पादयेन्मध्यमं चेज्जन्मान्तरे भोगमुत्पादयितुमर्हेत् ॥ ४२ ॥

तृतीयस्य सम्बन्धं व्याहरति—

## सञ्चितं महाकाशेन ॥ ४३ ॥

सञ्चितं कर्म महाकाशेन सम्बन्धयुक्तं जायते, सञ्चितसंस्कारा असंख्याताः, भोगतस्ते न प्रणष्टाः, यतस्तेषु बहूनां भोगावसर एव नोदेति। अतोह्येतदभ्युपगन्तव्यमेव यत्ते व्यष्टिसमष्टिसम्बन्धतस्समतीता अपि भवितुं शक्नुवन्ति। अतस्तेषां महाकाश एव प्रधानं निवासस्थानम्। त्रिविधमाकाशस्वरूपमवबोधयितुमुच्यते यद् यथैकत्र मठे संरचितघटस्याकाशः तन्मठाकाशः, मठबहिस्थोऽसीम आकाशश्च। वस्तुतः असीमाकाश एव मठाकाशो घटाकाशश्च परमुपाधिभेदात् त्रयोऽपि परस्परं भिद्यन्ते। एषु घटाकाशो मठाकाशश्च निर्दिष्टसीमानौ, महाकाशश्चासीमस्वरूपः, एतद् विज्ञानमनुसृत्यावगन्तुमुचितं यत् सञ्चितसंस्कारराशिर्भोगसम्बन्धेन सीमविहीनस्तर्हि महाकाश एव स्थापयितुमर्हः।

सृष्टिस्थितिप्रलयैः सह त्रयाणामप्याकाशानां कः सम्बन्धः ? पिण्डस्य ब्रह्माण्डस्य, उभयोर्वा प्रलये जाते आकाशत्रयस्य का दशा इत्यादिजिज्ञासुशंकासमाधानायोच्यते यत् पिण्डाकाशे नष्टे तदीयचित्ताकाशोऽपि उपाधिराहित्यात्प्रणश्यति। ब्रह्माण्डस्य लये जाते चिदाकाशोऽपि विलयत्वमुपैति। अनाद्यनन्तस्य महाकाशस्य नित्यस्थितित्वात् सर्वेऽपि संस्कारास्तत्रैव तिष्ठन्ति यथापूर्वं सृष्टिं समुत्पादयन्ति च ॥ ४३ ॥

तद्गतिर्वर्ण्यते—

**ततोऽन्तिमं कर्मानुरूपमाकर्षति चक्रसन्धौ ॥ ४४ ॥**

चक्रस्य गमागमचक्रस्य सन्धौ सन्धिकाले यत् अन्तिमं कर्म अनुरूपं स्वानुरूपं कर्म आकर्षति सञ्चिदादाकर्षतीति भावः। यद्यपि सञ्चितं कर्म भोगोत्पादने न समर्थम्, किन्तु मृत्युलोकस्थूलदेहस्वरूप-मानवपिण्डपतनसमये गमागमचक्रसन्धौ जीवस्यान्तिमं मानसिकं कम, तदनुरूपसजातीयः संस्कारः सञ्चितसंस्कारादाकृष्टो भवति। इमौ मिलित्वा जीवप्रारब्धभूतौ भोगमुत्पादयतः। गमनागमनचक्रं किं स्वरूपं कथं च विस्तृतिमापद्यत इति पूर्वमेव निरूपितम्। चक्रस्यै-तस्य निश्चितः परिधिर्मृत्युलोक एवं। यतो हि मानव एव देहावसाने पितृलोके प्रेतलोके नरकलोके किं वा उच्चदेवलोकेषु असुरलोकेषु गन्तुं शक्नोति। पूर्वोक्तलोकेषु एकस्मिन् बहुत्र वा जीवो गच्छति, परन्तु सर्वत्रापि वम्भ्रम्यमाणो मृत्युलोके नूनमेव पुनरावर्त्तते। फलतो मृत्यु-लोके देहावसानसन्धिरेव गमागमचक्रसन्धिरिति निश्चप्रचम्। अत्र सन्धौ अर्थात् स्वदेहपरित्यागकाले मानवस्य यदन्तिमं मानसिकं कर्म तदेव तस्य भविष्यज्जन्मकारणं जायते। सङ्कल्पविकल्पमन्तरा न स्थातुमर्हति जैवं मानसम्। यतः संकल्पविकल्पात्मकस्तत्स्वभावः। स्वजीवने मानवकृतं कर्म त्रिधा विभक्तुं शक्यते। जीवस्यात्युग्रकर्म-णोऽतिप्राबल्येन कृताध्यासस्य मृत्युकाले तत्स्मृतिश्चित्ते नूनमुदेति। तस्यैव मानसिकावलम्बनस्यावस्थायां मानवः शरीरं परित्यजति। भविष्यद्भोगोत्पत्तये तत्प्रारब्धस्यावश्यकत्वम्। तदानीं तदन्तिम-संस्कारानुरूपाः सजातीयाः सञ्चितसंस्काराः समाकृष्टा जायन्ते। यथा सप्तधातूनां मध्ये स्थापितश्चुम्बकः लौहमेव समाकर्षति, तथैव महाकाशे संख्यातीततदीयसञ्चितसंस्काराणां विद्यमानत्वेऽपि मनुष्यान्तिममानसिककर्मस्वजातीयः सञ्चितसंस्कारराशिः, तस्य चित्ताकाशे समाकृष्टः प्रारब्धस्वरूपतां बिभर्त्ति ॥ ४४ ॥

शङ्कां समाधत्ते—

सम्बन्धात् ॥ ४५ ॥

संबन्धात् एवं जायते, संबन्धादेव संस्कार आकृष्यत इत्यर्थः। जिज्ञासुरत्र शंकते—ननु महाकाशेऽनन्तकोटिजीवानामगणितकोटि-संस्कारा अङ्कितास्तिष्ठन्ति तेषु केवलं तस्यैव जीवस्य विशेषतः स्व-जातीय एव संस्काराः कथमाकृष्यन्ते ? समाधत्ते—यथा किलासंख्या-तेषु गोसमुदायेषु वत्सा निजामेव मातरमनुसरति नान्याम्, तथैव संस्काराणामानन्त्ये वैचित्र्येऽपि अनेकेषां जीवानां संस्काराणां च सहविद्यमानत्वेऽपि केवलं तस्यैव जीवस्य सजातीयाः सम्बन्धयुक्ताः संस्कारा आकृष्यन्ते। यथा संख्यातीतासु गाषु महिषीषु च सहैव चरन्तीष्वपि ताभिस्ताभिः साकं तद्वीया वत्सा अपि चरन्तो निजा एव मातृः अनुगच्छन्ति, तद्वदेव व्यक्तिनिर्विशेषत्वं स्वजातीयसंस्काराः समाकृष्टा भवन्ति, नाऽन्ये। यथा चैकस्मिन् बीजे तद्वृक्षस्य निखि-लाऽपि प्रकृतिराकृतिश्च सूक्ष्मस्वरूपेण तिष्ठति, तदेव तेन बीजेन तज्जनको वृक्ष एव समुत्पद्यते, तथैव प्रत्येकस्मिन्नपि संस्कारे संस्कार-संग्रहकर्तुर्जीवस्य प्रकृतिराकृतिर्व्यक्तिस्वरूपं च सूक्ष्मस्वरूपेण तिष्ठन्ति। अत एव संस्कारोऽसौ स्वोत्पत्तिस्थाने समाकृष्यते। यथै-केन मानवेन सहापरमनुष्याकृतिः प्रकृतिर्वा न संवदति, तथैवैकस्य संस्काराणामन्यसंस्कारैः साकं विसंवादः स्वतः सिद्धः ॥ ४५ ॥

शङ्कां समाधत्ते—

स्वाभाविकेन तथातदभावात् ॥ ४६ ॥

स्वाभाविके संस्कारे न तथा भवति, तदभावात् तस्य संगस्य आसक्तेर्वा अभावात् अस्तिताविरहात्। शंकते—ननु अस्वाभाविकः संस्कार एव समाकृष्यते स्वाभाविकः कुतो नेति ? सत्यम्। भवदायु-

शंकासमाहितय एव पूज्यपादेन सूत्रकृता महर्षिणा सूत्रमिदमाविश्चक्रे। श्रूयताम् अस्वाभाविकाः संस्काराः कर्त्तुरहंकारजनितवासनाकेन्द्रासक्ता अत एव तद्वासनाकेन्द्रे समाकृष्यन्ते, परन्तु स्वाभाविकसंस्कारैः सह तदभावान्न ते समाकृष्यन्ते, मनुष्येतरोद्भिज्जादिजीवानां, किं वा जीवन्मुक्तादीनां महात्मनां च संस्कारेषु अहंकारजवासनाया लेशमात्रतोऽपि सम्बन्धाभावात् स्वाभाविकाः संस्कारा अस्वाभाविकसंस्कारवत् न कदापि समाकृष्टा भवन्ति। यद्यपि ते प्रकारान्तरेण प्रतिक्रियामुत्पादयन्ति, परमस्वाभाविकसंस्कारवत् नैव निजकेन्द्रे समाकृष्टा भवन्ति न वा फलोत्पत्तिं जनयन्ति ॥ ४६ ॥

विज्ञानमेतत् स्पष्टयति—

## तत्र न भेदः कर्मणाम् ॥ ४७ ॥

तत्र स्वाभाविके संस्कारे सञ्चितक्रियमाणप्रारब्धकर्मणां भेदो नास्ति। भेदोऽयमस्वाभाविकसंस्काराणामेव, एतन्मौलिकसिद्धान्तोऽयं यत् स्वाभाविकाः संस्काराः प्रकृतिस्वभावोद्भवाः। कथमिव ते प्रकृतिस्वभावतः समुद्भवन्तीति पूर्वमेव प्रपञ्चितम् ॥४७॥

आकाशसम्बन्धेन विज्ञानं स्पष्टीकुरुते—

## आकाशस्यापि भूतसंघे प्रकृत्यायत्तत्वात् ॥ ४८ ॥

प्रकृत्यायत्तत्वात् प्रकृतेरधीनत्वात् भूतसंघे चतुर्विधभूतसङ्घे आकाशस्यापि न भेदः। अस्वाभाविकसंस्कारैस्त्रिविधैर्भेदैः साकं त्रयाणामप्याकाशानां कीदृशः सम्बन्ध इति पूर्वमेव निर्णीतम्। शङ्क्यते स्वाभाविकसंस्काराणां तैः सह कीदृशः सम्बन्धः? त्रिविधाकाशेन तेषां कथं न तादृशः सम्बन्धः? समाधत्ते—चतुर्विधो भूतसङ्घः पूर्णरूपेण प्रकृतेरधीनः। तत्राहंकारजनितजीववासनाया लवलेशोऽपि नास्ति, तेन प्रकृतिमातुरिङ्गितेनैव सर्वमनुष्ठीयते, अतस्तदीयकर्मजनित-

संस्कारैः सहाभेदसम्बन्धः। वस्तुतः स्वाभाविकः संस्कार एकोऽद्वितीयश्चातस्तदर्थम् आकाशत्रयभेदाभावः। चतुर्विधभूतसंघे विद्यमानाः स्वाभाविकसंस्कारा श्चित्ताकाशे चिदाकाशे, महाकाशे च समानरूपेण व्यापकास्तिष्ठन्ति। किं वा तत्कृते आकाशत्रयभेदकल्पना नास्तीत्यप्यभिधातुं शक्यते ॥ ४८ ॥

मुक्तिप्रसंगात् कर्मणो लयविज्ञानमुच्यते—

**संस्कारात्तस्याविर्भावो भोगात्तु लयः ॥ ४९ ॥**

संस्कारात् तस्य कर्मण आविर्भावः समुत्पत्तिः, भोगात् तु तस्य कर्मणो लयो जायते, कर्मबीजं संस्कारः। बीजाद्वृक्षोत्पत्तिरिव, संस्कारात् कर्माविर्भावः। फलोत्पत्तेरनन्तरं वृक्षस्येव शुभाशुभभोगप्रादुर्भावानन्तरं कर्मणो विलयः, प्रतिक्रियामुत्पाद्य क्रियाया लयो जायते। वस्तुतः क्रियाविधानकाले या शक्तिः प्राकट्यं प्राप्नोति, सा प्रतिक्रियामाविर्भाव्य प्रणश्यति। उदाहरणेनावगन्तव्यं यत् यया शक्त्या हस्त उत्थाप्यते, तत्प्रतिक्रियाकाले करो निम्नभागे निपतति। तदानीं प्रतिक्रियामुत्पाद्य सा शक्तिर्विलीयते। एवमेव संस्कारतः कर्मणि समुत्पन्ने संस्कारशक्तिः तत्र कार्यं विधत्ते, शुभमशुभं वा भोगमुत्पाद्य सा शक्तिर्विलीयते ॥ ४९ ॥

भोगस्वरूपमभिधत्ते—

**भोगनिष्पत्तिर्व्यष्टिसमष्टिभ्याम् ॥ ५० ॥**

कर्मफलेन शुभाशुभभोगनिष्पत्तिः समष्टिव्यष्टिसम्बन्धाद् द्विधा विभज्यते। समष्टिसम्बन्धेन समुत्पद्यमानभोगशक्तेः प्रेरणा चित्ताकाशतः, समष्टिसम्बन्धेन जायमानभोगस्य शक्तेः प्रेरणा चिदाकाशतो बोभवीति। व्यष्टिसम्बन्धः पिण्डात्मकः समष्टिसम्बन्धश्च ब्रह्माण्डात्मको वेदितव्यः। उदाहरणरूपेणावगन्तव्यं यत् साधारणव्याधिप्रस्ते

जीवे व्यष्टिसम्बन्धः, महामारीप्रभृतिभिर्व्याधिभिर्ग्रस्यमाने समष्टि-सम्बन्धो बोद्धव्यः। व्यष्टिसम्बन्धेन केवलं जीवपिण्ड एव त्रिदोषदूषितोजायते, ब्रह्माण्डप्रकृतिर्न दुष्यति। समष्टिसम्बन्धेन पूर्वं ब्रह्माण्ड-प्रकृतिरेव त्रिदोषदुष्टा भवति, तदनन्तरं पिण्डो दुष्यति ॥ ५० ॥

प्रसंगात् शंका समाधीयते—

**कामः काम्यभोगेनानलवदाहुत्या ॥ ५१ ॥**

काम्यस्य सुखस्य भोगेन काम आहुत्याऽनल इव प्रवर्धत इति-शेषः। जिज्ञासुरत्र शङ्कते—ननु भोगनिष्पत्तौ जातायां किं भवति वासनाक्षयः ? किं कृतस्य कर्मणो भोगेन भवितुमर्हति मोक्षः ? समाधत्ते—भवदीयशङ्कासमाहितय एव सूत्रस्यास्याविर्भावः। श्रूयतम्—यावत् तत्त्वज्ञानेन न जायते वासनानाशः, तावत् सकामभोगेन कदापि कर्मविमुक्तिर्न भवति। यतो ह्येकस्य भोगस्य काले, अनन्त-भोगवासनाः समुत्पद्यन्ते। आहुत्या यथाऽग्निर्न शाम्यति, प्रत्युतजाज्वल्यते एव, तथैव कामनापूर्वकं भोगनिष्पत्तौ जातायां कदापि कर्म-जालतोजीवो ह्यात्मानं विमोक्तुं नार्हति। यद्यपि येन संस्कारबीजेन फलस्वरूपभोगस्योत्पत्तिरभूत्, संस्कारोऽसौ विलीयते, नात्र संदेहः, परन्तु स हि कामनाया अन्तःकरणे सत्त्वात् नवीनान् अगणित-संस्कारान् आविर्भावयति। बीजेन वृक्षस्य वृक्षेण बीजस्य समुत्पत्ति-रिव कर्मजालशृङ्खला प्रचलन्ती तिष्ठति। स्मर्यते चात्र—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ इति ॥ ५१ ॥

उपादेयमभिदधाति—

**तदुपनिषन्मतं वैराग्यम् ॥ ५२ ॥**

तस्मात् कारणात् वैराग्यमेव उपनिषत्सम्मतम्। उपनिषदः

समारम्य, वेदे तत्सम्मतशास्त्रेषु च वैराग्यमहत्त्वं समुद्घोषितम्। यथा च स्मृतौ—

इह दृश्यानि सर्वाणि नश्वराणि भवन्त्यहो ।
अविवेकमयोऽयं यत्संसारोऽतोभयाप्लुतः ॥
अविवेकसमुद्भूत-विषयासक्तितः क्वचित् ।
लब्धुं न कोऽपि शक्नोति निर्भयत्वमितः स्वतः ॥
पुत्रमित्रकलत्रादिस्वजनः स्वस्वकर्मणा ।
भोगार्थं युगपन्नूनमेकत्रोत्पत्तिमाश्रिताः ॥
आत्मीयत्वेन राजन्ते भुवं स्वस्वार्थसिद्धये ।
संस्थाप्यामृतसम्बन्धमेषु यान्ति महद्भयम् ॥
एतदात्मीयजं दुःखं भयं चाज्ञानमूलकम् ।
न जायते सुखं सत्यं नश्वरात्काङ्क्षनादितः ॥
ईदृशे नश्वरेऽर्थें हि सक्तो देही निरन्तरम् ।
विविधं दुःखमाप्नोति भयं चैवाधिगच्छति ॥
जरामृत्युभयं देहे पुत्रादौ कालजादिकम् ।
राजतस्करजं द्रव्ये जराजं यौवने भयम् ॥
जरारोगभयं रूपे बले शत्रुभवं भयम् ।
भोगे रोगभयं नूनं कुले पतनजं भयम् ॥
दीनताजं भयं माने गुणे खलभयं खलु ।
भयं निन्दकजं शक्तौ विद्यायां वादिजं भयम् ॥
स्वर्गेऽपि प्रार्थ्यमानेऽस्मिन्नीषर्यापतनजं भयम् ।
वैराग्यपदमेवाऽत्र तिष्ठत्यभयमुत्तमम् ॥ इति ॥ ५२ ॥

पुनरपि परिपोषयति—

## अतोनिवृत्तेरुत्तरत्वम् ॥ ५३ ॥

अतोऽस्मात् कारणात् निवृत्तेर्निवृत्तिमार्गस्य उत्तरत्वं प्राधान्यमित्यर्थः। प्रवृत्तिर्निवृत्तिश्चेति जीवस्य मार्गद्वयं विज्ञेयम्। अन्तःकरणस्य विषयोन्मुखिनी गतिः प्रवृत्तिः, आत्मोन्मुखिनी च निवृत्तिरित्युच्यते। प्रवृत्तिश्च रागमूलिका निवृत्तिश्च वैराग्यमूलिका। अतःपूर्वमेव निर्णीतमिदं यत् वासनासहितविषयभोगेन अग्नौ घृताहुतिरिव विषयभोगतृष्णा विवर्धते। अत इदमभ्युपगन्तव्यमेव विषयोपभोगाच्चित्तं निवारयन्ती निवृत्तिदशैव जीवानां परमहितकारिणीति। स्मर्यते चात्र—

"प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला" ॥ ५३ ॥

प्रसंगतो मुक्तेः पन्थानं निर्दिशति—

## यज्ञशेषाशिनो मुक्तिः ॥ ५४ ॥

यज्ञशेषस्यान्नस्य भोक्तुर्मुक्तिर्भवति। प्रवृत्तेर्निवृत्तिर्गरीयसी विषयभोगतो विषयवैराग्यं श्रेष्ठम्। मनसोविषयोन्मुखगतिं निरुध्यात्मोन्मुखगतिरेव श्लाघ्या मतेत्यत्र न किमपि वैमत्यम्। तादृशपुरुषस्याभ्युदयो निर्विवादः। परन्तु सूत्रकृत् पूज्यपादो महर्षिरभिधत्ते यद्रागविरागातीतो योहि कर्मणस्तृतीयोऽधिकारः स एव निःश्रेयसस्य साक्षात् कारणभूतः। उक्तमपि भगवद्गीतायाम्—

"यज्ञशिष्टाशिनः सन्तो मुच्यते सर्वकिल्बिषैः।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥

यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर ॥
यज्ञशिष्टामृतभुजो यान्ति ब्रह्मसनातनम्। इति।

अतो भाग्यवान् कर्मकर्ता यज्ञार्थं कर्म विदधत् यज्ञशेषं च भुञ्जानस्तृप्तिमासाद्याग्रेसरन् अन्ते कैवल्यमधिगच्छति । अतो हि कर्मब्रह्मणो महत्त्वं स्मृतिशास्त्रे बहुशो गीतं विद्यते—तथाहि—

अकुण्ठं सर्वकार्येषु धर्मकार्यार्थमुद्यतम् ।
वैकुण्ठस्य हि यद्रूपं तस्मै धर्मात्मने नमः ॥ इति ॥

सुतरां प्रवृत्तिमूलकात्कर्मणो निवृत्तिमूलकस्य कर्मणो गरीयस्त्वेऽपि विरहितवासनो यज्ञबुद्ध्या निजकर्त्तव्यमवधार्य ज्ञानी कर्म समाचरेत् । तदानीं कर्मबन्धनाद् विमुक्तः कर्मजनितभोगाधिकारी भवन्नपि ब्रह्मानन्दं प्राप्नोति । धर्मो यज्ञः पुण्यं कर्म चेति,त्रयोऽपि पर्यायवाचकाः शब्दाः । परन्तु सूत्रेऽत्र प्रतिपादितस्य यज्ञशब्दस्यैतत् तात्पर्यं यस्य सद्यः फलं लभ्यते । यतो मुक्तिप्रसंगे जन्मान्तरस्यावस्थान्तरस्य वाऽवसर एव नायाति । उदाहरणरूपेणावधेयं यद् यदि केनचिन्महापुरुषेणानायासतः कोऽपि पदार्थः प्राप्यते तदा तं पदार्थं भगवदुपासनायां भगवत्कार्ये वा समर्प्य स्वयमपि भुङ्क्ते तर्हि भोगोऽसौ न तस्य बन्धनाय कल्पते मुक्तेश्चापि हेतुतां व्रजति, तथैव यदि कोऽपि ज्ञानी महात्मा कमपि कर्मयज्ञमुपासनायज्ञं वा विरहितवासनः समनुतिष्ठेत्, तद् यज्ञसम्बन्धीयं भोगं स्वयमपि भुञ्जानो मुक्तिमुपैति ॥ ५४ ॥

लक्ष्यं स्थिरीकुरुते—

**तस्मात्तन्माहात्म्यम् ॥ ५५ ॥**

तस्मादेव कारणात् तस्य यज्ञस्य माहात्म्यं महत्त्वम् । कर्मप्रसंगात् लक्ष्यं स्थिरीकृत्य मुक्तिमार्गं सरलं विधातुमुच्यते । यज्ञमहत्त्वं सर्वाभ्यर्हितमिति प्रतिपादितमेव । कर्म न कुर्वन् मनुष्यो न स्थातुं मर्हति । शरीरे विद्यमाने भोगनिवृत्तिरसम्भवा । अतो मानवजीवने यज्ञम् अनुष्ठाय यज्ञशेषद्वारा भोगसमापत्तिरेव सर्वतः श्रेयसी ।

आर्यानार्ययोरियानेव भेदो यद् यो हि अध्यात्मलक्ष्यमंगीकुर्वन् यज्ञशेषं भुङ्क्ते स एवार्यः। वर्णाश्रमधर्माण आर्याः स्वीयां प्रथमामवस्थामारभ्यान्तिमामवस्थां यावत् स्वं स्वमधिकारमनुसृत्यैतस्यैव त्रिलोकपवित्रकारिणो यज्ञस्वरूपधर्मस्यानुष्ठानाभ्यासं विदधते। धर्मप्राणाया आर्यजाते र्यज्ञशेषग्रहणस्य नितान्तं प्राधान्यमभ्युपगन्तव्यम् ॥५५॥

प्रसंगाद् यज्ञमहायज्ञफलमभिधीयते—

## प्रकृतिप्रसादो यज्ञमहायज्ञः ॥ ५६ ॥

प्रकृतेः प्रसादो येन स प्रकृतिप्रसादस्तादृशो यज्ञो महायज्ञश्च। यज्ञेन महायज्ञेन च जीवः स्वस्वरूपप्राप्तिकरमुक्तिपदमधिकरोति। प्रकृतिमातुः स्वभावोऽयं यदसौ जीवान् अविद्याराज्यात् पृथक्कुर्वती विद्याराज्यं च प्रापयन्ती स्वस्वरूपमधिगमयति। अतो यज्ञेन महायज्ञेन च प्रकृतिः प्रसीदति। यथा किल राजाज्ञां पालयित्रीषु प्रजासु राजा प्रसन्नो जायते, तथैव प्राकृतिकं नियममनुसृत्य जीवत्सु जीवेषु प्रकृतिमाता सन्तुष्यति। प्राकृतिकनियमानुवर्त्तनेन प्रकृत्याः स्वाभाविकी गतिरक्षुण्णा तिष्ठति। इदमेव प्रकृतिप्रसादस्य कारणमवधेयम ॥ ५६ ॥

अन्यच्च—

## स प्रकृतिजयः ॥ ५७ ॥

स एव प्रकृत्यनुकूलाचारो यज्ञो महायज्ञो वा प्रकृतिजयः। प्रकृतौ जयः, प्रकृतौ जयो येन वा तादृशः। स मोक्षः प्रकृतिजयः, इदमन्यमिधातुं शक्यते। मुक्तिपदं प्रकृत्यतीतमिति सुविचारनिर्णीतः सिद्धान्तः। अतो मोक्षः प्रकृतिविजयस्य पदम्। यत्र प्रकृतिविलयस्तदेव ब्रह्मणः स्वस्वरूपम्। यदा तत्स्वरूपप्राप्तिरेव मुक्तिश्चेत्तदा स्वीकर्त्तव्यमेव यत् मुक्तिपदं प्रकृत्यतीतम्। मोक्षाधिगमो हि प्रकृतिमातुः प्रसादो जयो वाऽभिधातुं शक्यते ॥ ५७ ॥

विज्ञानमिदं स्पष्टयति

परिणामावसानं तदन्तिमफलम् ॥ ५८ ॥

परिणामस्य प्रकृत्याः परिणामस्यावसानः समाप्तिर्यत्र तदेव तदन्तिमं तस्य यज्ञस्य महायज्ञस्य चरमं फलमवधेयम। ब्रह्मणः स्वतन्त्रा ब्रह्मप्रकृतिः स्वीयं गुणत्रयमनुसृत्य यदा कार्यमनुतिष्ठति तदैव तद्गुणानुसारं सृष्टि-स्थितिप्रलयाः सम्भवन्ति। त्रिगुणानुसार-परिणामस्तत्स्वभावः। स हि न त्यक्तुं शक्यते। गुणो गुणितो न पृथग्भवति। अग्नेर्दाहिका शक्तिरिव त्रिगुणपरिणामो न प्रकृतेः पृथग्-भवितुमर्हति। प्रकृतिपरिणामावसान एव मुक्तिपदमुदेति। ब्रह्मणि विलयं गतायाः प्रकृतेः परिणामस्यावसानो जायते। सुतरां प्रकृति-परिणामावसानमेव यज्ञमहायज्ञफलम् ॥ ५८ ॥

तदनन्तरं किमित्युच्यते—

तदा स्वरूपविकाशः ॥ ५९ ॥

तदा तस्मिन् समये प्रकृतिपरिणामविलये जाते स्वरूपस्य विकाशो जायते। धर्मसाधनेन संस्कारशुद्धिस्तया च क्रियाशुद्धिस्तदन्ते च प्रकृतिविलयः स्वरूपोदयश्च। द्रष्टृदृश्यसम्बन्धे नष्टे ब्रह्मप्रकृतौ ब्रह्मणि विलीनायां सत्यां नित्यमुक्तमद्वितीयं स्वरूपमेव शिष्यते। एषैव कैवल्यावस्था ॥ ५९ ॥

तत्स्वरूपं कीदृशमित्यभिधीयते—

स सच्चिदानन्दमयः ॥ ६० ॥

स आत्मा सच्चिदानन्दस्वरूपः। तत्स्वरूपं सत् नित्यस्थिति-शीलम्। चित् चेतनमयं ज्ञानस्वरूपं वा आनन्दः सर्वानन्दातिशायी-त्रितापातीतः। सच्चिदानन्दरूपस्य त्रिमावस्य यत्रैकाधारे स्थितिः

सैव स्वस्वरूपावस्था। सच्चिदानन्दानां पृथक्पृथगवस्थानमेव द्वैतम्। यत्र त्रयाणामप्येकत्वसम्बन्धस्तदेवाद्वैतं स्वस्वरूपं ब्रह्मपदं वा ॥६०॥

प्रसंगतः शंकां समाधत्ते—

**तस्मिन् प्रकृतिलयः ॥ ६१ ॥**

तस्मिन् अद्वैतभावे प्रकृत्या लयो जायते। कस्यामवस्थायां प्रकृतिलय इतिशंकायाः समाहितये समाधिगम्यं विषयं सुस्पष्टयितुं च सूत्रस्यैतस्याविर्भावः, सतश्चित आनन्दस्य पृथगनुभूतिरेव द्वैतदशा। सतोभानेन प्रकृतिश्चिदो भानेन पुरुषस्तयोः परस्परसम्बन्धेनानन्दानुभव एव द्वैतावस्थाप्रपञ्चानुभूतिहेतुः। परन्तु यत्राद्वैतभावे सच्चिदानन्दभावैकत्वसम्बन्धोदयस्तत्र प्रकृतिरव्यक्ता विज्ञीयते ॥ ६१ ॥

एतदभावे किमित्युच्यते—

**परिणतिरन्यथा ॥ ६२ ॥**

अन्यथा एतदभावे प्रकृत्याः परिणतिरवश्यम्भाविनो, यदि ब्रह्मणि प्रकृतिर्विलीना न स्यात्, यदि स्वस्वरूपे प्रकृतिरव्यक्ता न भवेद् व्यक्तैव तिष्ठेत्, यदि वा द्रष्टृदृश्यभावो जागरूको भवेत्, तदानीं स्वीयं स्वभावमनुसृत्य प्रकृतिः परिणामिनी भवन्ती तिष्ठति। सद्भावावलम्बनेन प्रकृतिः, चिद्भावावलम्बनेन पुरुषः, आनन्दभावावलम्बनेन च तयोः शृङ्गारो जागर्त्यत्र। तदानीं सृष्टिप्रवाहः प्रचलति, प्रकृत्या स्त्रीधारा, पुरुषेण च पुंधारा, आनन्देन च तयोः पारस्परिकः शृङ्गारो व्यष्टिपिण्डे समष्टिब्रह्माण्डे जायमानोऽनन्तकोटिपिण्डब्रह्माण्डात्मकं सृष्टिप्रवाहं प्रवाहयन्नेवास्ते ॥ ६२ ॥

प्रसंगात्कर्मविभागः कथ्यते—

**कर्मविभागानन्त्यमनन्तत्वाच्छक्तेः ॥ ६३ ॥**

शक्तेरनन्तत्वादानन्त्यात्कर्मविभागस्याप्यनन्तत्वं बोध्यम्। कर्मणो विराट्स्वरूपत्वालौकिकत्वख्यापनार्थमिदमुच्यते। तथाहि अनन्ता ब्रह्मशक्तयः। अनन्तस्य शक्तिरप्यनन्तैव। शक्तेरानन्त्यात् शक्तिसमुद्भूतकर्मविभागस्याप्यानन्त्यं सिद्धमेव। प्रकृतिस्पन्दनतः कर्मसमुत्पत्तिरिति प्रागेव निर्णीतम्। अतः कार्यकारणसम्बन्धेन कर्मविभागस्यानन्त्यमवधार्यम् ॥ ६३ ॥

प्रसंगादीश्वरस्येश्वरत्वं प्रतिपाद्यते –

तस्मात् सर्वज्ञो नेश्वरेतरः ॥ ६४ ॥

तस्मात् कारणात् ईश्वरेतर ईश्वराद्व्यतिरिक्तः कोप्यन्यः सर्वज्ञो नास्ति। कर्मविभागानन्त्ये कर्मवैचित्र्यमप्यनन्तस्वरूपमयमित्यत्र कः सन्देहः ? अत एव वेदशास्त्रेषु कर्मणो दुर्ज्ञेयत्वमुक्तम्। ज्ञानिना सताऽपि मानवेन कर्मणो भूतभविष्यद्वर्त्तमानस्वरूपं नैव ज्ञातुं शक्यते। शास्त्रवेत्ता योगशक्तियुक्तोऽपि मानवः कदाचिद् भूतकालिकं वर्त्तमानकालिकं च ज्ञानं कर्त्तुं पारयेत्, परन्तु भविष्यतः कालस्य सम्बन्धे पूर्णज्ञानाधिगमो न सम्भवः। अन्यच्च विचारणीयमेतद् यत् कर्मबीजसंस्कारस्य वासस्थानं चित्ताकाश—चिदाकाशमहाकाशनामकमाकाशत्रयमेव। यदि जीवेन स्वपिण्डज्ञानमेव न कर्त्तुं शक्यते, तदा पिण्डव्यापकस्य चित्ताकाशस्य ब्रह्माण्डव्यापकस्य चिदाकाशस्य, अनन्तकोटिब्रह्माण्डव्यापकस्य महाकाशस्य सम्बन्धेऽल्पज्ञेन तेन पूर्णं ज्ञानं नैव कर्त्तुं पार्यते। अतोह्येकः प्रकृतिद्रष्टा ईश्वर एव सर्वज्ञो भवितुमर्हति नान्यः ॥ ६४ ॥

विज्ञानमेतत्पुनः परिपोषयति—

देशकालपरिच्छिन्नत्वमितरेषाम् ॥ ६५ ॥

इतरेषाम्, ईश्वरव्यतिरिक्तानां देशकालाभ्यां परिच्छिन्नत्वं विद्यते। पूर्वमेव सिद्धान्तितमिदं यत् कालो हि परमात्मनो विभूतिस्वरूपः, देशश्च प्रकृतेरिति। अतो ब्रह्मणस्तत्प्रकृतेश्च व्यतिरिक्तः सर्वोऽपि पदार्थो देशकालपरिच्छिन्नः। सादिसान्तत्वात् पिण्डब्रह्माण्डे कालपरिछिन्ने। यदि पिण्डसमूहो मरुस्थले वालुकाकणवत् ब्रह्माण्डाकाशे तिष्ठति, ब्रह्माण्डसमूहश्च तद्वदेवानन्तदेशे स्थितो वर्तते तदानीं सुस्पष्टमेतद् यत् सर्गस्य सर्वेऽपि ईश्वरव्यक्तिरिक्ताः पदार्थाः देशकालपरिछिन्ना इति ॥६५॥

अन्यश्च—

## नातः केऽपि देवर्षयः सर्वज्ञाः ॥ ६६ ॥

अतोऽस्मात् कारणात् देवा ऋषयश्च न केऽपि सर्वज्ञा भवितुमर्हन्ति। कर्मनियन्तारो देवाः, ज्ञाननियन्तार ऋषयो भवन्ति। ते स्वस्वशक्तिपूर्णताधिगमेऽपि एकैकब्रह्माण्डविशेषसम्बन्धोपेताः सन्ति। समुन्नतपदाधिकारिणोऽपि देवाः स्वं स्वमधिकारमनुसृत्य विशिष्टशक्तिशालिनः सन्तोऽपि देशकालपरिच्छिन्ना एव। एवं हि नित्यर्षयोऽपि ज्ञानराज्याधिदेवाः सन्तः कल्पविशेषस्य ब्रह्माण्डविशेषस्योपयोगिना ज्ञानेन सम्बन्धोपेताः। अत इदं स्वीकार्यमेव यत् देवा ऋषयोऽपि वा सर्वज्ञा न सन्ति ॥ ६६ ॥

प्रसंगादन्यदुच्यते—

## शक्या जीवन्मुक्तिरशक्योऽखिलवेदिता ॥ ६७ ॥

जीवन्मुक्तिर्भवितुमर्हति, किन्तु सर्वज्ञता नेत्यर्थः। पूर्वोक्तविज्ञानमनुसृत्य पूर्णज्ञानी जीवन्मुक्तपदवीं प्राप्तोऽपि सर्वज्ञो न भवितुं शक्नोति। तत्त्वज्ञानसाहाय्येन ज्ञानी महापुरुषः प्रत्येकस्य पदार्थस्याध्यात्माधिदैवाऽधिभूतविज्ञानं प्राप्नुयात्, मलविक्षेपावरणशुद्ध्या

आत्मानात्मविवेके सफलप्रयत्नो भवेत्, योगदृष्टिमासाद्य दूरदर्शन-श्रवणादौ सामर्थ्यमधिगच्छेत्, कर्मणो गतिं जानीयात्, अनारत-मनात्मपरित्यागपूर्वकमात्मरतश्च सम्पद्येत, परन्तु परमात्मनः सर्वज्ञतायाः सम्पूर्णविकासस्तत्र नैव कदापि भवितुमर्हति। ब्रह्मसायुज्य-मधिगम्य जीवन्मुक्तो ब्रह्मस्वरूपो भवितुं शक्नोति किन्तु देशकाल-परिच्छिन्नत्वादसौ सर्वज्ञानं नैवाधिकर्तुं शक्तः स्यादिति ॥ ६७ ॥

इदानीं कर्मणो महिमानमुदीरयति—

**कर्मगतिर्गहना सूक्ष्मा च ॥ ६८ ॥**

पूर्वोक्तकारणकलापैः कर्मणो गतिरतिगहनाऽतिसूक्ष्मा चेति सर्वतन्त्रसिद्धः सिद्धान्तः। कर्मणो त्रिभागानन्त्यात् तद्गतिरप्यति-वैचित्र्यपरिपूर्णेत्यत्र कः सन्देहः। अतस्तद्गहनत्वमपि स्वतः सिध्यति। आस्थूलातिस्थूलराज्यात् सूक्ष्मातिसूक्ष्मराज्यपर्यन्तं यदि कर्मगतिपरिणतिरेव निभाल्यते तदानीं कर्मगतिरतिसूक्ष्मेत्यत्र नास्ति सन्देहावसरः। यदि च कर्म स्वकीययाऽलौकिक्याऽतीन्द्रियशक्त्या-ऽन्नमय-प्राणमय-मनोमय-विज्ञानमयाऽऽनन्दमयेषु कोशेषु समान-रूपेणाधिपत्यं संरक्षति तर्हीदमभ्युपगन्तव्यमेव यत् तद्गतिः सूक्ष्म-मतिसूक्ष्मतरमतिसूक्ष्मतमं च तत्त्वं तदवस्थां च परिव्याप्नोति ॥६८॥

महत्त्वान्तरं प्रतिपाद्यते—

**क्वापि जीवन्मुक्तस्यापि तज्ज्ञभावदौर्बल्यदर्शनात् ॥ ६९ ॥**

कुत्रचिज्जीवन्मुक्तस्यापि तज्ज्ञभावस्य साधारणकर्मगतिज्ञा-नस्य दौर्बल्यं दृश्यते। कर्मगतेर्गहनत्वसूक्ष्मत्वहेतुना मुक्तात्मा परम-ज्ञानी जीवन्मुक्तपदं प्राप्तोऽपि महापुरुषः कर्मणः साधारणगत्या कदाचिदपरिचितो दृश्यते। परमज्ञानिनो योगिराजस्य वशिष्ठस्य रामगमनरूपकर्मज्ञानाभावोऽत्र विज्ञाने जाज्वल्यमानं प्रमाणम् ॥६९॥

मोक्षप्रसङ्गात् पुनरुच्यते—

**विश्वमेव ब्रह्म ॥ ७० ॥**

स्पष्टोऽर्थः। कार्यकारणसम्बन्धेन कार्यब्रह्म कारणब्रह्म चैकमेव। अहंममेतिवत् ब्रह्मणि तत्प्रकृतौ च भेदाभावः। गायके तद्गानशक्तौ च न भेदः। गायनमकुर्वति गायके तदीया शक्तिरव्यक्ता तत्रैव तिष्ठति। संगीतशास्त्रमनुसृत्य आलापादिगायनपरिपाट्यां प्राकट्यं प्राप्तायां गानशक्तिर्व्यज्यते। तदानीं गायनक्रियायाः पृथक्प्रतीयमानत्वेऽपि आलापादिगायनक्रियायां गायके चाभेद एव। ब्रह्मतः परिव्यक्ता ब्रह्मप्रकृतिरेव स्वभावतः परिणामिनी भूत्वा दृश्यप्रपञ्चस्वरूपं जगत्प्रादुर्भावयति। प्राकृतिकं त्रिगुणमनुसृत्य जगतः उत्पत्तिस्थितिप्रलयाः स्वतः सम्पद्यन्ते। अतोऽविद्यया जगति ब्रह्मणि च परस्परं भेदप्रतीतावपि विद्यया उभयोर्भेदाभाव एवेति कर्ममीमांसादर्शनसिद्धान्तः॥ ७०॥

अत्र प्रसंगे दृश्यरहस्यं विवृणुते—

**पुरुषोऽव्यक्तो व्यक्तः ॥ ७१ ॥**

अव्यक्तोऽपि पुरुषो व्यक्तो भवतीत्यर्थः। सांख्यस्य पुरुषो योगस्य पुरुषविशेषः, वेदान्तदर्शनस्य ब्रह्म चेति परस्परं न भिन्नतामर्हति। एतत्त्रयमप्यवस्थाविशेषस्य नामान्तरम्। प्रत्येकपिण्डे स्वस्वरूपानुभव एव सांख्यप्रतिपादितः। ब्रह्माण्डसम्बन्धेन परमेश्वरानुभव एव योगदर्शनस्य पुरुषविशेषः। दृश्यप्रपञ्चातीतस्वस्वरूपानुभवः किल वेदान्तस्य ब्रह्मपदम्। अतः पुरुषः पुरुषविशेषो वा स्वस्मिन्नेव स्वीयां प्रकृतिं विलीनां विधायाव्यक्तभावं दधाति तां च स्वस्मादेव प्रादुर्भाव्य व्यक्तभावापन्नतां प्रपद्यते। एतदेव पुरुषस्य व्यक्ताव्यक्तस्वरूपरहस्यम्। वस्तुतो महादेव्याऽऽलिङ्गितो महादेव एव पुरुषविशेषः। यदा देवाधिदेवे महादेवे महादेवी प्रकृतिर्विलीयते,

सैवाव्यक्तदशा, यदा च महादेवी प्राकट्यमवाप्ता स्वकार्ये प्रवर्तते सैव व्यक्तदशा कथ्यते ।। ७१ ।।

तेन किं स्यादित्युच्यते—

**कालात्मकमतोऽखिलम् ।। ७२ ।।**

अतोऽस्मात् कारणात् अखिलं समस्तमेव कालात्मकं कालस्वरूपमित्यर्थः। व्यक्तावस्था कालाधीना। एतस्मात् कारणात् अव्यक्तदशातो व्यक्तदशायाः प्रादुर्भावे सत्येव व्यक्ताव्यक्तसन्धिकाले कालस्वरूपाविर्भावः । अत एतत् स्वीकर्त्तव्यमेव यत् व्यक्तदशा कालाधीना भवति। अतो वेदेषु शास्त्रेषु च पुरुषविभूतिरूपेण कालो वर्णितः, कालस्य भगवत्स्वरूपताऽपि प्रतिपादिता तस्माद्दार्शनिकदृष्ट्याऽनुमेयमिदं यत् सर्वमपि दृश्यप्रपञ्चं व्यक्तावस्थापरिणामभूतं कालात्मकमेव ।। ७२ ।।

मुक्तेः प्रसंगतो विज्ञानमिदं परिपुष्णाति—

**तद्दर्शनान्मुक्तिः शुद्धे भावचतुष्टये ।। ७३ ।।**

शुद्धे भावचतुष्टये चतुर्विधभावे तस्य दर्शनान्मुक्तिरधिगम्यते। तत्त्वज्ञानी महापुरुषः समुन्नतां ज्ञानभूमिमधिरोहन् समाधिगम्यं सूक्ष्मातिसूक्ष्मं पुरुषव्यक्ताव्यक्त-कालाख्यभावचतुष्टयमनुभवन् कृतकृत्यो जायते। प्रकृतेः पूर्णालयावस्था, यत्र प्रकृतेरनुभवो न भवति, चिन्मयभावस्यैव प्राधान्यं तिष्ठति, सैव पुरुषभावस्य बोधिकाऽवस्था। लयावस्थायां विद्यमानायां प्रकृतेरनुभूतिरेव सद्भावप्रधानावस्था-अव्यक्तभावबोधिका। पुरुषे प्राकट्यमभ्युपेता प्रकृतिसम्बलिता दशा व्यक्तावस्था बोधिका, तयैव सह कालस्यानुभवः, सतश्चितः कालस्य चैकाधारेऽनुभव एव भगवतो महाकालस्य ज्ञापकः। समाधिबुद्धिं द्वारीकृत्यैतदवस्थादर्शनादेव मुक्तिपदमनुभूयते ।। ७३ ।।

कथमेतज्जायत इत्युच्यते—

**तत् कर्ममर्मज्ञानात् ॥ ७४ ॥**

कर्ममर्मज्ञानात् कर्मरहस्यबोधात् एवं जायते। पूर्वकर्मरहस्य-ज्ञानलाभ आवश्यकः। ततश्च सूक्ष्मा समाधिबुद्धिरुदेति। यथा पूर्वोक्तमनुभूयते। संस्कारशुद्धेस्ततश्च क्रियाशुद्धेरहस्यमवधार्य मुमुक्षुः कर्मगतिज्ञाता जायते। एतत्साधनार्थमेव दर्शनस्यैतस्य प्रवृत्तिः ॥७४॥

दर्शनमाहात्म्य मुच्यते—

**तद् विष्णोः परमं पदम् ॥ ७५ ॥**

तदेव विष्णोः सत्त्वगुणाधिष्ठातुः परमं पदमिति कथ्यते। प्रागेतत्सविस्तरं निर्णीतं यत् ब्रह्माण्डेऽत्राकर्षणविकर्षणशक्तिसमन्वय एव सत्त्वगुणो विकसति। तथा च पिण्डे रागद्वेषसामञ्जस्ये सत्त्व-गुणविकासः। एतत्समन्वयावस्थैव धर्मः एतदवस्थायामेव स्थितेरधि-दैवस्य भगवतो विष्णोः तत्पीठमाविर्भवति यत्रासौ विराजते। अत एव कुत्रापि भगवान् विष्णुरेव धर्मस्वरूप इति निर्णीतम्। कुत्रचिच्च तत्पीठेश्वरी भगवती जगद्धात्रीति समुपवर्णितम्। तथाहि गीतो-पनिषदि—

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥

सुतरां तत्त्वज्ञानी महापुरुषः स्वीयनिर्विकल्पे समाधौ पूर्वकथित-रूपेण यदाऽनुभवति तदानीं तदीयमन्तःकरणं येन भावेन भावितं भवति तदेव विष्णोः परमं पदमुदीर्यते। धर्मस्य धारिकया शक्त्याऽभ्युदयमधिगच्छन् समुन्नततममधिकारं प्राप्नुवन् तत्त्वज्ञानी महात्मा धर्मस्यैकमात्रमाधारस्वरूपं विष्णुपदमिदं साक्षात्करोति। एतदेव साधकस्य परमपुरुषार्थं चरमं फलम् ॥ ७५ ॥

विज्ञानमेतत्पुनः परिपोषयति—

अव्यक्तं व्यक्तकारणम् ॥ ७६ ॥

अव्यक्तं किल व्यक्तस्य कारणमुदीर्यते। पुरुषे विद्यमानाऽव्यक्ता प्रकृतिरेव कारणस्वरूपा, व्यक्तदशा तु तत्कार्यरूपा। यद्यपि कारणब्रह्मैव कार्यब्रह्मरूपेण प्रतीयते, परन्तु वस्तुतो ब्रह्मप्रकृतिरेव प्रलयावस्थायां ब्रह्मणि विलीना तिष्ठति सैवाव्यक्ता व्यक्ततां प्राप्य दृश्यप्रपञ्चं प्रकटयति। पुरुषसम्बन्धेनैतत् वक्तुं शक्यते यत् कारणब्रह्मैव कार्यब्रह्म चापि प्रणिगद्यते। प्रकृतिसम्बन्धेन चैतद्व्याहर्तुं शक्यते यत् अव्यक्तमेव व्यक्ततामापद्यते ॥ ७६ ॥

अन्यच्चापि—

युक्तिर्विमुक्तिश्च कालस्तत्स्वरूपस्य ॥ ७७ ॥

महाकालस्य स्वरूपमवधारयितुं प्रकारान्तरेणाभिधीयते यत् तत्स्वरूपमेव सृष्टिसंयुक्तं प्रलयवियुक्तं च कालोऽभिधीयते। प्रलयावस्थायां सर्गारम्भे सर्गनाशतोऽपि प्रलयदशायां महादेव्यालिङ्गितं यन्महादेवस्वरूपमाविर्भवति, तदेव भगवतो महाकालस्य स्वरूपमवधार्यम्। अद्वैताद् द्वैते, द्वैताच्चाद्वैते भावे व्यक्तिमापन्ने किं वा ब्रह्मप्रकृतेरव्यक्तदशातो व्यक्तदशायां व्यक्तदशातश्चाव्यक्तावस्थायां पुरुषस्य यत् स्वरूपमनुभूयते तदेव कालस्वरूपम् ॥ ७७ ॥

प्रसंगात् सृष्टिरहस्यमुच्यते—

क्रमात् सृष्टिस्थित्यन्ता अनाद्यनन्तभावादीशस्य ॥ ७८ ॥

ईशस्य परमेश्वरस्य अनाद्यनन्तभावात् क्रमशः सृष्टिस्थित्यन्ता भवन्ति। ब्रह्मणि ब्रह्मशक्तिसम्बन्धाविर्भावादेव निर्गुणं ब्रह्म सगुण

ईश्वरः पुरुषविशेषो वा प्रोच्यते। ब्रह्मभाववदीश्वरभावोऽप्यनाद्यनन्तः। ब्रह्मण ईश्वरस्य चैकता हि दैवीमीमांसादर्शनसिद्धान्तः। केवलं प्रकृतिमहत्त्वद्योतनार्थेव उभयोः पार्थक्यानुभूतिः। वस्तुतो ब्रह्मप्रकृतौ ब्रह्मणि विलीनायां केवलं ब्रह्मपदमेवावशिष्यते पृथग्भूतायां तस्यां च ईश्वरपदमिति। यथा किलैकस्य मनुष्यस्य मृत्यावनेकेऽपरे मनुष्या जीवन्ति, तथैकस्मिन् ब्रह्माण्डे प्रलयं गतेऽन्यान्यानन्तकोटिब्रह्माण्डानि तिष्ठन्त्येव। मानवपिण्डजन्ममृत्युवद् ब्रह्माण्डानामपि सृष्टिविलयाः सम्पद्यन्ते। एतदेव दृश्यप्रपञ्चाविर्भावतिरोभावरहस्यम्। एतदेव प्रकृतेर्व्यक्ताव्यक्तदशायाः सृष्टिस्थितिपर्यायस्य च रहस्यमवधेयम्। अनादावनन्तेऽद्वैतेऽव्ययेऽविकारिणि नीरूपे निर्गुणेऽविभक्ते च ब्रह्मभावे यत्र सृष्टिः प्रादुर्भावमेति, प्रकृतिर्व्यक्ततामापद्यते, किं वा दृश्यद्रष्टृसम्बन्धो विराजते, तत्रैवेश्वरत्वमनुभूयते। कर्म तद्बीजसंस्कारमाश्रित्य यथापूर्वमस्वाभाविकसंस्कारं प्रकृतिसंजातस्वाभाविकसंस्कारं चानुसृत्य ब्रह्माण्डपिण्डात्मकाः सृष्टिस्थितिप्रलयाः पर्यायक्रमादुत्पद्यन्ते ॥ ७८ ॥

प्रलयरहस्यं विवृणुते—

## गुणसाम्यं लये ॥ ७९ ॥

प्रलयकाले गुणानां समता तिष्ठति। सृष्टिस्थितिलयानुभवमन्तरेण कैवल्यप्राप्तिरसम्भवा। यतः कैवल्यपदं सृष्टिलयातीतम्। सृष्टिरहस्यं पूर्वं प्रपञ्चितम्। गुणसाम्ये लयः समुदेति। यथा किल गायकद्वारा तालस्वरयुक्तसुन्दरगीते प्राकट्यमागते गायकमजानन्नपि दूरादेव तद्गानद्वारेण मानवो मुग्धो भावान्तरं प्राप्नोति, तथैव प्राकृतिकगुणव्यञ्जनदशायां रजःसत्त्वतमांसि त्रीन् गुणाननुसृत्य सृष्टिस्थितिप्रलया यथाक्रमं सम्पद्यन्ते, त्रिषु गुणेषु च जीवा बध्यन्ते। यथा किल स्वरज्ञानाभावेऽपि तद्गुणैर्जीवो मुह्यते। यथा च गानस्य

पूर्वावस्था गायकस्वरतोऽभिव्यज्यते, तदनन्तरं च स्वरविन्यासानुसारं कार्यमनुष्ठीयते, तथैव गुणानां साम्यावस्था वैषम्यावस्थाऽपि बोध्या, लयावस्था तद्विपरीता। त्रयोऽपि गुणाः स्वकारणे विलीनाः साम्यावस्थां प्राप्नुवन्ति, इयं दशैव प्रकृतिः, तदनन्तरावस्थैव विकृतिरवगन्तव्या। सेयं प्रकृतिस्था ब्रह्मप्रकृतिर्ब्रह्मणि सहैव विलयमवाप्नोति। अवस्थायामस्यामेव ब्रह्मस्वरूपमुदेति, तदेवाद्वैतपदं ब्रह्मणः पदम्। यावत् द्रष्टृदृश्यसम्बन्धविलासस्तावद् विकृतावस्था। गुणानां दर्शनसमये चैतदवस्थास्थितिरवश्यंभाविनी। गुणेषु स्वकारणे विलयं गतेषु द्रष्टृदृश्यसम्बन्धाभावान्न भवितुं शक्नोति प्रकृतिः स्वतन्त्रा। साऽपि पुरुषे विलीयते। तदानीं परमपुरुषो ब्रह्मेत्युच्यते। तस्मिन् काले सच्चिदानन्दभावानां नैव तिष्ठति स्वतन्त्रभानम्। गुणानां साम्ये नैतस्यामवस्थायामुदीयमानायां स्वस्वरूपोदयो जायते॥ ७९॥

सम्प्रति कालावस्थास्वरूपं निर्णयति—

**कालमहाकालव्यपदेशो व्यष्टिसमष्टिभ्याम्॥ ८०॥**

व्यष्टितः समष्टितश्च कालस्य महाकालस्य च व्यपदेशो विज्ञेयः। परमेश्वर इवानाद्यनन्तो महाकालः। पिण्डस्य ब्रह्माण्डस्य वा सम्बन्धेन तस्यैवानाद्यनन्तस्य यो हि विभागः स एव कालः। सुतरामनादिरनन्तश्च महाकालः, सादिः सान्तश्च कालः, महाकालीसमालिङ्गितो महादेव एवानाद्यनन्तरूपधारी महाकाल उच्यते। पलदण्डप्रहरदिनरात्रिपक्षमासवर्षायनयुगकल्पब्रह्मविष्णुरुद्रायुषां यो हि विभागः स हि कालनाम्नाऽभिधातुमुचितः॥ ८०॥

मुक्तिसम्बन्धात्पुनरुच्यते—

**ऐक्यमन्यथा॥ ८१॥**

अन्यथा पिण्डब्रह्माण्डसम्बन्धेन त्रिभागरूपोपाधेरभावादुभयोः

कालमहाकालयोरैक्यमेवास्ते । यथा किलाज्ञानोपाधिराहित्येन जीव-ब्रह्मणोरभेदः, यथा च द्रष्टृदृश्यभावेन कार्यब्रह्मकारणब्रह्मणोरैक्यम्, यथा वा ब्रह्मप्रकृतेर्वैभवविचारपरित्यागेन ब्रह्मेश्वरयोरेकता, तथैव विभागबुद्धेरभावात् कालमहाकालयोरैक्यमेवावसीयते ॥ ८१ ॥

एतत्सम्बन्धेन देशरहस्यं कथ्यते—

**देशस्य लोकवैचित्र्यात् ॥ ८२ ॥**

लोकवैचित्र्याद् देशस्य कल्पना । देशोऽप्यनाद्यनन्तः, सादिः सान्तश्च । महाकाशो यथाऽनाद्यनन्तः, तथा महाकालोऽपि । चिदाकाशश्चित्ताकाशश्च ब्रह्माण्डपिण्डसम्बन्धेन सादिसान्तौ । स्थूले जगत्यपि परिधिरूपोपाधिद्वारा विभागेन पृथिव्या अपि नानाभेदः कल्प्यते, राशिचक्रादीन्यपि विभिन्नरूपेण प्रख्यायन्ते, तथैव लोकवैचित्र्यादेव प्रेतमृत्युनरक-पितृदेवासुरलोकानामपि कल्पना ॥ ८२ ॥

उभाभ्यां प्रणवसम्बन्धो निर्णीयते—

**प्रणवस्तद्वाचकत्वादुभयादिः ॥ ८३ ॥**

प्रणवः खलु तयोर्देशकालयोर्वाचकत्वादुभययोरादिः । मुक्तिप्रसंगेन सृष्टेर्मौलिकरहस्योद्घाटनार्थं पूज्यपादो महर्षिः सूत्रकारः समाचष्टे यत् प्रणवेन ब्रह्मणो वाच्यवाचकसम्बन्धसत्त्वात् तत्सम्बन्धघनिष्ठत्वहेतुः प्रणवो हि देशकालयोरादिः । पूज्यचरणो महर्षिः पतञ्जलिरपि "तस्य वाचकः प्रणवः" इति व्याजहार । स्मृतिरपि—

कार्यं यत्र विभाव्यते किमपि तत् कार्येण सञ्थापकम् ।
स्पन्दश्चापि तथा जगत्सु विदितः शब्दान्वयी सर्वदा ॥
सृष्टिश्चापि तथाऽऽदिमाकृतिविशेषत्वादभूत् स्पन्दिनी ।
शब्दश्चोदभवत् तदा प्रणव इत्योङ्काररूपः शिवः ॥

अतोऽद्वैतस्वरूपावस्थातो द्वैतोत्पादककार्योत्पत्तिकाल एव प्रणव-सम्बन्धो निर्दिश्यते। अद्वैतादनन्तरमेव प्रकृतेर्व्यक्तावस्थया सहैव प्रणवः प्राकट्यमापद्यते, अतोऽसौ परमपुरुषवाचकः। देशकालयोः प्रकृतिपुरुषयोर्यथाक्रमविभूतिसद्भावात् प्रणवः परवर्त्ती तत्त्वभूतः। अतःकारणादीश्वरवाचकः प्रणवो देशकालयोरादिरिति स्वीकार्य-मेव ॥ ८३ ॥

तन्महिमानमुदीरयति—

**पूर्णशक्तिमत्त्वमस्याष्टप्रकृतिमयत्वात् ॥ ८४ ॥**

अयं प्रणवः पूर्णशक्तिशाली यतोऽयमष्टप्रकृतिमयः, यथापरम-पुरुषोऽष्टप्रकृतियुक्तस्तथैव प्रणवोऽपीत्यर्थः।

उक्तं च गीतोपनिषदि—

भूमिरापोऽनलोवायुः खं मनोबुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥

यथा भगवत्प्रकृतिरष्टधा विभक्ता, तथैव तद्वाचकः प्रणवोऽपि वाच्यवाचकयोरभेदसम्बन्धात्? निर्गुणसगुणयोर्भेदः। यथा सगुण-ब्रह्मणोऽष्टौ प्रकृतयो विज्ञानसिद्धाः। एवं हि अन्तर्दृष्टिपरायणैर्यो-गिभिः प्रणवोऽपि द्विधा विभक्तः। एको ध्वन्यात्मको यः किल समा-धिस्थेऽन्तःकरणे श्रूयते द्वितीयश्च मानवकण्ठोच्चारितः शब्दमयः। अनयोः प्रथमः प्रणवनाम्ना, द्वितीयश्चोंकारसंज्ञया समाख्यायते। ओंकारस्य षड्जऋषभ-गांधार-मध्यम-पञ्चम-धैवत-निषाद-नादा-श्चेति अष्टौ प्रकृतयः। यथा किल ब्रह्मणोऽष्टस्वपि प्रकृतिषु बुद्धितत्त्व-प्राधान्यम्, बुद्धितत्त्वानन्तरं च ब्रह्मानुभूयते, तथैवोंकारस्याप्यष्टसु प्रकृतिषु नादस्य प्रधानता, नादात्परं प्रणव ओंकारो वाऽनुभूयते। अन्यच्च ब्रह्मेश्वरयोरिव प्रणवोंकारयोरभेदः। संगीतशास्त्रानुमो-दितषड्जादिसप्तस्वराणां समष्टिरूपो नादः। एतत्समष्टिशब्दानन्तरं

यत् किल "तैलधारामिवाच्छिन्नं दीर्घघंटानिनादवत्" इतिप्रणवध्वनेः कण्ठद्वाराऽनुकरणं तदेवोंकारशब्दानुमेयम्। अन्तर्द्रष्टा योगिराजो ब्रह्मेश्वरभावयोः पार्थक्यं यथाऽनुभवति, तथैव प्रणवोंकारयोरपि। ओंकार एव स्वीयाभिरष्टाभिः प्रकृतिभिर्युक्तो निखिलामपि शब्दमयीं सृष्टिमाविर्भावयतीति संगीतशास्त्रविशारदा योगिनः स्वयमेवानुभवन्ति ॥ ८४ ॥

महत्त्वान्तरमाचष्टे—

**अनादित्वमनादित्वात्प्रवाहस्य ॥ ८५ ॥**

प्रवाहस्यानादित्वात् प्रणवस्याप्यनादित्वम्। यथैकपिण्डविनाशेऽसंख्यातानि पिण्डानि जीवन्ति, तथैवैक ब्रह्माण्डविनाशेऽनन्तकोटिब्रह्माण्डानि तिष्ठन्ति। मृत्युलोकेऽत्र मानवानां जन्ममृत्युसद्भावेऽपि नैव भवति पृथिवीयं मनुष्यशून्या, तथैव ब्रह्माण्डानां सृष्टिस्थितिविलयसत्त्वेऽपि प्रवाहरूपेणानन्तकोटिब्रह्माण्डानि नैव प्रणश्यन्ति। सुतरां प्रवाहरूपतः स्थूलायाः पाञ्चभौतिकसृष्टेरनाद्यनन्तत्वात्शब्दमयीसृष्टिरप्यनाद्यनन्ता विद्यते। यतः शब्दमय्याः सृष्टेरनन्तरमेव स्थूला सृष्टिर्जायते। एतद्विज्ञानमनुसृत्येदमभ्युपगन्तव्यमेव यत् शाब्दी सृष्टिरनादिरिति ॥ ८५ ॥

तृतीयं महत्त्वमुदीरयति—

**गरीयस्त्वं शब्दयोनित्वात् ॥ ८६ ॥**

शब्दयोनित्वात् प्रणवस्य गरीयस्त्वम्। पञ्चतत्त्वेषु प्रधानरूपमाकाशतत्त्वम्। अतः शब्दसृष्टिरेव प्रथममुत्पद्यते। तस्या एव शब्दसृष्टेरादिकारणत्वात् प्रणवस्य सर्वोपरि महत्त्वम्। प्रणवस्य शब्दयोनित्वं प्रागेव प्रपञ्चितम् ॥ ८६ ॥

चतुर्थं महत्त्वं व्याहरति—

## शास्त्रयोनित्वात् ॥ ८७ ॥

शास्त्रयोनित्वात् प्रणवस्य प्राधान्यमितिशेषः। तथाहि श्रुतौ—

"पञ्चनद्यः सरस्वतीमपि यन्ति सस्रोतसः।
सरस्वती तु पञ्चधासो देशेऽभवत् सरित् ॥

स्मृतावपि—

ब्रह्माण्डपिण्डनादाश्च बिन्दुरक्षरमेव च।
पञ्चैव पुस्तकान्याहु र्योगशास्त्रविशारदाः ॥

वेदाः स्मृतयः, पुराणानि, तन्त्रादीनि शास्त्राणि वा शब्दमाश्रित्यैव सूक्ष्मादेव जगतः स्थूले जगति प्रादुर्भावमायान्ति। यतो भावशब्दयोर्नित्यः कार्यकारणसम्बन्धः। अन्यानि चतुर्विधश्रेणिपुस्तकानि, दैवप्रेरणया यदा किलाक्षरमयपुस्तकरूपेण परिणमन्ति, तदानीम्-ऋष्यन्तःकरणेषु नादमयस्य वेदस्य शब्दस्वरूपेण प्रकाशो भवेत् किं वा भावसाहाय्येन अन्यानि शास्त्राणि प्राकट्यमाप्नुयुः, सर्वमेतत्-शब्दसृष्टेरेव विलासविजृम्भणम्। दैवीमीमांसादर्शने सविस्तरं प्रपञ्चितमेतत्। फलतो यदा वेदादिशास्त्राणामाविर्भावः शब्दसृष्टिसापेक्षः, शाब्दीसृष्टिरपि यदा प्रणवाधीना, तदैतदङ्गीकर्त्तव्यमेव यत् शास्त्रयोनित्वात् प्रणवस्य प्राधान्यमिति ॥ ८७ ॥

पञ्चममहत्त्वमुच्यते—

## सर्गयोनित्वात् ॥ ८८ ॥

सर्गस्य योनित्वात् प्रणवस्य महत्त्वं विद्यते। यत्र कार्यं तत्र कम्पनं, यत्र कम्पनं, तत्र शब्दोऽप्यवश्यम्भावीति प्रागेव निर्णीतम्। यतः कम्पनस्य घातप्रतिघातयो रूपान्तरस्वरूप एव शब्दः। अद्वैताद्

द्वैते प्राकट्यं गते साम्यावस्थातो वैषम्यावस्थां प्राप्तायां प्रकृतौ तत्सम-कालोद्भूतक्रियया प्रादुर्भूतः प्रणवो ब्रह्मवाचकः। ततश्च देशकालयोः समुत्पत्तिः। तया च देशकालपरिच्छिन्नता देशकालमयी सृष्टिरभवत्। सृष्टेरादिनिदानभूतप्रणवद्वारा सृष्टिसमुद्भव इति स्वीकार्यमेव। अतः सृष्टेरुत्पादकत्वात् प्रणवस्य सर्वातिशायि महत्त्वं विद्यते ॥८८॥

षष्ठं महिमानमुदीरयति—

**मन्त्रयोनित्वात् ॥ ८९ ॥**

मन्त्राणां योनित्वादुत्पत्तिस्थानत्वादपि प्रणवस्य महिमा। यो हि मन आत्माभिमुखं करोत्यसौ मन्त्रः। अन्ताराज्यसम्बन्धयुक्त-शब्द एव मन्त्र इतिमहर्षिमतान्तरम्। इष्टदेववाचको मन्त्रः। सुतरां यस्य वाचनिकोपांशुमानसिकजपद्वारा स्वेष्टदेवसान्निध्यं प्राप्यते स शब्द एव मन्त्रः। सर्वश्रेणिमन्त्राणामुत्पत्तिस्थानं प्रणव इतिसर्ववादि-सम्मतो राद्धान्तः। अतो मन्त्रशास्त्रे प्रणवो मन्त्रसेतुरुक्तः। मन्त्राश्च बहुविधा व्याख्याताः। शाखापल्लवयुक्तो मन्त्रः, शाखासंयुक्तो बीज-रूपश्चेत्यादि। कारणरूपेण शाखापल्लवादीनां तत्र निहितत्वाद् बीजस्य प्राधान्यम्। अत एव वेदादिशास्त्रेषु बीजमन्त्राणां गरीयस्त्व-मुक्तम्। बीजमन्त्रेष्वपि अष्टबीजस्य गौरवम्, तच्च प्रणवव्यक्तम्। सुतरां सर्वबीजमन्त्राणामाधारभूतः सेतुस्वरूपश्च प्रणव एव। यथा किल सेतुमन्तरेण मार्गो विच्छिन्नोऽसम्पूर्णो रुद्धश्च जायते, तथैव प्रणवेन विना मन्त्रगतिरबाधा न जायते। एभिः कारणकलापैरिद-मभ्युपगन्तव्यमेव यत् सर्वमन्त्रयोनित्वात् प्रणवमाहात्म्यं सर्वसम्म-तम् ॥ ८९ ॥

सप्तममहत्त्वमुच्यते—

**आद्यवाचकत्वात् ॥ ९० ॥**

आद्यवाचकत्वादपि प्रणवमाहात्म्यम्, नामरूपात्मके प्रपञ्चेऽत्र

प्रणवस्यादिशब्दत्वादादिवाचकत्वमित्यत्र न सन्देहलेशोऽपि, नामरूपयोरन्योन्याश्रयत्वम् । द्रष्टृदृश्यसम्बन्धस्थापनेन सर्गोत्पत्तिः। यत्र दृश्यं तत्र नामापि। अतो दृश्येन सहैव नाम्नः समुत्पत्तिः। अत एव वाच्यवाचकसम्बन्धस्य स्वाभाविकत्वम् । यथा ब्रह्मणः सर्वादित्वं तथैव ब्रह्मवाचकस्य प्रणवस्यापि सर्वेषां वाचकानामनादित्वम् ॥ ६० ॥

अष्टमं महत्त्वं प्रतिपाद्यते –

## त्रिदेवात्मकत्वात् ॥ ६१ ॥

त्रिदेवानां ब्रह्मविष्णुमहेश्वराणां स्वरूपत्वादपि प्रणवस्य महत्ता। सर्वशक्तिमयः प्रणवः त्रयाणामपि सत्त्वरजस्तमसां गुणानां शक्त्या संयुक्तः, अतस्त्रिदेवाधिष्ठानरूपः। तथा स्मृतौ—

अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः ।
मकारेणोच्यते ब्रह्मा प्रणवेन त्रयो मताः ॥ ६१ ॥

नवमं महिमानमुदीरयति—

## गुणसाम्यत आविर्भूतत्वात् ॥ ६२ ॥

गुणानां साम्येन प्रादुर्भूतत्वात्तन्महत्त्वम्। सत्त्वरजस्तमोगुणैः सृष्टिस्थितिप्रलया जायन्ते। त्रयाणां स्वरूपं कार्यं च यदा व्यज्यते तदा प्रकृतेर्व्यक्तादशा प्रोच्यते। यदा च तेषां स्वरूपं कार्यं च न व्यज्यते, तदा सैव प्रकृतेरव्यक्ता दशा। अव्यक्ता दशैव किल वस्तुतो गुणसाम्यावस्था। अव्यक्तावस्थातो व्यक्तावस्थां भजन्त्याः प्रकृतेः प्रथमक्रिया हिल्लोलध्वनिरेवोंकारशब्दवाच्यः । तद्विज्ञानं हि पूर्वमेवोक्तम्। सुतरां रूपान्तरेण गुणसाम्यावस्थया साकमेव प्रणवसम्बन्धः। शक्तिशक्तिमतोरभेदावस्था हि गुणसाम्यमुच्यते।

प्रकृतेः स्थूलसूक्ष्म-कारणतुरीयावस्थासु तुरीययावस्थयैव सह प्रणव-सम्बन्धः। अतस्तन्महत्त्वं सर्वाभ्यर्हितम् ॥ ९२ ॥

दशमं महत्त्वं प्रोच्यते—

भावातीत भावोपलम्भकत्वात् ॥ ९३ ॥

भावातीतो यो भावस्तस्योपलम्भकत्वात् प्रापकत्वादपि प्रणवस्य महत्त्वं विद्यते। सत्त्वरजस्तमोगुणैः सृष्टिस्थितिप्रलया भवन्ति तदनुभवश्च भावेनैव जायते। यथा तुरीयायां प्रकृतौ गुणत्रयस्य लयावस्था तथैव परमपुरुषस्वरूपेऽपि त्रयाणां भावानां लयावस्था ज्ञातव्या। यतस्तस्यामवस्थायां सच्चिदानन्दभावानामद्वैतरूपेणानुभूतिः। तत्रैव भावातीते भावे प्रापकः प्रणवः। मनोबुद्ध्य गोचरमद्वैतं तुरीयपदं तत् प्रणवस्य जपेन तदर्थभावनया, ततश्च प्रणवोत्पत्तिलय-स्थानधारणयाऽधिगम्यते। अतश्चापि प्रणवस्य विशिष्टो महिमा ॥ ९३ ॥

एकादशीं महत्तां वर्णयति—

लयकृत्त्वात् ॥ ९४ ॥

लयस्य कारकत्वादपि प्रणवमहत्त्वम्। मन्त्रराजस्य मन्त्रसेतुभूतस्य प्रणवस्य जपेन मनसो लयोन्मुखगतिः स्वतः सम्पद्यते। सुतरां प्रणवमन्त्रजपेनावशिष्टविषयोन्मुखप्रवृत्तिवैराग्यस्योत्तरोत्तराभिवृद्धिद्वारा लयाभिमुखं स्वत एवाग्रेसरति। अतः संन्यासिनांकृते प्रणवजपमाहात्म्यं सर्वाभ्यर्हितं शास्त्रेषूपवर्णितम्। अतस्तुरीयाश्रमे विहितत्वात् महीयान् प्रणवमहिमा।

जिज्ञासुरत्र शङ्कते—यदि प्रणवो लयकृत्तर्हि तज्जपाधिकारिणः सर्वे कथं न? शास्त्रेषु स्त्रीशूद्रादीनां कृते कथं तज्जपनिषेधः? किंवा तज्जपो यदि वैराग्योत्पादकस्तर्हि कथं न सर्वहितसाधकः? तज्ज-

पार्थमधिकारभेदः कथम् इत्यादि । समाधत्ते—अधिकारपार्थक्यादेव हेतोः सनातनस्य धर्मस्य पूर्णता प्रतिपादिता । प्रकृतिं प्रवृत्तिं शक्तिं चानुसृत्यैव कर्माधिकारनिर्णयः । त्रिगुणाभेदादेव प्रकृतिनिर्णयः क्रियते । तामसिकाधिकारिणे सात्त्विककर्मोपदेशे किं वा सात्त्विकाधिकारिणे राजसिक-तामसिककर्मोपदेशे विपरीतं फलमुदेष्यत्येव । यदि राज्ञे राज्यपालनमर्यादापरित्यागपूर्वकं भिक्षाटनोपदेशो दीयेत किं वा ज्ञानवान् ब्राह्मणो युद्धे प्रवृत्तः क्रियते तर्हि विपरीतं फलमवश्यम्भावि । अध्यात्माधिदैवाधिभूतभावानुसारं मनुष्येषु प्रवृत्तिर्जायते । यदि ज्ञानप्रवणो जनोऽन्धविश्वासद्वारा संचाल्येत, यदि वा तामसिकश्रद्धाधिकारिणे वैज्ञानिकोपदेशदानेन तदीया श्रद्धा शिथिलीक्रियेत तर्हि विरुद्धं फलमुदेष्यत्येव । सात्त्विकजनाय राजसिकतामसिकभोजनदाने विफलतालाभो नाऽसम्भवः । शक्तिमाहात्म्यमपि तथैव बोध्यम् । यत्र यावती शक्तिस्तस्या एव सदुपयोगेन साफल्याधिगमोऽन्यथा विफलतैव सम्भवा । यो हि मानवः पञ्चसेटकभारवाही तस्मै मणपरिमितभारदानेन विपरीतफलं दुर्निवारम् । अतो वेदशास्त्रेषु प्रवृत्तिप्रकृतिशक्तितारतम्यमनुसृत्याधिकारनिर्णयप्रकारः सर्वथा विज्ञानसिद्ध इत्यत्र नाणीयानपि संशीतिलेशः । तुरीयया प्रकृत्यैव प्रणवाधिकारो निर्णीतः । अत आश्रमाधिकारेऽपि तस्मै तुरीयं स्थानं दत्वा संन्यासाश्रमे तस्य प्रशस्ताधिकारो निर्णीतः । अतो ब्राह्मणादिद्विजानामेव हिताय मन्त्रसेतुरूपतस्तज्जपः सर्वथा शास्त्रविहितः । शूद्रादीनामधिकारस्य निम्नकोटिकत्वात् तेषां च शक्तिप्रकृतिप्रवृत्तीनां प्राकृतिकस्थूलराज्यसम्बन्धसत्त्वात् प्रणवजपाधिकारस्तेभ्यो न प्रदत्तः । तदर्थमेष निर्णय उपकारको नापकारको विज्ञातव्यः । यद्यपि ब्रह्मसद्भावाधिकारः सर्वोत्कृष्टः, किन्तु कस्मैचन इन्द्रियलोलुपजनाय यदि सर्वभूतैकताप्रतिपादकब्रह्मसद्भावाधिकारो दीयेत तर्हि तस्य परधनलोलुपता-

परिवृद्धिमेष्यति,तथैव प्रणवजपस्य वैराग्योत्पादकत्वेऽपि प्रवृत्तिमार्गात् निवृत्तिमार्गस्य श्रेष्ठत्वेऽपि अनधिकारिणां कृते तदुपदेशो न शुभफलप्रदः। यस्य प्रकृतिप्रवृत्ति-शक्तयो विषयवैराग्यं न सोढुमर्हन्ति तमस्वाभाविकरीत्या विषयवैराग्यपथं गमयितुं, विरुद्धफलावाप्तिरेव सम्भवा। तदीयं वैराग्यं नैव स्थितशीलम्। जलस्रोतसि वालुकाबन्ध इव स्वल्पसमयेनैव नूनं प्रणश्यति। अतो यथाधिकारं क्रमशः साधनपथे साधकस्य समुन्नयनमेव वेदशास्त्रानुकूलं दार्शनिकयुक्तियुक्तं चेति ॥ ९४ ॥

द्वादशी महत्ता प्रोच्यते—

सृष्टिलयहेतुत्वात् ॥ ९५ ॥

सृष्टिः सर्गस्य लयहेतुत्वादपि प्रणवस्य महत्ता। शास्त्रेषूपवर्णितं पृथिवी जले, जलं चाग्नौ, अग्निश्च वायौ, वायुश्चाकाशे यदा विलयं गच्छन्ति, तदैव ब्रह्माण्डस्य लयकार्यं सम्पद्यते। अन्ते च सर्गस्य सूक्ष्मा दशा शब्दमयी सृष्टिरोंकारे, ओंकारश्च प्रकृतौ, सा च ब्रह्मणि विलयमुपगच्छति। अतः प्रणवो लयहेतुरिति सिध्यति। पुराणतन्त्रोक्तसगुणोपासनायास्तु कथैव का, वेदोक्तसामोपासनोद्गीथोपासनाप्रभृतयो या अप्युपासनापद्धतयः श्रूयन्ते, सर्वास्वपि तासु ओंकारोपासनाशिरःस्थानीया समाख्याता। एतत्सविस्तरवर्णनमुपनिषत्सु दैवीमीमांसादर्शनेऽपि प्रतिपादितमुपलभ्यते ॥ ९५ ॥

त्रयोदशी गुरुता निर्दिश्यते—

एकतत्त्वोद्भावकत्वात् ॥ ९६ ॥

एकतत्त्वस्य उद्भावकत्वादुद्बोधकत्वादपि प्रणवस्य महिमा, यैः किल साधनविशेषैरेकतत्त्वमुत्पद्यते त एव समाधिसाधका इति योगशास्त्रस्य सर्वविधक्रियासिद्धांशतात्पर्य्यम्। वस्तुत एकतत्त्वं द्वारीकृत्यैव समाधिसिद्धिरिति योगदर्शने सविस्तरं प्रपञ्चितमास्ते। एक-

तत्त्वोदयमन्तरेण योगी समाधिभूमिमासादयन्नपि सविकल्पसमाधावेव तिष्ठति, निर्विकल्पसमाधिं नासादयति। एकतत्त्वपरिपूर्णताराहित्यादनेके योगान्तरायाः समुत्पद्यन्ते। परन्त्वोंकारसाधनेनैकतत्त्वस्योदये सुमहत् साहाय्यमासाद्यते ॥ ९६ ॥

चतुर्दशी गुरुता निर्दिश्यते—

## मनसो विशिष्टलयसाधकत्वात् ॥ ९७ ॥

मनसो विशिष्टो यो हि लयस्तस्यापि साधकत्वात् प्रणवमहत्त्वमास्ते। बन्धमोक्षकारणमेकमात्रं मन एव। मन एव इन्द्रियाणां राजा। अशुद्धेन मनसा बन्धनं प्राप्यते शुद्धेन च मुक्तिः। आसक्त्या मनो दुष्यति, शुद्धभावावलम्बनेन च शुध्यति। मनसः प्रभावशालित्वं गीतोपनिषद्यपि समुपवर्णितं। तथाहि—

"मन एव मनुष्याणां कारणं बन्धमोक्षयोः"
"तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्"
असंशयं महाबाहो मनो दुर्निग्रहं चलम्" इत्यादि।

एतादृशशक्तिशालि मनः प्रणवः शीघ्रमेव लयावस्थां प्रापयति। विषयेषु समासक्तं मनो निरतिशयचञ्चलं जायते। तत्र मनसः शान्तिरसम्भवा। शुद्धं मनः सद्भावसाहाय्येन यद्यपि स्वरूपाभिमुखं क्रमशोऽग्रेसरति, परन्तु न निलीयते। मनसो विलयस्तदैव सम्पद्यते, यदाऽऽत्मज्ञानस्य परिपूर्णो विकासः स्यात्, किं वा ब्रह्मवाचकस्य प्रणवस्य नित्यस्वरूपे संलग्नं तेनैव सह ब्रह्मपदे विलीयते। सुतरामेतादृशालौकिकप्रभावोपेतप्रणवमहत्त्वकीर्त्तनमपर्याप्तमेव ॥ ९७ ॥

पञ्चदशी महत्ता गीयते—

## स्वरूपद्योतकत्वात् ॥ ९८ ॥

स्वरूपस्य द्योतकत्वात् प्रकाशकत्वादपि प्रणवस्य सर्वोपरि महिमा

विद्यते। मनसो वृत्तिषु निरुद्धासु आत्मा स्वस्वरूपे विद्योतते। तथाहि योगदर्शने—

"योगश्चित्तवृत्तिनिरोधः"

"तदा द्रष्टुः स्वरूपेऽवस्थानम्"

चित्तवृत्तिनिरोधाभावे स्वरूपोपलब्धिरसम्भवा। यतस्तरङ्गमालाकुले जलाशये सूर्यस्य चन्द्रमसो वा प्रतिबिम्बो नैव दृष्टिगोचरतामापद्यते। शान्ततरङ्गे च तत्र तयोः प्रतिबिम्बदर्शनं जायते, तथैव साधनद्वारा शान्तासु मनोवृत्तिषु स्वत एव स्वस्वरूपविकासो जायते। अतो यदि मनोवृत्तिनिरोधे प्रणवः सर्वश्रेष्ठसहायकः, जाते च चित्तवृत्तिनिरोधे स्वरूपोपलब्धिः सम्पद्यते, तदा स्वीकर्त्तव्यमेवैतद् यत स्वरूपप्रकाशसामर्थ्यात् प्रणवस्य सर्वातिशायि महत्त्वम् ॥ ६८ ॥

षोड़शी महत्ता प्रणिगद्यते—

**तत्र विश्वलयेन ब्रह्मभावप्राप्तिः परतत्त्वानुसन्धानात् ॥ ६९ ॥**

तत्र प्रणवे विश्वप्रपञ्चस्य विलयेन परतत्त्वानुसन्धानद्वारा ब्रह्मभावस्य प्राप्तिर्जायते। संसारोऽयं प्रणवादुत्पद्यते, विलीयते चेति सृष्टिस्थितिप्रलयसिद्धान्तः। शब्द आकाशगुणः। आकाशतत्त्वस्य सर्वातिसूक्ष्मत्वात् शब्दतन्मात्रैव चरमं तत्त्वम्। अतः सृष्टिकाले यथा आकाशाद् वायुः, वायोरग्निरग्नेरापः अद्भ्यः पृथ्वीति समाविर्भूय संसारः समुद्भवति, तथैव तद्व्युत्क्रमेण पृथ्वी जले, जलमग्नौ, अग्निर्वायौ, वायुराकाशे, आकाशः प्रणवे विलयमुपगच्छन्ति। तदानीं विश्वब्रह्माण्डलयक्रिया सम्पद्यते। सिद्धान्तमिममनुसृत्य शब्दतन्मात्रा पञ्चतत्त्वलयस्थानम्, प्रणवश्च तस्या अपि लयस्थानम्। वाच्यवाचकसम्बन्धेन ब्रह्मपदमेव प्रणवस्य लयस्थानम्। एतन्निर्दिष्टक्रमानुसारं सफलः कर्मयोगी निर्विघ्नं समाधिपदमासादयितुं समस्तमपि

द्वैतप्रपञ्चं प्रणवे विलीनं कृत्वा परतत्त्वानुसन्धानद्वारा ब्रह्मपदमधिकरोति। अतः प्रणव एव परमगतिरित्यत्र कः सन्देहः ॥ ९९ ॥

स्थूलसूक्ष्मकर्मशक्तिव्यवस्थया मोक्षपदोपलब्धिप्रसङ्गादुच्यते—

## शृङ्खलया सर्वम् ॥ १०० ॥

अभ्युदयो वा निःश्रेयसं वा सर्वमप्येतत् शृङ्खलया सरलं सुसाध्यं च जायते। यथा शृङ्खलायाः प्रत्येको विभागो विभागान्तरं परिरक्षति, सर्वेषां बलं सर्वत्रैव गच्छति, तथैव कार्यव्यवस्था चापि प्रकारान्तरेण शृङ्खलैव विज्ञेया, अभ्युदयनिःश्रेयसकारिषु धर्मसाधनेषु तदीयेषु विविधेषु मार्गेषु च शृङ्खलाया महदावश्यकत्वम्। तस्या एव साहाय्येन सर्वं सम्पद्यते ॥ १०० ॥

तद्भेदं विवृणुते—

## सा त्रिविधा त्रिभेदवत् ॥ १०१ ॥

त्रिभेदवत् सर्गसर्वविधपदार्थानां त्रिभेद इव सा शृङ्खलापि त्रिविधा विज्ञेयाऽधिकारभेदात्। शृङ्खलाया एव महत्त्वमिदं यत् आपिण्डाद् ब्रह्माण्डं यावत् सूक्ष्मदैवराज्यतः स्थूलं मृत्युलोकपर्य्यन्तं सर्वत्रैव सृष्टिस्थितिलयव्यवस्था यथायथं सन्तिष्ठते। तस्या एवायं महिमा यत चन्द्रः पृथिव्यां सा च सूर्ये न प्रविशति। तन्माहात्म्येनैव देवा असुराश्च स्वमर्यादां नातिक्रामन्ति, ते च स्वस्वाधिकारं परिपालयन्तो निजपदे विराजन्ते। पितरो देवर्षयश्च नैजं विधेयं विदधतो ब्रह्माण्डस्थितेः सुरक्षां कुर्वन्ति। शासनद्वारा प्रजाश्च रक्ष्यन्ते ताः कल्याणं च लभन्ते। शिल्पेषु वाणिज्येषु, अनुशासनेषु धार्मिकाध्यात्मिकजगत्सु च शृङ्खलां विना साफल्यं नाधिगम्यते। अतः शृङ्खलावश्यकतायाः सार्वभौमत्वात्तस्यास्त्रिविधत्वं नितरां समुचितम् ॥ १०१ ॥

प्रथमा वर्ण्यते—

संस्कारशृङ्खला प्रथमा ॥ १०२ ॥

कर्मबीजसंस्काराणां शृङ्खला प्रथमा परिज्ञेया। कथमिव स्वाभाविकसंस्काराः प्रकृतिस्वभावसिद्धरीत्या पिण्डसृष्टेरादौ सहजातरूपेण समुत्पद्यन्ते, कथमिव च जैवीं क्रमोन्नतिं विदधतो जीवान् मुक्तिपदं प्रापयन्ति कथं चास्वाभाविकसंस्कारान् निरुध्य आवागमनचक्रभेदनपूर्वकं स्वस्वरूपोपलब्धिं कारयन्तीति सविस्तरं प्रागेव निर्णीतम्। अस्वाभाविकसंस्काराभिव्यक्तिकाले संस्कारशृङ्खलैव जीवक्रमाभ्युदयं रक्षन्ती नीचैः पतनं निरुन्धन्ती प्रथममभ्युदयस्यान्ते च निःश्रेयसस्य मार्गे उत्तरोत्तरं नियमितरूपं जीववर्गमग्रे सारयन्ती विराजते। वर्णाश्रमपुरुषनारीधर्माचारादीनां श्रुतिस्मृतिप्रतिपादितव्यवस्था संस्कारशृङ्खलामेवानुसरति। आयसीशृङ्खला पारस्परिकं संरक्षणं कुर्वती यथा महतीं शक्तिमाविर्भावयति, तथैव वर्णाश्रमधर्मक्रियाकलापस्तत् साधनसमूहश्च तादृशीं संस्कारशृङ्खलां प्रकटयति, यया स्त्रियो वा पुरुषा वा ब्राह्मण-क्षत्रिय-वैश्य-शूद्राश्चतुराश्रमिणो वा नाधःपतिता जन्मान्तरे क्रमोन्नतिमासादयन्ति, संस्कारशृङ्खलामहत्त्वं जानन्तो विद्वांसोऽत एव वर्णधर्मस्य निम्नोच्चाधिकारान्, नारीपुरुषधर्माणां विभिन्नानसमानानधिकारांश्च विलोक्य नैव विचलन्ति। यतस्तदीयकर्त्तव्येषु संस्कारशृङ्खला नितरां सुदृढा चमत्कारकारिविज्ञानैः परिपूर्णा च। संस्कारशृङ्खलामहत्त्वमुच्चाधिकारदार्शनिका योगिन एवावगन्तुं शक्नुवन्तीति ॥ १०२ ॥

द्वितीया शृङ्खला निरूप्यते—

कर्मशृङ्खला द्वितीया ॥ १०३ ॥

कर्मणां शृङ्खला द्वितीया बोध्या। कर्मशृङ्खलाया एव महत्त्वमिदं

यत् त्रयस्त्रिंशत्संख्याकाः प्रधानभूतास्त्रयस्त्रिंशत्कोटयोऽन्ये च देवाः स्वं स्वं विधेयसमूहं याथातथ्येन सम्पादयन्तः सृष्टिसुरक्षां विदधते। ब्रह्माण्डेषु, पिण्डेषु, अन्तर्जगत्सु, बहिर्जगत्सु देवासुरसंग्रामसत्त्वेऽपि देवजयो जायते, येन सृष्टिसामञ्जस्यं संरक्ष्यते। कर्मशृङ्खलायाः कारणादेवैकस्य साम्राज्यस्य प्रजारक्षकं प्रहरिणं, साधारणं सैनिकमारभ्य महान्तमपि साम्राज्यकर्मचारिणं मन्त्रिसभां यावत् सुव्यवस्था तिष्ठति, यया राजप्रजावर्गस्य कल्याणमभ्युदयाधिगमश्च सम्पद्यते। अनयैव कर्मशृङ्खलया शूद्राणां शिल्पकार्यं, वैश्यानां बृहद्वाणिज्यायोजनं, क्षत्रियाणां राजानुशासनं, ब्राह्मणानां धर्मानुशासनं च यथावत् सम्पद्यते मङ्गलमधिगम्यते च। वर्णाश्रमधर्मस्य, सभायाः राजानुशासनस्य, समाजानुशासनस्य, मृत्युलोकस्य, प्रेत-पितृ-नरकलोकानां, देवलोकानां, ग्रहोपग्रहादीनां यावन्तः क्रियाकलापाः सन्तिष्ठन्ते, सर्वत्रैव कर्मणां शृङ्खला निभाल्यते, यया मङ्गलावाप्तिर्निश्चप्रचा॥ १०३॥

तृतीया कथ्यते—

## शक्तिशृङ्खला तृतीया॥ १०४॥

शक्तीनां शृङ्खला तृतीयाऽवगन्तव्या। सूर्यदेवरश्मिप्रभावात् पृथिव्याः समुद्रस्य चान्यान्यविविधपदार्थानां जलीयांशा वाष्परूपेण परिणमन्तो वियत्याकृष्यन्ते। प्रथमं सूर्यतेजसा समाकृष्टो वाष्पराशिः आकाशस्थवैद्युतिकशक्तेः ऋतूनां शक्तेश्च प्रभावतो विविधस्वरूपं धारयन् मेघरूपेण परिणमन् वारिणा पृथ्वीं सिञ्चन् नानाप्रकारकमन्नमुत्पाद्य सृष्टिरक्षां विधत्त इति सर्वमिदं शक्तिशृङ्खलाकार्यमवधेयम्। प्राणशक्तिविपर्ययहेतुना तच्छक्तिविप्लवोपस्थितत्वादतिवृष्टिदुर्भिक्षं महामारीभयं चेत्यादीनि सम्पद्यन्ते। शक्तिशृङ्खलायाः छिन्नत्वे च सर्वविधा अपि विपत्तयः समुपतिष्ठन्ते। ब्रह्माण्डेऽत्र तदनुकूलत्वे

पिण्डेऽपि प्राणशक्तिश्शृङ्खलाऽनुकूला तिष्ठति, यया नरा नार्यश्च स्वास्थ्यं, वीर्यम्, आरोग्यमायुरुत्साहमभ्युदयं च प्राप्नुवन्ति। प्रतिकूलत्वे मनुष्यसमाजस्याधःपतनम्, पराधीनता स्वास्थ्यवीर्यादीनां हानिः पवित्रतोत्साहयोर्नाशः पारिवारिकसामाजिकराजनीतिकानन्दाभावः अल्पमेधात्वम्, अल्पायुष्ट्वम्, भोगशक्तेरभावः, आरोग्यनाशः, स्नेह-प्रेमश्रद्धाभक्तिषु वैराग्यम्, साहसोद्यमधर्मानुरागादिषु अस्पृहा आलस्यमादीनि दुर्लक्षणानि प्रादुर्भवन्ति। शक्तिश्शृङ्खलाया विद्यमानत्वे सेनाव्यूहं शत्रुसेना भेत्तुं न शक्नोति, स्वसैनिकाः परसैनिकान् परास्तान् विदधते। शक्तिश्शृङ्खलाभङ्गेन पराभवो बोभूयते। राज्यानुशासने सेनापरिचालने, समाजानुशासने लघीयसि गृहस्थानुशासने शक्तिश्शृङ्खलाया रक्षयैवाभ्युदयः, विनाशेन च हानिरुत्पद्यते। आध्यात्मिकोन्नतिसाधने लौकिकोन्नतिसाधने वा शक्तिश्शृङ्खलायाः परमावश्यकत्वम्। मनुष्यस्तत्समाजो वा लौकिकेषु दैविकेषु, आभ्युदयिकेषु, नैश्रेयसिकेषु च कार्येषु पूर्वोक्तत्रिविधश्शृङ्खलारहस्यमवधारयन् यथायोग्यं यथास्थानं च परिरक्षन् क्रमाभ्युदयमधिगच्छन्नन्ते निःश्रेयसमधिकरोति॥ १०४॥

मुक्तिमार्गं शुद्धं सरलं च सम्पादयितुं विरुद्धवृत्तीर्निर्दिशति—

**क्रमान्मूढेषु विद्याऽस्मितारागद्वेषाभिनिवेशाः॥ १०५॥**

स्पष्टोऽर्थः। योगदर्शनप्रवर्त्तको महर्षिः पतञ्जलिः प्रोवाच—

"अनित्याशुचिदुःखानात्मसु
नित्यशुचिसुखात्मख्यातिरविद्या"

"दृग्दर्शनशक्त्योरेकात्मतैवाऽस्मिता"

"सुखानुशयी रागः"

"दुःखानुशयी द्वेषः" "स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः"

आत्मानात्मसदसद्विवेकशून्यस्तत्त्वज्ञानरहितो मूढ इत्युच्यते। एतादृशं विषयासक्तजीवम् अविद्याऽस्मितारागद्वेषाभिनिवेशाख्याः पञ्चक्लेशाः समुत्पद्य मलविक्षेपावरणै ग्रसन्ति। आध्यात्मिकीमुन्नतिमभिलक्ष्य यो हि मनुष्यः पूर्वनिरूपितं शृङ्खलात्रयमनुसरति तस्य पञ्चक्लेशभयं प्रणश्यति। पूज्यपादमहर्षिसूत्रकारकथनतात्पर्य्यमिदं यत्प्रागुक्तशृङ्खलामभिलक्ष्य तदभ्यासेन सिद्धिं लभमानो मानवो विविधासौविध्येऽरित्यक्तो भवितुमर्हति। दर्शनमिदं कर्मविज्ञाननिदर्शकम्। अतः सर्वश्रेणिकर्मसु क्रमोन्नतिशृङ्खलयाऽभ्युदयनिःश्रेयसाधिगमाय सिद्धान्तं निर्णीय विरुद्धवृत्तिनिर्देशोऽपि विहितः ॥ १०५ ॥

प्रसंगात् तद्वृत्तितस्त्राणस्य क्रमवर्णनं विधीयते—

**तद्विपरीतं ज्ञानवत्सु ॥१०६॥**

ज्ञानिषु तद्विपरीतं विज्ञेयम्। मूढं जनमविद्याऽस्मितारागद्वेषाभिनिवेशाः क्रमशः समुत्पद्यमाना बन्धने विनिपातयन्तो गमागमचक्रे भ्रामयन्ति। किन्तु ज्ञानिषु तद्वैपरीत्यं निभाल्यते। तत्त्वज्ञानिमहात्मसु प्रथममभिनिवेशः ततोद्वेषः, ततश्च रागः, अनन्तरमस्मिता, तदनन्तरं चाऽविद्येति पञ्च शैथिल्यमवाप्य व्युत्क्रमेण विलीयन्ते। धर्मसाधनेन संस्कारक्रियाशुद्ध्या अधिगतस्वस्वरूपोपलब्धिवर्त्मनि सात्त्विकबोधोदयेनाभिनिवेशो नश्यति। ततश्च "वसुधैव कुटुम्बकम्" इति सात्त्विकधारणया द्वेषवृत्तिर्विलीयते। भगवद्भावभावितत्वादात्मरतिद्वारा रागवृत्तिरपि विलयं गच्छति। ततश्च तटस्थज्ञानलयपुरस्सरमस्मिताविलयः। अन्ते च ज्ञानजनन्या विद्यायाः साहाय्येन प्रकृतिलयेऽविद्याया विलयोऽपि जायते। एष एव तत्त्वज्ञानिनि जीवन्मुक्ते महापुरुषे स्वस्वरूपोपलब्धिक्रमो वेद्यः ॥ १०६ ॥

निःश्रेयससरणिमभयां विधातुमुच्यते—

**अध्यासतः कर्मयोगिन्यभिनिवेशः पूर्वम् ॥ १०७ ॥**

कर्मयोगिनि पुरुषेऽध्यासवशात् पूर्वमभिनिवेशः प्रादुर्भवति। निःश्रेयसाधिगममूलभूतो निष्कामकर्मयोगोऽपि पूर्वोक्तभयान्न विमुक्तः। अतः कर्मयोगिनं सावधानं विधातुं पूज्यपादो महर्षिः सूत्रकारो वक्ति यत् कर्मयोगिनोऽध्यास एवाभिनिवेशरूपेण परिणमति। संस्कारशुद्ध्या क्रियाशुद्धिमासाद्य कर्मयोगाधिकारवान् साधको निजवासनाजालं शिथिलयन् समुन्नताधिकाररूम्पन्नोऽपि सावधानो भवेत्। यावद्धि मलविक्षेपावरणानि न पूर्णरूपेण दूरीभवेयुः, यावच्चाविद्याऽस्मितातिरोधानपूर्वकं स्वस्वरूपोपलब्धिर्न स्यात् तावन्निष्कामव्रतधारिणा कर्मयोगिनाऽपि सावधानेन भाव्यम्। यतो जीवबन्धनकारणमध्यासः, स एव परिवर्धमानोऽभिनिवेशस्वरूपं धत्ते अतोऽभिनिवेशसमुत्पत्त्या कामनाबीजं नाङ्कुरमुत्पादयेदित्येवैतत्सूत्रतात्पर्यम् ॥ १०७ ॥

ततश्च किं भवतीत्युच्यते—

**ततोऽन्ये ॥ १०८ ॥**

ततोऽभिनिवेशात् अन्ये रागद्वेषादयो अपि समुत्पद्यन्ते। स्वरूपोपलब्धेः प्राक् कर्मयोगिन्यपि अध्यासवशतः कथमिवाभिनिवेशः समुत्पद्यत इति प्रागेव प्रपञ्चितम्। योगारूढस्वरूपपूर्णसिद्धावस्थातः पूर्वमारुरुक्षुदशायाम् अभिनिवेशोदयेन कर्मयोगिन्यपि रागद्वेषसमुत्पत्तिसम्भावना तिष्ठति। गूढरहस्यपरिपूर्णविषयोऽयं प्रकारान्तरेणापि बोद्धुं शक्यते। स्वस्वरूपोपलब्धिकारककर्मयोगिनिःश्रेयसप्रदः पन्था द्विधा विभक्तः। तस्य पूर्वांशोननिर्भयः, उत्तरांशस्तु भयशून्यो वर्त्तते। उत्तरांशे स्थिरः समाधिः।

तदानीमेकतत्त्वपूर्णतया स्थिरलक्ष्यः सर्वक्लेशविमुक्तो निःश्रेयसपथ-पथिको निरन्तरमग्रेसरति। एतदभावे निःश्रेयसमार्गपथिकोऽभ्यास-पाशपतितः कर्मयोगी चापि अभिनिवेशवशवर्त्ती जायते। विषया-भिनिवेशे समुत्पद्यमानेऽनुकूले रागः, प्रतिकूले च द्वेषस्तत्र नूनं समुत्पत्स्यते ॥ १०८ ॥

निर्भयावस्थां परिलक्षयति—

## निर्भयो निर्विकल्पस्थः ॥ १०९ ॥

निर्विकल्पस्थो निर्विकल्पे समाधौ स्थितो निर्भयः पूर्वोक्तभय-रहितो जायते। यदा कर्मयोगी कर्मयोगे सिद्धिं लभमानः सम्पूर्ण-रूपेण वासनानाशं कुर्वाणः एकतत्त्वस्थिरलक्ष्ययुक्तो निर्विकल्प-समाधौ समायाति, तदानीं प्रागुक्तेन भयेन विरहितो भवति। पूर्वं हि निःश्रेयसपथस्य यौ हि द्वौ मार्गौ विहितौ, तत्रोत्तरार्द्ध-दशायामियं निर्भयता प्राप्यते। निर्विकल्पसमाधेरवस्थायां प्रकृते-र्वैषम्या दशा विलीयते। तदानीं स्वस्वरूपोपलब्ध्याऽविद्ययैव साक-मस्मिताया अपि लयः सम्पद्यते। अतोऽभिनिवेशस्य रागद्वेषयोश्च सम्भावनैव नास्ति। सुतरामवस्थेयं निर्भयेति नात्र सन्देह-लेशः ॥ १०९ ॥

विज्ञानमेतत्परिपोषयति—

## अविद्याशून्यत्वाच्चित्तस्य ॥ ११० ॥

चित्तस्य अविद्याराहित्यात् अवस्थेयं भयरहिता। निर्विकल्पे समाधौ तटस्थज्ञानलयात्स्वरूपज्ञानमुदेति तदानीं सात्त्विकस्य ज्ञान-स्य धैर्यस्य, स्वरूपस्य च पूर्णविकासेन द्वैतभानमूलच्छेदो जायते। तदानीं प्रकृतिर्वैषम्यावस्थां परित्यज्य साम्यावस्थां प्राप्ता-

स्वीयमविद्यास्वरूपं परित्यजति, तदानीं निर्विकल्पे समाधौ वर्त्तमानस्य कर्मयोगस्य च परां काष्ठां प्राप्तस्य जीवन्मुक्तमहापुरुषस्य चित्तमविद्याशून्यं जायते। तदानीं तत्र पञ्चस्वपि क्लेशेषु कश्चिदपि न तिष्ठति। यतोऽविद्या सर्वानर्थमूलम्। मूले नष्टेऽन्यक्लेशोत्पत्तिसम्भावनैव नास्ति। सुतरामवस्थेयं भयशून्या जायते॥ ११०॥

पूर्वोक्तदार्शनिकविचारनिष्कर्षः प्रोच्यते—

## सावधानेन भवितव्यं ज्ञानिना ॥ १११ ॥

स्पष्टोऽर्थः। पूर्वोक्तदार्शनिकविज्ञानमनुसृत्य निष्कामव्रतपरायणः कर्मयोगी ज्ञानवान् महापुरुषः प्रथमावस्थायां परोक्षज्ञानेन द्वितीयदशायां चापरोक्षज्ञानद्वारा नैजमात्मस्वरूपमनुभवति। इयमेवावस्था शास्त्रान्तरे परोक्षानुभूतिरपरोक्षानुभूतिश्च व्याख्याता। सप्तज्ञानभूमिमनुसृत्य स्वस्वज्ञानानुरूपं स्वीयदार्शनिकविज्ञानसाहाय्येन प्रथमावस्थायां ज्ञानिना यत् तत्त्वज्ञानं प्राप्यते, तत्परोक्षानुभूतिनाम्नोच्यते। दर्शनशास्त्राचार्यैः परोक्षानुभूतिरियं त्रिधा विभक्ता। तदनन्तरमपरोक्षानुभूतिद्वारा तत्त्वज्ञानी यत् स्वस्वरूपमनुभवति, तदद्वैतभानरहितप्रत्यक्षानुभवोऽपि शास्त्रकारैश्चतुर्धा विभक्तः। यथाक्रममेतच्चतुर्विधानुभवं कुर्वाणस्य सिद्धमहापुरुषस्यान्तःकरणं ब्रह्मीभूतं जायते। तदानीमहं मुक्तोऽस्मि, ब्रह्मास्मीतिमामपि तिरोदधाति। यतस्तदानीमस्मिताऽविद्ययोरेव विलयो भवति। अपरोक्षानुभूतेश्चत्वारो भेदाः सूक्ष्मातिसूक्ष्मविज्ञानपरिपूर्णाः। स्वरूपज्ञानेनैव स्वस्वरूपोपलब्धिर्जायते। तत्त्वज्ञानिनोन्तःकरणस्य धृतिभेदमनुसृत्य चतसृणामवस्थानां परिकल्पना। अपरोक्षानुभूतेरवस्थानिर्भयाः, परन्तु परोक्षानुभूतेः पूर्वोक्ताः तिस्रोऽवस्था न सन्ति भयरहिताः। न्यायवैशेषिकयोः पदार्थवादसम्बन्धीयानुभवो, योगसांख्यज्ञानभूमिमनुसृत्य प्रकृतिपुरुषसम्बन्धीयः स्वतन्त्रोऽनुभवः

मीमांसात्रयज्ञानभूमिसम्बन्धोपेतः, अहमस्मि ब्रह्मेत्यद्वैतपदानुभवश्च परोक्षानुभूतेरन्तर्गताः। अतो ज्ञानिना सदैव सावधानेन भवितव्यम्। यतः परोक्षानुभूतौ पूर्वोक्तभयोत्पत्त्या ज्ञानिनाऽपि विपन्नेन भवितुं शक्यते ॥ १११ ॥

असावधानतया किं स्यादिति निर्णयति—

**अन्यथा व्युत्थानसम्भवः ॥ ११२ ॥**

अन्यथा यथार्थरीत्या स्वरूपोपलब्धेरभावात् व्युत्थानदशायाः सम्भावना, समुन्नतज्ञानिना मुक्तिपथपथिकेनापि भयमधिगन्तुं शक्यते। शरीरे विद्यमाने शरीरपरित्यागसन्धिकाले वा व्युत्थानसम्भवो भवति। शरीरे तिष्ठति क्लेशोत्पत्तिसम्भावना, शरीरपरित्यागकाले व्युत्थानदशाया अधिगमो भवितुमर्हति। एतदुदाहरणानि पुराणादौ बहूनि समुपलभ्यन्ते। नन्वेतादृशसमुन्नताधिकारस्यापि योगिनो यद्येतादृशदशायाः सम्भावना तर्हि तत्पतनं किं न सम्भाव्यमिति शङ्कां समाधत्ते—जन्मान्तरद्वारा जन्मान्तरप्राप्तौ नानाभोगोत्पत्तौ च सत्यामपि साधकस्य समुन्नतज्ञानाधिकारो न प्रणश्यति। अन्तेऽसौ तत्रैव ज्ञानभूमौ वर्त्तमानः समुन्नतिमार्गमधिगच्छति। केवलं स्वल्पकालकृते भोगजनितबाधा तेनाधिगन्तुं शक्यते ॥ ११२ ॥

कर्मयोगं निःश्रेयसपथं च सरलीं कुर्वन्नाह—

**तापोऽन्यथात्वे कालस्य ॥ ११३ ॥**

कालस्य अन्यथात्वे प्रतिकूलत्वे तापः समनुभूयते। अनाद्यनन्ते च महाकाले जीवसमष्टिकर्मराशिसम्बन्धेन कथमिव विशिष्टकालोत्पत्तिरिति प्रागेव सविस्तरमुदीरितम्। यदि समष्टिकर्मराशिप्रभावादेव सत्यत्रेताद्वापरादियुगानां समुत्पत्तिः प्रत्येकस्मिंश्च

प्रत्येकस्यान्तर्दशायाश्च समुत्पत्तिः, तर्हि एको व्यष्टिकर्माधिकारी जीवस्तत्समष्टिकर्मवेगविरुद्धं गच्छन् नूनमेव तापग्रस्तः स्यादित्यत्र न सन्देहः। तदीयतापग्रस्ततताया बहूनि कारणानि सन्ति। कालप्रभावात् तत्कालोद्भूताः सर्वेऽपि मानवास्तद्विरोधिनो भवेयु र्यतः-कालप्रभाववशवर्तिनस्तदानीन्तनाः सर्वेऽपि मानवाः सम्भवन्तीति प्रथमम्। अन्तर्जगति सम्पद्यमानदेवासुरसंग्रामविचारतोऽपि दैवसम्पदधिकारिणा समधिकं आसुरप्रक्षेपः सोढव्यो भवतीति द्वितीयम्। अन्तर्जगतामधिष्ठातारो देवा अपि काठिन्येन तत्साहाय्यं विदधते, किं वा तस्य साहाय्यं नैव कुर्वन्तीति तृतीयम्। विशेषतश्च व्यष्टिकर्म समष्टिकर्मवत् शक्तिशालि कदापि भवितुं नार्हति। एतादृशान्यनेकानि कारणानि बोद्धव्यानि। यथा नदीस्रोतसो झञ्झावातस्य च प्रतिकूलं नौकाचालनेन नाविकस्तापग्रस्तो भवति, तथैव कालप्रभावविपरीतगमनेन कर्मयोगिना जीवन्मुक्तमहापुरुषेणापि तापग्रस्तेन भूयते। जिज्ञासुरत्र शङ्कते—किमस्यामवस्थायां कालविरुद्धं सत्कार्यानुष्ठानं, किं वाऽभ्युदयनिःश्रेयसप्राप्तिपुरुषार्थविधानं परित्याज्यम्, समाधत्ते—महर्षेः सूत्रकारस्य कथनतात्पर्यमेतद्यत् अभ्युदयनिःश्रेयसपथपथिकैर्दृढव्रतैर्भूत्वा स्वगन्तव्यमार्गेऽग्रे सर्त्तव्यम्। सत्कर्मपरित्यागे नैतत्सूत्रतात्पर्यम्। सत्कर्मानुष्ठातृभिर्धर्माचरणपरायणैरिदं सर्वदैव स्मर्त्तव्यं यत् कालप्रतिकूलगमनात् तापः प्राप्यत इति। तदुत्साहवर्धनार्थमेवैतत्सूत्राविर्भावः ॥ ११३ ॥

प्रसङ्गाद् विशिष्टमधिकारिणमुद्दिश्य प्रोच्यते—

**तत्र विश्ववाहने तापत्रयात् त्रिविधा बाधा ॥ ११४ ॥**

तत्र कालप्रतिकूलत्वे विश्ववाहने जगच्चालने तापत्रयात् त्रिविधतापोत्पत्तिहेतो स्त्रिविधा बाधा समुत्पद्यते। कर्मयोगिगुर्वाचार्यदैवविभूतिभूतनेतृवृन्दमभिलक्ष्य महर्षिः पूज्यपादः सूत्रकारः सूत्रमिदमा-

विर्भावयामास । सामाजिकधार्मिकाध्यात्मिकैर्नैतृभिरिदं स्मर्त्तव्यं यत् कालप्रवाहविपरीतदिशि प्रजानां परिचालनेन त्रिविधताप-त्रिविध-बाधासमुत्पत्तिर्निश्चप्रचा । लोककल्याणार्थं तादृशशुभकार्यें प्रवृत्तैर्महात्मभिरवश्यमेवाध्यात्मिकाधिदैविकाधिभौतिकाख्यं तापत्रयमवश्यमधिगन्तव्यम् । यद्यपि जीवन्मुक्ता महात्मानो धर्मपथान्न कदापि विचलन्ति, तथापि तैः क्षणिकः क्लेशः शारीरिकी मानिसिकी दैवी च बाधा नूनमधिगम्यन्ते । अतो विपरीते काले जगन्मङ्गल-कार्यरतैर्महापुरुषैर्दृढव्रतैर्भूत्वाऽभ्युदयनिःश्रेयसमार्गे प्रजाश्चालनीया इति ॥ ११४ ॥

प्रकृतविज्ञानं पुनः परिपोषयति—

**समष्टिप्रतिगतेः ॥ ११५ ॥**

समष्टिकर्मप्रतिगतेः प्रतिकूलत्वात् साधुकर्मणि बाधोत्पत्तिः । यथा पिण्डब्रह्माण्डयोर्व्यष्टिसमष्टिसम्बन्धस्तथैव पिण्डेन व्यष्टिकर्मणो ब्रह्माण्डेन च समष्टिकर्मणः सम्बन्धो विज्ञातव्यः । चित्ताकाशचिदाकाशमहाकाशैः सह संस्कारराशीनां कीदृशः सम्बन्ध इति प्रागेव सविस्तरमुपवर्णितम् । यथा किल पिण्डे व्यष्टिप्रारब्धकर्म स्वीयबीजावस्थातोऽङ्कुरितं सत् शुभाशुभभोगमुत्पादयति तथैव समष्टिप्रारब्धमपि असाधारणधर्मद्वारा कथमिवासाधारणशक्तिर्विकसतीति तदपि पूर्वमेव प्रपञ्चितम् । यथा हि प्रारब्धभोगविरुद्धप्रकारान्तरभोगसमुत्पादनं प्रबलेन तपसा साध्यम् तथैव प्रायः समष्टिप्रारब्धप्रतिकूलकार्यसम्पादनमसम्भवमेव । समष्टिकर्मप्रतिकूलत्वात् कालवैपरीत्याच्च त्रिविधा बाधा नूनमेव समुत्पत्स्यन्ते । तादृशः पुरुषार्थः साधारणरूपेण प्रायोऽसम्भव एवेति सूत्रस्यैतस्य तात्पर्यम् ॥ ११५ ॥

एतदवस्थायां कस्य सामर्थ्यमित्युच्यते—

**तत्रालमधिकारत्रयोपेतः ॥ ११६ ॥**

तत्र तस्यामवस्थायामधिकारत्रययुक्त एव समर्थो जायते। असाधारणशक्तिसम्पन्न एवासाधारणधर्माधिकारवान्। एकस्मिन्नेव जन्मनि क्षत्रियत्वाद् ब्राह्मणत्वाधिगमो महर्षिविश्वामित्रस्यासाधारणशक्तिसम्बन्धनिबन्धनः। साधारणो मानवो नैतदधिकारमधिगन्तुमर्हति। कालविपरीतं समष्टिकर्म प्रतिकूलं च कार्यानुष्ठानं तत्र च साफल्याधिगमः त्रिविधाधिकारसम्पन्नमहापुरुषस्य कृत एव सम्भवः। येषु महात्मसु ईशकोटिजीवन्मुक्तमहापुरुषेषु वाऽध्यात्माधिदैवाधिभूतशक्तित्रयविकासस्त एव समष्टिकर्मविपरीतं जगत् चालयितुमर्हन्ति, नान्ये। त्रिविधबाधातिक्रमणार्थं तिस्रः शक्तयः कार्यकारिण्यो भवन्ति। यद्यपि दैवीमीमांसादर्शनेऽवतारविज्ञानं सविस्तरं प्रपञ्चितम्, तथापि एतत्सूत्रोक्तविज्ञानद्वाराऽपि विज्ञानमवतारतत्त्वस्य रहस्यं च प्रकाशितमास्ते। भगवदवतारा ऋषीणां देवानां चावतारा एतादृशशक्तिसंयुक्ताः समष्टिकर्मविपरीतमपि संसारकल्याणमनुष्ठातुमर्हन्ति। प्रसङ्गेऽत्र बह्व्यः शंका उद्भवन्ति। तथा हि—किं जगतो विशिष्टा उपकारा न सन्ति समष्टिकर्माधीनाः? यदि सन्ति, तर्हि तदर्थं त्रिविधशक्तिसंयुक्तमहापुरुषाणामाविर्भावस्य काऽऽवश्यकतेत्यादि। समाधत्ते—पूर्वापरसम्बन्धमन्तरेण काचिदपि क्रिया फलवती न जायते। यथा पक्षद्वयं विना पक्षी नोड्डीयते, तथैव प्रारब्धपुरुषार्थयोरुभयोः साहाय्यमन्तरेण समष्टिरूपं व्यष्टिभूतं वा कर्म फलीभूतं न भवति। अन्यच्च समष्टिकर्म व्यष्टिकर्म चान्योन्यसम्बद्धम्। समष्टिकर्मवेगेन कालः समुत्पद्यते। तत्र काले समुत्पद्यमाना मानवा अपि तदुपयुक्तप्रारब्धशालिनो जायन्ते। अतः कस्यचन महापुरुषस्याविर्भावोऽपि समष्टिव्यष्टिकर्मकलापेन न्यूनाधिकरूपतः सम्बद्धो भवति। इयानेव भेदो यदुयो हि महापुरुषः कालविपरीतं किल मानवसमाजं नेतुं प्रभवति नासौ साधारणो मानवः। वस्तुतः पूर्वापरसम्बन्धादृते न जायते कस्यचिदपि कार्यस्य संसिद्धिः। अतोऽसाधारणशक्ति-

सम्पन्नमहापुरुषानुष्ठीयमानकार्येषु दैवीप्रेरणा, समष्टिकर्म च प्रधानं कारणं भवितुमर्हति । अत्र त्रिविधबाधासहनशक्तिरवश्यं भवेत् । साधारणो मानवस्तु त्रिविधबाधायाः कथैव का, एकयैव बाधया लक्ष्यपरिभ्रष्टो जायते । असाधारणशक्तिसम्पन्नो महापुरुषस्तु महत्यां बाधायां समुत्पन्नायामपि लक्ष्यच्युतो न भवति । इदमेव तद्वैशिष्ट्यम् । अत्रापि जिज्ञासुः शंकते – यत् समष्टिकर्म काल-श्च यद्येकसम्बन्धयुक्तौ, समष्टिकर्मसम्बन्धसंयुक्तो महापुरुषोऽपि तदानीं तत्पुरुषार्थगतिः कथमिव कालविरुद्धा ? समाधत्ते-समष्टि-कर्मणः साधारणवेगेन कालः समुत्पद्यते । समष्टिकर्मविशिष्ट-वेगेन सह तादृशमहापुरुषाणां सम्बन्धः, अन्यच्च समष्टिकर्मानु-सारेण महात्मनां भेदोऽपि जायते । श्रीमतो भगवतः पूर्णाव-ताराः, अंशावताराः, आवेशावताराः, देवानाम् ऋषीणां च पूर्णां-शावेशावताराः, ईशकोटयो जीवन्मुक्ताः, शक्तिशालिनो गुरव आचा-र्याश्चैतदुदाहरणम् ॥ ११६ ॥

प्रसंगाल्लक्षणमुच्यते—

ज्ञानसिद्धिबलात्मकं तत् ॥ ११७ ॥

ज्ञानं सिद्धिर्बलं च आत्मा यस्य तत् तादृशं तत्पूर्वोक्तं भवति । त्रिविधशक्तिविज्ञानं परिलक्षयितुं महर्षिः पूज्यपादः सूत्रकारः सूत्र-मिदमाविश्चकार । ज्ञानं तत्त्वज्ञानादि सिद्धिर्दैवशक्तिः, बलं स्वा-स्थ्यं वीर्यं वा, एतत्त्रितयं क्रमश ऋषिदेवपितृकृपाजन्यमवधेयम् । भगवदवतारेषु एतत्त्रितयशक्तीनां वैशिष्ट्यं तिष्ठति, अन्यत्र साधारणाधिकारवति मानवे तासां यथाक्रममसम्पूर्णतैव प्रत्यक्षी-क्रियते ॥ ११७ ॥

शक्तिसम्बन्धेनावतारमहत्त्वं व्याचष्टे—

महत्त्वमतोऽवतारस्य ॥ ११८ ॥

अस्मादेव कारणादवतारस्य महत्त्वमवगम्यते। त्रिविधशक्ति-विशेषविकासादेवावतारस्य महत्त्वं वेदशास्त्रेषु प्रतिपादित-मास्ते। मनुष्यविभूतिमत्स्ववावतारविभूतिमत्स्वपि भेदः। तथैव देवर्षिपित्रवतारेष्वपि विभेदः। एतद्विशिष्टमहत्त्वादेव हेतोरवतार-वैशिष्ट्यम् सर्वशास्त्रसम्मतमवधेयम्। यत्र मानवदेवशक्तयश्च कार्यमनुष्ठातुं न प्रभवन्ति, तत्र सृष्टिरक्षकस्य सगुणब्रह्मस्वरूपस्य भगवतो विष्णोरवताराः प्रकटीभूय सृष्टिरक्षायां सफलकामा जायन्ते। माध्यमिककार्यवेगमवरोद्धुं वसुरुद्रादित्येन्द्रयमादिदेवा-नामवतारा कृतकार्या भवन्ति, किन्तु साधारणकर्मवेगं दूरीकर्तुं विभूतिभूता एव समर्थाः सन्ति। ज्ञानविकाशसम्बन्धे ऋषीणामव-तारा एव भगवत्कार्यमनुतिष्ठन्ति। अतोऽवतारवैशिष्ट्यमित्यत्र न सन्देहलवः ॥ ११८ ॥

शक्तिप्रसंगाद् भगवदवतारविज्ञानं प्रतिपाद्यते—

**भगवतोऽसौ त्रिविधपूर्णः ॥ ११९ ॥**

भगवतः परमेश्वरस्यासावतारस्त्रिविधैर्भावैः परिपूर्णोऽवगन्तव्यः। भगवति त्रिविधभावपूर्णता विद्यते। यथा स्वस्वरूपे त्रिविधाना-मपि सच्चिदानन्दभावानामेकाधारे परिपूर्णता दृश्यते, तथैव सगुण-ब्रह्मणि परमेश्वरेऽपि तत्पूर्णविकासः। अतएव स्वप्रकृतिव्यक्त-दशायामसौ ब्रह्मेशविराड्रूपाख्यै निजैस्त्रिभिरपि भावैर्भक्तेभ्यो दर्शनं ददाति। सुतरां धर्मरक्षाऽधर्मविनाशनिमित्तं यदा भगवदव-तारा जगत्सु प्रादुर्भवन्ति, तदानीं त्रिविधशक्तिविकाशः स्वतः सिद्धः। भगवतः पूर्णावतारे श्रीकृष्णचन्द्रेऽध्यात्माधिदैवाधिभूतश-क्तीनां तिसृणामपि पूर्णविकाशलक्षणं तदीयालौकिकचरित्रपर्यालो-चनयाऽभ्युपगम्यते। अवतारे तत्तारतम्ये विद्यमानेऽपि शक्तित्रय-विद्यमानता तिष्ठत्येव ॥ ११९ ॥

अन्यविषये प्रणिगद्यते—

देवर्ष्योरन्यथाभावे ॥ १२० ॥

अन्यथाभावे तद्वैपरीत्ये देवानाम् ऋषीणां चाप्यवतारा: सम्भवन्ति । दैवकार्यसम्पादनाय दैवजगत्सञ्चालनाय च भगवत्सम्बन्धनिबन्धना देवा निर्दिष्टाः । ज्ञानचालका ऋषयः, कर्मचालका देवाः, स्थूलपाञ्चभौतिकजगच्चालकाः पितरश्च । किन्तु दैवीमीमांसाद्वारा निर्णीतमेतद् यत् पितॄणामवतारः स्वतन्त्ररूपेण नाविर्भवति । सत्यावश्यकत्वे मातुः पितुः वा द्वारेणैव तत्कार्यं सम्पद्यते । परन्तु नित्यानाम् ऋषीणां देवानाञ्चावतारा यथावश्यकं संसारे प्रादुर्भवन्ति । श्रीभगवतो देवर्षीणाञ्चावतारेषु भेद एतावानेव यद् भगवदवतारेषु त्रिविधशक्तीनां विकाशो, न देवर्षीणामवतारे तिष्ठति । वैशिष्ट्याद्धेतोर् ऋषीणामवतारेषु अध्यात्मशक्तेः देवानामवतारेषु चाधिदैवशक्तेर्विकाशस्तिष्ठति । कुत्रचित् शक्तिद्वयविकाशोऽपि दृश्यते ॥ १२० ॥

अन्यथा कथङ्कारं कार्यसिद्धिरित्युच्यते—

विभूतिर्वा ॥ १२१ ॥

अन्यथा भगवदवतारावश्यकताभावे, या विभूतिस्तयैव कार्यं सम्पाद्यतइत्यर्थः ॥ शक्तेः कलाः किल षोड़शभागैर्विभक्ता इतिदैवीमीमांसादर्शनसिद्धान्तः । एककलातः पञ्चमीं कलां यावत् जीवश्रेणयः षष्ठीमारभ्याष्टमीं यावद् विभूतिश्रेणयः, नवमीमारभ्य षोडशीं यावदवतारश्रेणयो विज्ञातव्याः । यत्राऽध्यात्माधिदैवाधिभूतशक्तिषु प्रत्येकस्याः शक्तेः षोड़शषोड़शकला विकसत्यसौ पूर्णावतारः । भगवदवतारावश्यकत्वाभावे विभूतिद्वारैव कार्यसिद्धिः ॥ १२१ ॥

अवतारविज्ञानमुक्त्वा प्रकृतमभिधत्ते—

द्विविधाऽतिवाहिकगतिः ॥ १२२ ॥

आतिवाहिकी गतिर्द्विप्रकाराऽवधेया। अभ्युदयनिःश्रेयसप्रसङ्गतो जन्मान्तरगतिर्नूनमवगन्तव्या। लोकान्तरे वहनकारिणी गतिरातिवाहिकी प्रोच्यते। तदानीं प्राप्तं शरीरं चातिवाहिकमुच्यते। अभ्युदयो निःश्रेयसश्चेति यथाधर्मस्य फलद्वयम्, तथैव गतिरपि द्विविधा। एकाऽभ्युदयकारिणी द्वितीया च निःश्रेयसविधायिनी चेति ॥ १२२ ॥

तत्र प्रथमोच्यते—

ऊर्द्ध्वपरा शुक्ला ॥ १२३ ॥

शुक्ला गतिरूर्द्ध्वपरा ऊर्द्ध्वगामिनी भवति। गत्या सहैवाबाधरूपेणात्मनो ज्ञानस्य च प्रकाशो बोभूयते स्थिररूपतो दैवं साहाय्यमप्यधिगम्यते। इयमात्मज्ञानप्रकाशिकेति तस्या नाम शुक्लेति। तथा हि गीतोपनिषदि—

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ।। इति ॥

तात्पर्यमिदं यत् शुक्लगतौ तदुक्तकालमाश्रित्य शरीरं त्यजता सद्गतिर्लभ्यते, किं वाऽसद्भिरपि सद्गतिसाहाय्यं प्राप्यते। सूक्ष्मस्य जगतोरहस्यमन्यदेव। उपर्युक्ताः कालाः प्रकाशमयाः। तदधिष्ठातारो देवा यथाक्रमं जीवेभ्यः साहाय्यं ददतः सूर्यमण्डलं यावत् जीवान् प्रापयन्ति। यतः सूर्यमण्डलावधिगमने कालस्य क्रमस्य चापेक्षा तिष्ठति। अतोऽत्र दैवसहायता हितकरी ॥ १२३ ॥

तद्भेदानाह—

सा त्रिविधा ध्यानत्रैविध्यात् ॥ १२४ ॥

ध्यानस्य त्रैविध्यात् त्रिप्रकारकत्वात् सा शुक्ला गतिरपि त्रिविधा विज्ञेया। ज्ञानिनो भक्तास्त्रिभिः स्वरूपैर्भगवन्तं ध्यायन्ति। ब्रह्म-ध्यानमध्यात्म, ईशध्यानमधिदैवम्, विराड्ध्यानमधिभूतमिति। इतित्रिविधध्यानपद्धतिमनुसृत्य कर्मगतिवेत्तारो धर्माचार्याः शुक्लां गतिमपि त्रिविधां वर्णयन्ति। वेदोपासनाकाण्डीयदैवीमीमांसादर्शने त्रिविधध्यानस्य विस्तृतविवेचनं विहितमास्ते। यद्यपि ध्यानत्रैवि-ध्येऽप्येकतैवास्ते, किन्तु त्रयाणामपि भूमौ भेदस्य सद्भावः। एत-दलौकिकभेदत्रैविध्यमनुसृत्य शुक्लागतेरपि भेदत्रयम्। तत्रैका सा, यत्र स्थूलशरीरान्ते सिद्धकोटिमासाद्य महात्मपदवाच्यतामधिगच्छन् देवशरीरं दधानो लोकानां कल्याणे रतः सन् महापुरुषो वासनापरि-पाके ब्रह्मीभवति। द्वितीया गतिः सारूप्यादिमुक्तिसम्बन्धिनी। अत्र भक्तमानवा विष्णुसारूप्यं शिवसारूप्यं वा समधिगत्य स्वेष्टदेवेन सह ब्रह्मीभवन्ति। तृतीया तु सा, यत्र साधकैस्त्वरितमेव सप्तमलोकमा-साद्य सूर्यमण्डलं भेदयन् ब्रह्मभावमापद्यते। एतत्त्रिविधगतिवर्णनं वेदशास्त्रपुराणेषु समुपलभ्यते। सिद्धानां महात्मनां च वर्णनं योग-दर्शने सुस्पष्टम्। सारूप्यसामीप्यादिमुक्तिवर्णनं भक्तिशास्त्रे दैवी-मीमांसादर्शने च सविस्तरं प्रपञ्चितम्। तृतीयदशायाः सविस्तरं रहस्यमुपनिषत्सु समुपवर्णितम्। त्रिविधस्य ध्यानस्य पृथक्पृथ-गधिकारवान् निर्णीतः। प्रथमे जगदेव ब्रह्मेति ज्ञानेन जगत्कल्याण-प्रवृत्तिः, द्वितीये ब्रह्मैव जगदिति ज्ञानमनुसृत्योपासनाप्रवृत्तिः सुर-क्षिता तिष्ठति। तृतीयेऽहमस्मि ब्रह्मेति ज्ञानानुसारेण ब्रह्मसद्भाव-दशा परिपूर्णा तिष्ठति। वस्तुतः संस्कारभेदादेतत् त्रिविधावस्था-भेदः। फले तु तिसृणामेकतैव विज्ञेया ॥ १२४ ॥

विज्ञानमेतत् परिपोषयति —

**सिद्धानामेषा ॥ १२५ ॥**

एषा शुक्ला गतिः सिद्धानां सिद्धपुरुषाणां विज्ञातव्या। उपर्युक्त-त्रिविधावस्थासु कालक्रमयोर्भेदः। किन्तु तिस्रोऽपि ता अबाधरूपेण-मुक्तेरुत्पादिकाः। तिसृष्वपि कामप्येकां गतिमासादयन् जीवः शिवो जायते। स च सिद्धिकोटिम् आसाद्य नियमेनाग्रेसरन् ब्रह्म भवति। एतासु कामप्येकां गतिमासादयतो न भवति जीवस्याधः-पतनम्। तदीयं गतागतचक्रमपि भिद्यते। एताः सिद्धानां गतय इत्यत्र नास्ति सन्देहः ॥ १२५ ॥

विशेषतः स्पष्टयति—

## मुक्तिरेतया क्रमशः ॥ १२६ ॥

एतया त्रिप्रकारया शुक्लगत्या क्रमशो मुक्तिर्जायते। तिसृष्वपि कालक्रमयोर्भेदः। तिस्रोऽप्यबाधरूपतो मोक्षदायिन्यः। प्रथमायां जगद्धितकरकार्यंनुतिष्ठन्तो महात्मानः सिद्धा अन्तर्जगति निवसन्तो दैवेषु राज्येष्वग्रेसरन्ति। द्वितीयायां सामीप्यसारूप्यादिमोक्षानन्द-मनुभवन्तोऽग्रेगच्छन्ति। तृतीयायां सप्तमलोकमवाप्याग्रेसरतामाप-द्यन्ते। तिसृष्वपि पतनसम्भावना नास्ति। पूर्वोक्तशुक्लगत्या दैवी-सहायता लभ्यते। तिसृष्वपि तासु न्यूनाधिककालसम्बन्धः, किन्तु कैवल्याधिगमो निश्चयः ॥ १२६ ॥

तद्विज्ञानं पुनः स्पष्टयति—

## सप्तमे सूर्यमण्डलभेदनम् ॥ १२७ ॥

सप्तमे सूर्यमण्डलस्य भेदनं जायते। जैवकर्मानुसारेण मुक्ति-प्राप्तेरुपयोगिन्या यस्या गतेः प्राग्वर्णनमनुष्ठितम्। तदवान्तरभेदा यद्यपि त्रिभिर्भागैर्विभक्ताः परन्तु जैवकर्मानुसारेण या गतिरग्रेस-रति, तस्या अवसाने सप्तममूर्द्ध्वलोकं गत्वा सूर्यमण्डलं च भित्त्वा

ब्रह्मभावप्राप्तिर्जायते। यद्यपि जैवमैशं च कर्म परस्परसहायकत्वात् कदाचिदन्योन्यमपि मिलतः। उदाहरणरूपेण वक्तुं शक्यते यत् योगसाधनद्वारा कश्चिज्जनः सिद्धो भूत्वा महात्मपदमधिगतवान्। पुनरसौ कर्मणो वैचित्र्यात सिद्धकोटितो दैवकोटिमासादयितुमर्हति। तदानीं तस्योदूर्ध्वगतिरैशकर्माधीना जायते। एवंप्रकारेण यदि कर्मपद्धतिपरिवर्त्तनं न स्यात् तर्हि सप्तमलोकमवाप्य सूर्यमण्डलभेदस्यावश्यकता जायते।

सप्तमलोकस्य सूर्यमण्डलस्य च विषये जिज्ञासुहृदयसमाविर्भूतशंकानां समाहितिरुचिता। सा चेत्थम्—चतुर्दशभुवनानां सविस्तरं वर्णनं दैवीमीमांसादर्शने समुपलभ्यते। एकब्रह्माण्डीयचतुर्दशभुवनेषु ऊदूर्ध्वस्थितसप्तसु भुवनेषु सर्वोच्चं यद्भुवनं तदेव सप्तमं भुवनं विज्ञातव्यम्। तस्य महिमा वेदशास्त्रेषु सर्वातिशायी समुपवर्णितः। ब्रह्मणो रात्रौ सप्ताधोलोका ऊपरिस्थिता अपि केचिल्लोका विनश्यन्ति। विष्णुरात्रौ ततोऽप्यधिका ऊदूर्ध्वलोका नाशमायान्ति। परन्तु सप्तम ऊदूर्ध्वलोकः शिवस्यापि रात्रौ तिष्ठतीत्यनेनैव तस्य ज्ञानगरिम्ण आध्यात्मिक्याः परिपूर्णतायाश्च परिचयो भवितुमर्हति। त्रिमूर्त्तिसंज्ञकानां ब्रह्मविष्णुरुद्राणां निद्राकालेऽपि यो हि लोकस्तिष्ठति, यन्निवासिनो महात्मानश्च स्वीयां जागर्त्तिं न त्यजन्ति, लोकोऽसावात्मज्ञानविचारतः परिपूर्ण इत्यत्र कः सन्देहः। शुक्लगतिं प्राप्ताः सिद्धपुरुषास्तदुन्नततमं लोकमधिवसन्तो ब्रह्मपदे विलीयन्त इत्यत्रापि नास्ति सन्देहः। सूर्यलोकः किलैकस्य ब्रह्माण्डस्योत्तमाङ्गभूतः शिरःस्थानीयो वा। सूर्यशक्तिरेवान्धकारमपसार्य ब्रह्माण्डीयलोकान् परिरक्षति। आधिभौतिकाधिदैविकाध्यात्मिकादित्रिविधभेदमनुसृत्य तस्यापि सूर्यलोकः सूर्यदेवः सूर्यमण्डलं चेति त्रयो भेदाः। स्थूलमन्धकारं दूरीकर्त्तुं यथैकमात्रप्रकाशपूर्णाधारस्वरूपः सूर्यलोकोऽवलम्बनीयः, यथा च मलिनं कर्मापसारयितुं समुज्ज्वलकर्मफलेनात्मज्ञान-

प्रकाशने चैकः सूर्यदेव एव समर्थः, तथैव कारणशरीरमपि समूलं नाशयित्वा जीवात्मानं स्वस्वरूपे विलयं विधातुं सूर्यमण्डलमेवैकमात्रं सहायकम। तमः प्रणाश्य प्रकाशमाविर्भावयितुं स्वस्वाधिकारमनुसृत्य सूर्यलोकः सूर्यदेवः, सूर्यमण्डलं च साहाय्यमाचरन्ति। परन्तु अज्ञानजनन्या अविद्यायाः प्रभावं समूलं भस्मासात्कर्त्तुमस्मितोत्पादककारणशरीरञ्चापि भस्मीकर्त्तुं सूर्यमण्डलमेव प्रभवति। सूर्यमण्डलस्य साहाय्येनैव तृतीयज्ञाननेत्रद्वारा मूलपुरुषस्य मूलप्रकृतेश्च स्वतन्त्रदर्शनं तत्त्वज्ञानिनो महापुरुषाः कुर्वन्ति। समष्टिमहत्तत्त्वाधारेऽनन्तकोटिसूर्यतेजसामुदाहरणैर्वेदवर्णितस्यात्मना प्रतिबिम्बितं मण्डलमेव सूर्यमण्डलमुच्यते, तद्विभिद्यैव जीवः शिवत्वमाप्नोति। सप्तमे लोके समासादिते मलविक्षेपयोस्तु पूर्णरीत्या नाशो भवत्येव। ततश्च सूर्यमण्डलभेदनकाले स्वकीयावरणस्य च पूर्णरीत्या नाशे जीवः समुद्रे आकाशपतितवारिविन्दुरिव स्वस्वरूपे विलीयते। एतदेव मनोवाग्बुद्ध्यतीतं सप्तमलोकभेदनरहस्यमवधेयम् ॥ १२७ ॥

द्वितीयां गतिं वर्णयति—

**भोगमुख्या कृष्णा ॥ १२८ ॥**

कृष्णागतिर्भोगमुख्या भोगप्रधानेत्यर्थः। प्रथमा गतिर्यथामुक्तिदायिनी, तथैव द्वितीया कृष्णागतिः सुखदुःखमयभोगप्रदायिनी। इयं हि सुखदुःखभोगोत्पादिका मुक्तिबाधिकाचेत्यतः कृष्णा समाख्याता। उक्तं च गीतोपनिषदि—

धूमोरात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते, इति ॥ १२८ ॥

तद्भेदमाचष्टे—

**त्रैविध्यमस्या धारणात्रैविध्यात् ॥ १२९ ॥**

अस्याः कृष्णाया गतेर्धारणात्रैविध्यात् त्रैविध्यमवगन्तव्यम् । सद्गुरुतज्ज्ञानसम्भूतभगवद्ध्यानविचारतो यथा मुक्तिप्रदायिन्याः शुक्लगतेर्भेदा यथापूर्वमुपवर्णितास्तथैवाज्ञानसम्भूतदेहात्मवादसम्बन्धयुक्ता बन्धनदशाप्राप्तिहेतुभूता कृष्णागतिश्चापि क्लिष्टान्तःकरणत्रिविधमलिनधारणाभिस्त्रिविधा परिज्ञेया । एका स्थूलशरीरमयी. द्वितीया सूक्ष्मसंस्कारमयी, तृतीया धारणाऽभावरूपा चित्तस्य मूर्च्छावृत्तोति । एतत्त्रितयमनुसृत्यैव मलिनधारणायास्तिस्रः श्रेण्यो निर्धारिताः । तासां सविस्तरं वर्णनमग्रे समनुष्ठास्यते ॥ १२९ ॥

तिसृष्वेकाया लक्षणमुच्यते—

## तृणजलौकावत् ॥ १३० ॥

तिसृष्वप्येका तृणजलौकावत् परिबोध्या । तृणजलौका निजदेहपरिधिद्वयेन सञ्चलति । शरीरस्यैकां परिधिं तदा समुत्थापयति, यदा द्वितीयामन्यत्र संस्थापयति, तथैवेयं गतिरवगन्तव्या । अस्यां गतौ पतितो जीवः स्वशरीरान्निर्गमनकाले किमप्यन्यत् स्थूलं शरीरं गृह्णन् पूर्वदेहं परित्यजति । तात्पर्यमेतद् यत् गमागमचक्रपतितेन येन जीवेन स्वकर्मानुसारामियं गतिर्लभ्यते, सहि स्वस्थूलशरीरपरित्यागकाले मातृगर्भसमुत्पन्नशरीरान्तरमाश्रित्य प्राथमिकं निजदेहं परित्यजति । गतिरियं जीवेन कदाचिल्लभ्यते न सर्वदा । शंकासमाधानार्थमुच्यते यत् अन्तिमे समये शरीरपरित्यागकाले मातृगर्भस्थशरीरान्तरमभिलक्ष्य स्वदेहं परित्यजति, एतदेव शरीरान्तरग्रहणमुच्यते । अन्यत्र तथा भविष्यद् परिज्ञानं लक्ष्यं वा जीवस्य नैव जायते । अन्यच्च गतावत्र तेन कर्मजं निजशरीरं त्वरितमेव समासाद्यते । सर्वश्रेष्ठत्वादियं गतिः प्रथममुपवर्णिता ॥ १३० ॥

द्वितीयोपवर्ण्यते—

स्वर्निरयपरा ॥ १३१ ॥

द्वितीया स्वर्गनरकपरायणा विज्ञेया। अत्र स्थूलशरीरं परित्यजतो जीवस्य स्वर्गनरकयोः कर्मानुसारं प्राप्तिर्जायते। पुण्याधिक्ये पूर्वं नरके, पापाधिक्ये च पूर्वं स्वर्गे ततश्च निरये गम्यते। स्वर्गार्थं देवदूता नरकाय च यमदूतास्तेन सह व्रजन्ति। कदाचिदेतदपि सम्भवति यत् केवले पुण्ये स्वर्गस्य पापे च नरकस्याधिगमः। परन्तु तदीयमावागमनचक्रं परिभ्राम्यत्येव ॥ १३१ ॥

तृतीया श्रेणिर्निगद्यते—

मूर्च्छावती ॥ १३२ ॥

कृष्णाया गतेस्तृतीयाश्रेणिस्तु मूर्च्छावती विज्ञेया। इयं प्रेतलोकं प्रापयति। प्रेतलोकविज्ञानं प्रागेव सविस्तरं प्रपञ्चितम्। स्थूलशरीर-परित्यागकाले सूक्ष्मशरीरस्य मूर्च्छायामियं गतिर्जीवेन प्राप्यते। मूर्च्छाऽपि द्विविधा स्थूलशरीरस्य प्रबलाघातेन सूक्ष्मशरीरस्य चेति परद्वारा हननेन, स्वयं पतित्वा वा, जले निमज्ज्य वा पावके दग्ध्वा वा आत्महत्यया वा मृत्युः स्थूलशरीरजन्यो विज्ञेयः। अत्रोत्पन्ना मूर्च्छा स्थूलशरीरजन्या बलीयसा मोहेन कामेन, क्रोधेन लोभेन वा मरणं सूक्ष्मशरीरजनितमवधेयम्। अत्रत्या मूर्च्छा सूक्ष्मशरीरजनिता एवं प्रकारेणासाधारणाघातेन स्थूलं शरीरं परित्यजन् जीवो मूर्च्छा-मवाप्नोति, अतो गतिरियमधिगम्यते, एतन्मूर्च्छावस्थाविमुक्त्यर्थं प्रेतश्राद्धमनुष्ठीयते। गतावत्र जीवो यमदूतवेतालादिभिर्नीयते ॥१३२॥

एतद्विज्ञानस्य पुष्टिं करोति—

एतया पुनरावृत्तिः ॥ १३३ ॥

एतया कृष्णगत्या पुनरावृत्तिर्निश्चिता। शुक्लगतेस्त्रिविधास्वप्यवस्थासु न भवति पुनरावर्त्तनम्, किन्तु कृष्णायास्त्रिविधास्ववस्थासु पुनरावर्त्तनं निश्चप्रचम्। पूर्वोक्तशुक्लगतेः कस्याञ्चिदप्यवस्थायामलौकिककार्यसम्पादनाय मृत्युलोकमागतेष्वपि सिद्धमहात्मसु नैव तेषां मुक्तौ काचिदपि बाधा। तेषां जन्मकर्माण्यलौकिकानि भवन्ति, न वा तेषामात्मज्ञानं विलुप्यते। चक्रभेदनत्वान्न तेषां पुनरावृत्तिः, कृष्णगतिमवलम्बमानानां गमागमचक्रस्य वर्त्तमानत्वात्पुनरागमो मृत्युलोकेऽवश्यम्भावी, बन्धनदशायां यथावत् स्थितिरपि निश्चितैव। अतएव कृष्णगत्या पुनरावर्त्तनसम्बन्धः स्थिर इत्येतत्सूत्रनिर्गलितोऽर्थः॥ १३३॥

इदानीं शुक्लकृष्णयोर्व्यतिरिक्ता चैका तृतीया गतिरुदीर्यते—

## विशिष्टा जीवन्मुक्तगतिः। १३४॥

जीवन्मुक्तानां गतिः शुक्लकृष्णयोरतिरिक्ता काचिद्विलक्षणैव विज्ञेया। पूर्वोक्तकृष्णा शुक्ला वा गतिरातिवाहिक्यौ। नेयं तादृशी, मानवस्थूलशरीरे जीवस्य विद्यमानत्वेऽत्र मृत्युलोके गतिरियं प्राप्यते॥ १३४॥

एतद्विज्ञानपुष्टिः क्रियते—

## सहजा सा॥ १३५॥

सा जीवन्मुक्तगतिः सहजा प्रोच्यते। सहजकर्माश्रयेण गतिरियमधिगम्यते। कृष्णशुक्लयोरातिवाहिक्यौ गती जैवेन कर्मणा प्राप्येते, किन्तु सहजकर्मणोऽन्तिमावस्थायां जीवन्मुक्तगतेरधिगमः। उद्भिज्जस्वेदजाण्डजजरायुजेषु जीवः सहजकर्मबलेन कथमिव नियमितरूपेणाभ्युदयमधिकरोतीत्येतद्वर्णनं प्रागेवानुष्ठितम्। अनन्तरं च मानव-

योनौ सहजे कर्मणि निरुद्धे जैवकर्मणा गमागमचक्रं कथमुत्पद्यते इत्यपि पूर्वमेव प्रतिपादितम्। पूर्णावयवः पूर्णज्ञानवान् महापुरुषो यदा गमागमचक्रभेदे सामर्थ्यं लभमान आवागमनचक्रावर्त्तं परित्यज्य पुनः सहजकर्मणः सहजं प्रवाहं प्राप्नोति तदैव जीवन्मुक्तगतिरियमधिगम्यते, अतएवेयं सहजा। अत्रापि सूर्यमण्डलभेदो जायते किन्तु सप्तमलोकगमनावश्यकता नैव तिष्ठति॥ १३५॥

तस्या अन्यद् वैलक्षण्यं प्रतिपाद्यते—

## ज्ञानापेक्षत्वमस्याः॥ १३६॥

अस्या गते र्ज्ञानापेक्षा भवति। पूर्वोक्तशुक्लकृष्णयोर्यथा कर्मापेक्षा, न तथाऽत्र, अस्यां तु ज्ञानस्यापेक्षा। एकमात्रमात्मज्ञानबलेनैव कर्मपाशविरहिता जीवन्मुक्तमहापुरुषा गतिमिमामधिगच्छन्ति। ब्रह्मकोटिको जीवन्मुक्तः कर्मत्यागी सन् शारीरं कर्म कुर्यात्, किं वा ईशकोटिगो जीवन्मुक्तः जगद्हितकरकार्ये संलग्नः स्यात्, न तयोः कर्मापेक्षा। तयोः कर्म स्वाभाविकं कुलालचक्रवत् बोभूयते। सहजगतावत्र केवलमात्मज्ञानमेवावलम्बनं जायते॥ १३६॥

चतुर्थीमलौकिकीं गतिं वर्णयति—

## अन्याऽपि॥ १३७॥

शुक्लकृष्णसहजगतिव्यतिरिक्ता चैका गतिरन्याऽपि विद्यते, या केवलं देवलोकसम्बन्धनिबन्धना। इयमप्यातिवाहिकी गतिर्नोच्यते, अनयाऽलौकिकगत्या सहजस्य जैवस्य वा कर्मणो नास्ति सम्बन्धः। सूक्ष्मे दैवलोके पदस्य क्रमोन्नतिद्वारेण निःश्रेयसप्रदायिनीयमवगन्तव्या। क्रमशः पदोन्नतिद्वारा त्रिमूर्त्तिपदमधिगम्येयं समाप्ता जायते॥ १३७॥

तत्स्वरूपं निरूप्यते—

ऐशो नैशकर्मायत्तत्वात् ॥ १३८ ॥

ऐशस्य ईशकर्मण आयत्तत्वादधीनत्वात् सा गतिरैशीत्युच्यते। गतिरियमन्यविलक्षणा। वर्णनमेतस्या वेदशास्त्रेषु कदाचिदेवोपलभ्यते। विशेषाधिकारमासाद्य देवत्वमधिगतो जीवो मृत्युलोकेऽत्र पुनरावृत्तिसम्भावनाविरहात् कैवल्येनैशकर्माधीनतामधिगच्छन् गतिमिमां प्राप्नोति। अत एवेयमैशी गतिः प्रणिगद्यते। अनया देवेन्द्रत्वमादित्यवसुत्वमादिपदमवाप्य देवाः सगुणब्रह्मस्वरूपं त्रिमूर्त्तिपदं लभन्ते। गतिरियमतिदुर्लभा। कदाचित् शुक्लां गतिं प्राप्तः कांश्चन्महान् आत्मा ऐशीं गतिमधिकुर्वन् अन्ते च त्रिमूर्त्तिपदेषु किमप्येकमधिगच्छन् ब्रह्मीभावमापद्यते। महामहिमशाली राममक्तशिरोमणिर्हनूमान् भगवतो विश्वस्रजः पदं प्राप्स्यतीति पुराणादिशास्त्रेषु प्रतिपादितमुपलभ्यते। वस्तुतो गतिरियं लोकातिशायिनी जीवराज्यात् परा मनसोबुद्धेश्चातीताऽवगन्तव्या॥ १३८ ॥

पुनः प्रकृतविषयमनुसरति—

सर्वत्र कर्मापेक्ष्यम् ॥ १३९ ॥

सर्वत्र सृष्टेः सर्वावस्थासु स्थितेः, पूर्वोक्तप्रलयस्य वाऽवस्थायां सर्वत्रैव कर्मणोऽपेक्षता। कर्मणैव सृष्टिस्थितिलयानां मिश्रसम्बन्धः, तेनैव धर्माधर्मयो र्मिहिष्ठः सम्बन्धः, कर्मैव केवलं जैवैशसहजस्वरूपं संस्कारादिरूपं च बिभ्रत् ब्रह्माण्डं परिचालयति, प्रकृतिस्पन्दनप्रादुर्भूतगुणानां प्रकटयितृ सर्वादिभूतं कर्मैवास्ते, एतदेव बीजाङ्कुररूपेण सृष्टिधारां स्थितिशीलां विधत्ते, तदेव ब्रह्माण्डपिण्डलयहेतुः, चिज्जडग्रन्थिमयजीवत्वं कर्मैवोत्पादयति, तद्ग्रन्थिभेदं च विधत्ते, जीवब्रह्मणोरभेदस्वरूपामद्वैतसत्तां कर्मैवाधिगमयतीति हेतोः स्वीकर्त्तव्यमेवेदं यत् सर्वत्रैव कर्मणोऽपेक्षतेति॥ १३९ ॥

मुक्तिप्रसङ्गादुच्यते—

## कृष्णायां चक्रस्थैर्य्यम् ॥ १४० ॥

कृष्णायां गतौ चक्रमावागमनचक्रं स्थिरं जायते। अन्तिमस्यैतस्य पादस्य प्रवर्त्तनं निःश्रेयसार्थमेव, अतः सावधानतावलम्बनार्थमेव पूज्यपादो महर्षिः सूत्रकारः सूत्रमिदमाविर्भावयामास। मुक्तिपथपथिकैः सर्वदैवेदं स्मर्त्तव्यं यत् कृष्णागतिर्मुक्तिबाधिकेति। यतो ह्येतया गमागमचक्रं स्थिरतामापद्यते। अतः प्रयत्नपूर्वकमेतया साधकेनात्मा परिरक्षणीयः। जिज्ञासुरत्र शङ्कते—"शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" इत्युपनिषत्सारभूतगीतावाक्यस्य किं तात्पर्यम्? गतिरियं कृष्णाऽन्या वा? कृष्णा चेन्मुक्तिविरोधिनी न वा? समाधत्ते—यद्यपीयं गतिः कृष्णैव किन्तु सर्वथा शास्त्रविरोधिनी नास्ति। यस्य योगपूर्णताधिगमात् प्रागेव काचिद् वाधोपपद्यते, सा वाधा न तथा गरीयसी यया गमागमचक्रं परिपोषमीयात्, तदानीमसौ पुण्यात्मा जीवः पवित्राणां श्रीमतां गेहे योगिनां वा कुले जन्म गृह्णाति। तदा तेन प्रवृत्तिमार्गतो निवृत्तिमार्गाश्रयणावसरो लभ्यते। योगिकुलजन्मना तु त्वरितमेव निवृत्तिमार्गमाश्रयता पुण्यात्मना तेनैकस्मिन्नेव जन्मनि निःश्रेयसपदमवाप्यते। कृष्णगतेरन्तिमावस्थायां पुण्यात्मनाऽयमधिकारोऽधिगम्यते ॥ १४० ॥

अन्यच्च—

## तद्भेदसामर्थ्यमितरासाम् ॥ १४१ ॥

इतरासां कृष्णगतिभिन्नानां तद्भेदस्य आवागमनचक्रभेदनस्य सामर्थ्यं विद्यते। शुक्लगत्या प्रचुरपुण्यकर्मशक्तिविद्यमानतया देवलोकसाहाय्येन च गमनागमनचक्रे पतनस्य सम्भावना न विद्यते। जीवन्मुक्तसहजगतौ तु विद्यमानेऽपि स्थूलशरीरे चक्रभेदनसामर्थ्यं

प्राकट्यमापद्यते । ऐश्यामपि गतौ समुन्नतदेवपदप्राप्तिप्रभावात्, समुत्कृष्टा दैवी शक्तिरधिगम्यते, यया चक्रभेदनसामर्थ्यं स्वतः समुत्पद्यते । आत्मज्ञानमन्तरेण मुक्तेरसम्भवत्वात्तास्ववस्थासु किमात्मज्ञानाधिगमावसरस्तिष्ठति ? एतादृशशङ्कायाः समाधानमिदं यत् जीवन्मुक्तदशायामात्मज्ञानस्य परिपूर्णता सम्भवत्येव । अन्यावस्थास्वपि त्रिविधशुद्धिहेतुनाऽऽत्मज्ञानक्रमविकासस्य परिपूर्णसम्भावना जागर्ति ॥ १४१ ॥

कर्मच्छेदक्रमः प्रणिगद्यते—

**संस्कारशुद्ध्या क्रियाशुद्धिः ॥ १४२ ॥**

संस्कारस्य शुद्ध्या क्रियाशुद्धिर्जायते । संस्कारशुद्धेः सविस्तरं वर्णनं संस्कारपादे समनुष्ठितम् । अस्वाभाविकसंस्कारस्य स्वाभाविकसंस्कारस्वरूपपरिणामात् क्रियाशुद्धिर्जायते यथा यथा संस्कारशुद्धिस्तथातथैव क्रियाशुद्धिरपि जायते ॥ १४२ ॥

ततः किं स्यादित्युच्यते—

**तया मोक्षः ॥ १४३ ॥**

तया क्रियाशुद्ध्या मोक्षो जायते । अशुद्धं कर्म गमागमं चक्रं स्थितिशीलं विदधाति । शुद्धं कर्म चक्रभेदने सहायकं बोभवीति । रागद्वेषाभिनिवेशैरासक्त्या च समुत्पन्नं मिश्रकर्माशुद्धमित्युच्यते, तच्च शुभाशुभभोगमुत्पादयति । सद्भावसंयुक्तैः समनुष्ठीयमानमात्मज्ञानप्रकाशकं शुद्धमिति कथ्यते । तत्त्वज्ञानी महात्मा यदानीमशुद्धकर्मपरित्यागपूर्वकं शुद्धकर्मणि रमते तदानीं क्रियाशुद्धिद्वारा चक्रभेदनेन कैवल्यपदमुदेति यथायथा मानवो महापुरुषः शुद्धकर्माधिकारमधिकरोति तथातथा वासनानाशतोऽसौ सात्त्विकं ज्ञानं सात्त्विकीं धृतिमुदारतां चाधिकुर्वन् सात्त्विकबुद्धिसम्पन्नो भूत्वाऽऽत्मज्ञानं लभते येन स्वरूपोपलब्ध्या निःश्रेयसमधिगच्छति ॥ १४३ ॥

तदुपायं निर्दिशति—

सा तु कालक्रियाद्रव्यैः ॥ १४४ ॥

सा हि क्रियाशुद्धिः कालेन क्रियया द्रव्येण च समुपलभ्यते। क्रियाशुद्धौ कालस्य साधनस्य चापेक्षा। विना कालं साधनं नोपपद्यते। पदार्थमन्तरेण साधनसौविध्यमप्यसम्भवम्। अभ्युदयनिःश्रेयसकरं कार्यमेव साधनम्। तत्सम्पादनमुत्तमेन प्रकारेण तदैव सम्भवति, यदा आवश्यकतानुसारेण यथेष्टं कालो लभ्येत, कर्मणि च बाधा नोद्भवेत्। साधनोपयोगिपदार्थानामप्यानुकूल्यमावश्यकम्। उदाहरणरूपेण अवगन्तव्यं यत् कस्यापि यज्ञस्यानुष्ठानाय यज्ञीयपदार्थानां, दक्षिणार्थधनस्य, स्वशरीररक्षायै भोजनवस्त्रादीनामपि प्रयोजनीयतोपपद्यते एवं हि यथेष्टकालक्रियाद्रव्यैः शुद्धकर्मानुष्ठानं कर्त्तुं शक्यते ॥ १४४ ॥

प्रसङ्गतः संस्कारशुद्धिमहत्त्वं निर्दिशति—

संस्कारशुद्ध्याऽसदपि सत् ॥ १४५ ॥

संस्कारस्य शुद्ध्या असत् कर्मापि सज्जायते। संस्कारशुद्ध्या किलाशुद्धकर्मणः शुद्धकर्मस्वरूपपरिणमने साहाय्यं लभ्यते, भावशुद्ध्या पापं कर्मापि कथमिव पुण्यकर्मस्वरूपं धत्त इत्यस्य वर्णनं प्रागेव सम्पन्नम् ॥ १४५ ॥

विज्ञानं सुस्पष्टयितुमाचष्टे—

शुद्धित्रैविध्यं दानस्य ॥ १४६ ॥

दानस्य शुद्धित्रैविध्यं बोध्यम्। क्रियाशुद्धिः कथं जायते, तथा च क्रमशः शुद्धकर्माधिकारः कथमवाप्यते इत्यस्योदाहरणायैव पूज्यपादो महर्षिः सूत्रकारः सूत्रमिदमाविश्चकार। क्रियाशुद्ध्या मोक्षाधि-

मम इति प्रागेव निरूपितम् । ततश्च संस्कारशुद्ध्या प्रभूतबलशालिफलावाप्तिरपि पूर्वं प्रतिपादिता । उदाहृत्येदं प्रदर्श्यते यत् क्रियाशुद्धिः कथं सम्पद्यते इति । दानस्वरूपक्रियामभिलक्ष्य प्रतिपाद्यते यत् देशकालपात्रविचारेण क्रियमाणदानद्वाराऽऽधिभौतिकी शुद्धिः सम्पद्यते । तया च निःश्रेयसप्राप्त्यसम्भवेऽपि अभ्युदयाधिगति निश्चप्रचा । देशकालपात्रविचारेण क्रियमाणं दानं सकामं चेदभ्युदयं प्रयच्छति, निष्कामं चेन्निःश्रेयसमिति । तदेव यदि भगवत्स्मरणपूर्वकं स्यात् तद्द्वाराऽऽधिदैविकी शुद्धिः सम्पद्येत । यदि तत केवलं वाचनिकमेव न स्यात् सात्त्विकं भवेत् । वासनाराहित्येन परोपकारजगत्कल्याणधिया कर्त्तव्यबुद्ध्या च विधीयमानदानक्रियया अध्यात्मशुद्धिर्जायते । एवं हि त्रिविधशुद्धियुक्तदानक्रियानिःश्रेयसप्राप्तिहेतुरित्यत्र कः सन्देहः ? तथैव क्रियान्तरशुद्धिरहस्यमवधेयम् । एवं हि शुद्धं सर्वमपि कर्म मुक्तिकारणम् ॥ १४६ ॥

प्रकृतविषयं सुस्पष्टयति—

विचारस्मरणविध्यात्मकं तत् ॥ १४७ ॥

तत् देशकालपात्रस्वरूपं विचारात्मकं स्मरणात्मकं विध्यात्मकं च परिज्ञेयम् । तेषां विचारो हि विचारात्मकः प्रयोगः । जगत्कर्त्तुर्जगदाधारस्य जगदात्मनः श्रीमतो भगवतः स्मरणमेव प्रयोगः स्मरणात्मकः । निष्कामबुद्ध्या कर्त्तव्यधिया च वेदशास्त्रयोर्विधिमनुसृत्य च क्रियमाणं दानं विध्यात्मकमवधेयम् । जिज्ञासुरत्र शंकते—यत् अत्र विचारस्य प्रथमं विधेश्चान्ते निर्देशः कथं कृतः ? समाधत्ते—सर्वास्वपि क्रियासु दानक्रिया स्थूलातिस्थूला विद्यते । स्थूलक्रियायां विधेः प्राधान्येऽपि वासनानाशसम्बन्धात् विचाररूपसंकल्पस्य प्राधान्यं युक्तिसंगतमेव । अन्ते च भगवते फलसमर्पणरूपो विधिरपि सर्ववादिसम्मत एव ॥ १४७ ॥

साधारण्येन व्याचष्टे—

द्विविधं कर्म शुद्धमशुद्धञ्च ॥ १४८ ॥

शुद्धमशुद्धं चेति कर्मणो द्वैविध्यमवधेयम्। पूर्वोक्तत्रिविधशुद्धियुक्तं शुद्धं तद्भिन्नं चाशुद्धम्। यत्र कर्मणि त्रिविधायाः शुद्धेर्यावती न्यूनता, तथैव तत्कर्मापि तावन्मात्रमेवाशुद्धम्। यत्र च त्रिविधशुद्धेरत्यन्ताभावस्तत्पूर्णमशुद्धमवगन्तव्यम्। एवं हि शुद्धाशुद्धकर्मणो बहवो भेदा भवितुमर्हन्ति। एषु च पूर्णं शुद्धं कर्म सर्वाभ्यर्हितं पूर्णमशुद्धञ्च सर्वगर्हितमिति ॥ १४८ ॥

तत्फलं व्याचष्टे—

एकं चक्रभेदकमपरं तत्रावपातकम् ॥ १४९ ॥

एकं शुद्धं कर्म चक्रस्य गमनागमनचक्रस्य भेदकमपरमशुद्धं कर्म तत्र चक्रे निपातकं परिज्ञेयम्। अशुद्धेन कर्मणा संस्कारशुद्धेः सम्भावना नास्ति, यतस्तत्रास्वाभाविकाः संस्कारा जाग्रति। अन्यच्च कर्मणो मालिन्यसद्भावात् तत्र मलविक्षेपावरणानां त्रयाणामपि प्रभावस्थैर्यात् जीवो निरन्तरमावागमनचक्रे परिभ्रमति न च मोक्षमधिगच्छति। अपरं च शुद्धकर्माधिकारी कर्त्ता स्वाभाविकं संस्कारमधिकुर्वन् स्वकीयानां सर्वेषां कर्मणां त्रिविधां शुद्धिं सम्पादयन् सञ्चितक्रियमाणसंस्काराभ्यां विमुक्तः सानन्दं प्रारब्धमेव कर्म परिभुञ्जानो-निःश्रेयसपदमधिगच्छति ॥ १४९ ॥

मोक्षप्रसङ्गात्पुनरुच्यते—

एकतत्त्वसम्बन्धान्मुक्तिदो योगः ॥ १५० ॥

एकतत्त्वस्य सम्बन्धेन हेतुना योगो मुक्तिप्रदो ज्ञेयः। योगविषये स्मृतिशास्त्रेऽपि प्रतिपादितम्। तथाहि—

सा कर्मोपासना ज्ञान-काण्डत्रयविधानतः ।
त्रिविधैरधिकारैर्हि योगशक्तिस्त्रिधा मता ॥
यदेतल्लक्षणं गीतं योगः कर्म सुकौशलम् ।
तन्नूनं कर्मकाण्डीय-योगलक्षणमीरितम् ॥
चित्तवृत्तिनिरोधो वै योग एतद्धि लक्षणम् ।
विज्ञेयं सर्वथोपास्ति-काण्डयोगस्य निर्जराः ॥
अज्ञानजनितोपाधिं निःशेषमपनोद्य हि ।
एकत्वप्रतिपत्तिर्या योगः स्याच्छिन्नजीवयोः ॥
अस्त्येतज्ज्ञानकाण्डीय-योगलक्षणमद्भुतम् ॥

वस्तुतस्तु पूर्वोक्तं त्रिविधमपि योगलक्षणमेकत्वमेव समाश्रयति । आत्मानुसन्धानं लक्ष्यीकृत्य सुकौशलपूर्णकर्मानुष्ठानम्, स्वस्वरूपोपलब्धये चित्तवृत्तिनिरोधः, साधनद्वाराऽऽत्मज्ञानमवाप्य जीवात्मपरमात्मनोरेकत्वसम्पादनं चेति त्रयोऽपि योगा नैव परस्परं भिद्यन्ते । एकतत्त्वाभ्यास एतत्त्रयाणां मौलिकं रहस्यम् । एकतत्त्वयुक्तस्यात्मानुसन्धानं कुर्वतो योगसाधनं मुक्तिप्रदमित्यत्र कः सन्देहः ? ॥१५०॥

प्रसंगात् संगीतमहिमानं व्याचष्टे—

**अतः संगीतमभ्युदयाय ॥ १५१ ॥**

अतः कारणात् संगीतमभ्युदयप्रदमवगन्तव्यम् । स्वरविन्यासपूर्वकमलौकिकशब्दसृष्टिरेव संगीतमित्युच्यते । यद्यपि गान-वाद्य-नृत्यैरितित्रिविधैरङ्गैः परिपूर्णं संगीतमिति प्राहुस्तथापि तेषु गानस्यैव प्राधान्यम् । गानं प्रकृतिस्तालः पुरुषस्तयोः पारस्परिकसंयोगरूपशृङ्गारानन्देन नृत्योत्पत्तिरि शास्त्रकृतो वर्णयन्ति । यथा सृष्टौ प्रकृतिप्रधानता तथैव संगीते गानस्यैव प्राधान्यम् । तच्च गानं षड्ज-ऋषभ-गान्धारादिसप्तस्वरात्मकम् । एतेषामेव सप्तस्वराणामारोहावरोहापर-

नामकानुलोमविलोमद्वारा श्रुतिमूर्च्छनादिसाहाय्येन प्राचीने काले षोड़शसहस्रसंख्याकरागरागिणीनां प्रादुर्भावो बभूवेति शास्त्रसम्मतः सिद्धान्तः। मार्गीदेशीति द्विविधपद्धत्या गानं भागद्वयविभक्तम्। वैदिकी सामगायनपद्धतिर्हि मार्गीत्युच्यते, लौकिकी किल देशीति प्रणिगद्यते। सर्वत्रैव गायनपद्धतौ कण्ठतः स्वरोत्पत्तिकाले ह्येकतत्त्व-मुत्पद्यत इत्यत्र न सन्देहलेशः। स्वरस्य लयस्थानं प्रणवस्तस्य च स्वस्वरूपमित्यतः स्वरसंयुक्तगायनपद्धत्या एकतत्त्वोत्पत्तिरित्यसन्दि-ग्धम्। अतो गायनकाले गायकान्तःकरणस्यान्तर्मुखीनत्वाद्गानमभ्यु-दयकरं सिद्धम्। विषयेऽत्र पूज्यपादो योगिराजो महर्षियाज्ञवल्क्यो-ऽपि प्रोवाच—

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः।
तालज्ञश्चानायासेन मोक्षमार्गं नियच्छति॥
गीतज्ञो यदि योगेन नाप्नोति परमं पदम्।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते॥ १५१॥

पुनः प्रकृतविषयमनुसरति—

## शुद्धकर्मानुष्ठानं कर्मयोगः॥ १५२॥

शुद्धस्य कर्मणो यदनुष्ठानं तदेव कर्मयोगशब्दवाच्यम्। एतदेव कर्मकाण्डस्यान्तिमं साधनम्। तदेव प्रतिपादयितुं पूज्यचरणः सूत्र-कृन्महर्षिः सूत्रमेतदाविश्चकार। उदाहरणद्वारा सोपपत्तिकं शुद्धं कर्म प्रागेव समुपवर्णितम्। किमपि कर्म शुद्धिविज्ञानसंवलितं कर्त्तुर्निः-श्रेयसहेतुतामुपपद्यते। विचार-भगवत्स्मरणविधिद्वारा समनुष्ठितेन कर्मणैतेन मलविक्षेपावरणानां त्रयाणामेव प्रणाशो जायते। वासना-राहित्येन कर्त्तव्यकर्मविधानेन आत्मज्ञानप्राप्त्या नूनमेव निःश्रेयस-पदं समुदेति॥ १५२॥

अन्यच्चापि—

तदीयावस्था जीवन्मुक्तिः ॥ १५३ ॥

जीवन्मुक्तिः किल तस्यान्तिमा दशा वेद्या। सहजगतिः प्रागेव निर्दिष्टा। सा चास्यामवस्थायां लभ्यते। पूर्णरीत्या शुद्धकर्मानुष्ठानेन अस्वाभाविकसंस्कारविनाशपूर्वकं स्वाभाविकाः संस्काराः पूर्णरूपेण समुद्यन्ति। तदानीमसौ भाग्यवान् महापुरुषः प्रकृतिचेष्टयैव सर्वं विदधाति, न च स्वेच्छया। नवीनं क्रियमाणं कर्म तत्र नोत्पद्यते स्वाभाविकसंस्कारोदयेनास्वाभाविकसंस्कारजनितानि सञ्चितकर्माणि पावकदग्धबीजवन्नाङ्कुराय प्रभवन्ति। केवलं प्रारब्धवेगेनैव कुलालचक्रवदसौ स्वीयां जीवनयात्रां निर्वहति। इयमेव सर्वोत्तमा जीवन्मुक्तदशा ॥ १५३ ॥

तत्प्राप्तये कालं निर्णयति—

तत्प्राप्तिस्तुरीयायाम् ॥ १५४ ॥

तुरीयायामन्तिमायामवस्थायां तस्या जीवन्मुक्तेः प्राप्तिर्जायते। जीवश्चतुर्विधभूतसंघयोनिषु क्रमशः समुन्नमन् मानवीं योनिमधिगत्य जैवकर्माधिकारवान् जायते। दशायामस्यामसावावागमनचक्रे बम्भ्रम्यमाणो यदाऽशुद्धं कर्म परित्यजति शुद्धं च संगृह्णाति, तदानीं यथाक्रममर्थकामवासनां विहाय धर्ममोक्षवासनां परिवर्धयति, प्रवृत्तिमार्गं परित्यज्य निवृत्तिमार्गमाश्रयति। अनन्तरमसौ जन्मजन्मान्तरे क्रमशः आत्मज्ञानं संचिन्वन् शास्त्रज्ञो वेदज्ञस्तत्त्वज्ञो भवन् अन्ते चात्मज्ञानी संभूय तुरीयामवस्थामधिगच्छति, अत्रैव ज्ञानोन्नतेरन्तिमायामवस्थायां महापुरुषा जीवन्मुक्तदशां प्राप्नुवन्ति ॥ १५४ ॥

प्रसङ्गादुच्यते—

जाग्रत्-स्वप्नसुषुप्तयः क्रमात् सत्त्वरजस्तमोरूपाः ॥ १५५ ॥

जाग्रत्स्वप्नसुषुप्तयश्चेति तिस्रोऽवस्थाः क्रमशः सत्त्वरजस्तमो-

रूपा भवन्ति। ताश्च मानवेष्वेव स्वाभाविकाः। मानवान्निम्नश्रेणिजीवेषु जाग्रत् सुषुप्तिश्चेत्यवस्थाद्वयो हि सम्भवति। आवागमनचक्रे प्रवेशमलभमाने जीवेऽस्वाभाविकसंस्कारोदयाभावात् स्वप्नावस्थासम्भावना भवितुं नार्हति। अन्यजीवेषु स्मृतिलक्षणस्य विद्यमानत्वात्चित्तस्यास्तिता विद्यते। बुद्धेर्मनसोऽहंकारस्य च लक्षणं तेषु निभाल्यते। किन्तु निम्नश्रेणिजीवेषु बुद्धेश्चित्तस्य च परिपुष्टता नैवास्ति। बुद्धेश्चित्तस्य च साहाय्येन तेनैव स्वप्रकृतिष्वाधिपत्यं संस्थापयन्ति। सुतरां बुद्धेरौन्नत्याभावात् चित्तस्य च बलशालित्वराहित्यात् अस्वाभाविकसंस्काराधिकारशून्यत्वाच्च जाग्रत्सुषुप्तिरित्यवस्थाद्वयमेव तेषु सम्भवतीत्यभ्युपगन्तव्यमेव। जाग्रदवस्था सत्त्वरूपा, स्वप्नदशा तु रजःस्वरूपा, सुषुप्तिश्च तमोगुणमयी विज्ञेया। जाग्रदवस्थायां ते जागर्त्तिमासाद्य चेतनसहायतया स्वप्रकृतिमनुसृत्य कार्यमनुतिष्ठन्ति। सुषुप्तेर्दशायां तु पूर्णतमोभावापन्ना जड़वत् प्रतीयन्ते। जाग्रत्सुषुप्तिश्चेति दशाद्वयं निम्नश्रेणिजीवेषु स्वाभाविकम्। यदा च जीवो मानवयोनौ पूर्णावयवायां प्रविशति, तदा स्वीयान् भोगलोकानिव जाग्रत्सुषुप्तिमध्यस्थां स्वप्नावस्थामेकामपूर्वामधिगच्छति। स्वप्नमयसृष्टेरेव तद्वैलक्षण्यं विज्ञेयम्। त्रिगुणभेदमनुसृत्य स्वप्नस्तज्जन्या सृष्टिरपि त्रिविधा। स्वप्नो हि सात्त्विको राजसिकस्तामसिकश्च, असम्बद्धा भावा यत्रोपलभ्यन्ते, स हि तामसिकः, स्वप्नः, स्मृतिसाहाय्यसम्प्राप्तो राजसिकः, भूतभविष्यद्वर्तमानदशाज्ञापको दैवशक्तिपरिपूर्णश्च सात्त्विकोऽवगन्तव्यः। सात्त्विकः स्वप्नो मानवान्तःकरणे कदाचिदुदेति न सर्वदा। जाग्रद्दशातः सुषुप्तिदशायां सुषुप्तेश्च जाग्रद्दशायां प्रवेशकाले स्वप्नः परिदृश्यते। सात्त्विकः स्वप्नस्तु तद्भिन्नदशायामनुभूयते। यतस्तत्काले सात्त्विकः परिणामः। एतत् त्रिविधदशासन्धिकाले स्वीयान्तःकरणेष्वाधिपत्यं ये रक्षन्ति त एव महापुरुषा विज्ञेयाः, समुन्नता योगिन एव एवं भवितुमर्हन्ति॥ १५५॥

विज्ञानं स्पष्टीकुरुते—

## गुणातीता तुरीया ॥ १५६ ॥

तुरीया दशा किल गुणातीता गुणेभ्योऽतीता वेद्या । अन्येषु जीवेषु जाग्रत्सुषुप्तिसंज्ञकमवस्थाद्वयं तथैव मनुष्येषु जाग्रत्स्वप्नसुषुप्तिनामकमवस्थात्रयं स्वाभाविकम् । परमेतदवस्थात्रयव्यतिरिक्ता चैका चतुर्थी तुरीया दशाऽपि भवति । सत्त्वरजस्तमसां त्रयाणां गुणानां स्वाभाविकपरिणामानुसारं मनुष्येषु दशात्रयमुत्पद्यते । यदा तत्त्वज्ञानी महापुरुषः स्वस्याः सात्त्विकाया धृतेः सात्त्विकज्ञानयोगादिशक्तीनां च बलेनोपर्युक्तदशात्रयसन्धिकाले योगयुक्ततालाभसामर्थ्यमधिगच्छति, तदानीं तदीयान्तःकरणदशा विलक्षणरूपमेकं प्राप्नोति । अवस्थामेतां सूत्रकारो महर्षिस्तुरीयां प्रोवाच । निर्विकल्पसमाधेरवस्थायामेतस्याम् जीवन्मुक्तदशा समुदयति । यद्यपि तदानीं जाग्रत्स्वप्नसुषुप्तिदशास्त्रिगुणपरिणामस्यानुसारेण तिष्ठन्ति, परन्तु तस्य योगिराजस्यान्तःकरणं सदैव निर्विकल्पसमाधौ तिष्ठति, तेन च स्वस्वरूपमुपलब्धम् अतोऽसौ दशात्रयेण न ग्रस्यते, तत्सन्धावुपस्थितेऽपि योगयुक्त एव तिष्ठति । इयमेव गुणातीता तुरीयादशा प्रोच्यते । दशायामत्र योगिराजस्त्रिगुणग्रस्तो न जायते अतो दशेयं गुणातीता प्रोक्ता ॥ १५६ ॥

पुनरपि विज्ञानं तत् स्पष्टीकुरुते—

## आत्मना सम्बन्धोऽस्याः ॥ १५७ ॥

एतस्यास्तुरीयावस्थाया आत्मना सह सदैव सम्बन्धस्तिष्ठति, व्युत्थानदशायां द्रष्टृदृश्यसम्बन्धे सत्यपि तुरीयदशायामत्र योगिराजो नैवात्मधृतिपरिच्युतो जायते । यथा सूत्रनिबद्धः खग आकाशे सर्वत उड्डयमानोऽपि पुनरपि सूत्रग्राहकस्य स्वप्रभोर्हस्ते समागत्यो-

पविशति, तथैव तुरीयायामवस्थायां प्राप्तौ सत्यां योगिराजस्यान्तः-करणं जाग्रत्स्वप्नसुषुप्तिनामकं दशात्रयं प्राप्तमपि द्रष्टृदृश्यसम्बन्धे स्थापितेऽपि व्युत्थानदशामधिगत्यापि नैवात्मधृतिपरिच्युतं जायते॥१५७॥

अवस्थामिमां पुनः स्पष्टयति—

**तत्र प्रभुत्वम् ॥ १५८ ॥**

तत्र तुरीयावस्थायां सर्वविधमपि प्रभुत्वमधिगम्यते । यथा क्लैर्शी शुक्लां च गतिं प्राप्तो महापुरुषः प्रकृतेरधीश्वरः सन् प्रभुत्वमवाप्नोति लोकपार्थक्ये सति जीवन्मुक्ते महात्मनि तादृशदैवशक्तिप्रादुर्भावासम्भवेऽपि तुरीयावस्थायां प्रभुत्वमवाप्यते । दशायामत्र संस्काराणां कर्मणां च बन्धनानि प्रणश्यन्ति । तेन क्रियमाणानि कर्माणि सत्स्वरूपं दधते सर्वथा शुद्धानि च भवन्ति । कश्चिदपि संस्कारस्तस्य बाधां नैव जनयति । ईश्वर इवासौ गुणसंस्कारकर्मसु प्रभुत्वस्थापने समर्थो जायते । तेन विधीयमानं सर्वमपि कर्म धर्मस्वरूपतां प्रतिपद्यते ॥ १५८ ॥

मुक्तिभेदं व्याचष्टे—

**मुक्तिस्त्रिविधा कर्मभिस्त्रिभिः ॥ १५९ ॥**

कर्मभिस्त्रिभिर्हेतुभिर्मुक्तिरपि तुरीयदशा प्राप्ता, त्रिप्रकारा ज्ञेया । तिसृष्वप्येतासु दशासु यद्यपि देशकालपार्थक्यं निभाल्यते, परन्तु ताः पूर्वोक्ततुरीयावस्थायामेवाधिगम्यन्ते । आसां वर्णनमागामिसूत्रेषु समागमिष्यति ॥ १५९ ॥

प्रथमो भेदो निरूप्यते—

**त्रिमूर्त्तिपदम् ॥ १६० ॥**

त्रिमूर्त्तिपदं ब्रह्मविष्णुरुद्रपदं त्रिविधमुक्तिषु प्रथमं विज्ञेयम् ।

ऐशं कर्म द्वारीकृत्य देवलोकेषु समुन्नतानि देवपदानि लभमानाः किं वा देवयोनिषु समुन्नतानि तपांसि समनुतिष्ठन्तो देवेषु केचन महात्मानो ब्रह्मविष्णुरुद्रस्वरूपत्रिमूर्त्तिपदेषु किमप्येकपदं प्राप्य सगुणब्रह्माधिकारमासाद्य ब्रह्माण्डस्याधीश्वरतां प्रपद्यन्ते, तेषामियं ब्रह्मीभूतावस्था विशिष्टगुणानां पूर्णां शक्तिं धारयन्ती पूर्वोक्तभेदेषु प्रथमा मुक्तदशा वेद्या ॥ १६० ॥

द्वितीयभेदं निरूपयति—

## सूर्यभेदिपदम् ॥ १६१ ॥

सूर्यमण्डलभेदिनां पदं मुक्तेर्द्वितीयो भेदः। पदमिदं जैवेन कर्मणा प्राप्यते। ऐशेन कर्मणा त्रिमूर्त्तिपदप्राप्तिस्तु शक्तिविचारतो जीवकोटिमतिशेते। त्रिमूर्त्तिपदं तु वस्तुतः सगुणब्रह्मस्वरूपमेव। द्वितीयास्ववस्थासु पूर्णशक्तिविकासो न जायते। परन्तु सूर्यमण्डलभेदिनां महात्मपदवाच्यतायां नास्ति सन्देहः। जैवकर्मबलेनैव ते गमागमचक्रं भेदयन्तः शुक्लगतिसाहाय्येन मृत्युलोकमिमं परित्यज्य समुन्नततमूर्द्ध्वलोकमधिकुर्वन्ति। शक्तिसमीहां विमुच्य तपांसि साध्नुवन्तः सप्तममूर्द्ध्वलोकमासाद्य ब्रह्मीभावमापद्यन्ते ॥ १६१ ॥

तृतीयं भेदं प्रतिपादयति—

## जीवन्मुक्तिपदम् ॥ १६२ ॥

त्रिविधाया मुक्तेस्तृतीयो भेदो जीवन्मुक्तिपदम्। ऐशं कर्मानुसृत्य त्रिमूर्त्तिपदं प्राप्तस्य मुक्तिर्जायते, जैवकर्मानुसारेण तु सप्तममूर्द्ध्वलोकमधिगम्यान्तिमो मुक्तिपदसमुदयः। एतत्सूत्रानुमोदितजीवन्मुक्तिपदं तु सहजेनैव कर्मणा प्राप्यते, सहजकर्मद्वाराऽत्रैव मृत्युलोके स्थूले शरीरे विद्यमानेऽपि तत्कर्मपरिणामे या मुक्तिः प्राप्यते, सा जीवन्मुक्तिपदेनाभिधीयते। जीवन्मुक्तिपदस्य सविस्तरं वर्णनं

प्रागेव समुदीरितम् । जीवः सहजकर्मबलेन क्रमशः समुन्नमन् मानवयोनिमासाद्य जैवकर्माधिकारी भवन् आवागमनचक्रे यन्निपतति, तदेव तस्य कृष्णा गतिर्बोध्या । किन्तु स एवोग्रकर्मा तपस्वी जीवो दैवीं शक्तिमधिगन्तुमिच्छया विशिष्टां देवयोनिं प्रविशति, तदा कालान्तरे ऐशकर्मणोऽन्तिमशुभपरिणामं प्राप्नोति । किं वा यदि कश्चिदुग्रकर्मा तपस्वी स्वकीयोग्रपुण्यकर्मवेगेन सहसैव शुक्लगतिमाश्रयन् सप्तममूर्द्ध्वलोकमासादयेत, तदानीमसौ महापुरुषः पूर्वोक्तजैवकर्मणोऽन्तिमां शुभप्रतिष्ठामवाप्नोति । परन्तु यदि कश्चिन्महात्माऽत्रैव मृत्युलोके वसन् अनेनैव मानवशरीरेण कर्मयोगीभवन् जैवकर्माधिकारं परित्यजन् आवागमनचक्रं भेदयन् पुनः सहजकर्मणोऽलौकिकीं दशां प्राप्तः सहजकर्मणो यदन्तिमं परिणाममधिगच्छति, तदेव तस्य जीवन्मुक्तिपदस्य रहस्यमवधेयम् ॥ १६२ ॥

प्रसङ्गोपात्तशङ्कां समाधत्ते—

**तदा नैसर्गिकत्वं वृत्तीनाम् ॥ १६३ ॥**

तदा जीवन्मुक्तदशायां वृत्तीनां नैसर्गिकत्वं स्वाभाविकत्वं निगद्यते । जिज्ञासुरत्र शङ्कते—ननु यदि जीवन्मुक्तिदशाप्राप्तिः स्थूलशरीरविद्यमानत्व एव सम्भवति चेत्तदानीमाहारनिद्रादिभावानाम्, जाग्रत्स्वप्नसुषुप्तिदशानाम्, सुखदुःखादिमनोवृत्तीनां सत्यनुभवे मुक्तावस्थाप्राप्तिः कथं संगच्छेत? सत्यम् । पूज्यपादः सूत्रकारो महर्षिः सूत्रमेतदाविष्कुर्वन् एतादृशीं शंकां समाधत्ते—जैवकर्मपरिचालितगमागमचक्रभेदनपूर्वकं महापुरुषो जीवन्मुक्तपदं यदा प्रतिष्ठते तदानीं जैवकर्मणोऽवान्तरभेदास्ततो विनश्यन्ति, स्वस्वरूपोपलब्ध्या सञ्चितानि कर्माणि तं विमुञ्चन्ति । तदीयान्तःकरणस्य कामनाशून्यत्वात् क्रियमाणानि कर्माण्यपि तत्सम्बन्धं परित्यजन्ति, शरीररूपदृश्यस्य द्रष्टृत्वं स्थूलसूक्ष्मकारणशरीरस्य पार्थक्यमात्मनोऽनुभवन्तं महा-

पुरुत्वमेतं प्रारब्धकर्माण्यपि नैव स्वप्रभाववशवर्त्तिनं कर्त्तुमर्हन्ति, वस्तुतो जीवन्मुक्तदशायां महापुरुषस्य तस्य मानसिक्यो वृत्तयः स्वाभाविकतां प्रतिपद्यन्ते। प्रकृतिप्रेरणानुसारमेवासौ जीवनयात्रां स्वकीयां निर्वहति। कुलालचक्रभ्रमणवन्नैजं शरीरं परिचालयति, अज्ञानिनस्तु तं सदसत्कर्मकर्त्तारं मन्यन्ते, परं ज्ञानिना तु निष्क्रियः प्रकृतिमात्रपरिचालितोऽवगम्यते ॥ १६३ ॥

तत्कारणमुदीरयति—

ज्ञानापेक्षं तत् ॥ १६४ ॥

तत् जीवन्मुक्तिप्राप्तित्वं, ज्ञानापेक्षं, ज्ञानस्यापेक्षा यत्र तथाऽत्र-गन्तव्यम्। विलक्षणलोकोत्तरदशाया एतस्याः प्राप्तिः कथमिति शङ्कां निराकरोति। तादृशी दशाऽऽत्मज्ञानद्वारेणाधिगन्तुं शक्यत इत्यत्र नास्ति सन्देहलेशः। यदा तत्त्वज्ञानं द्वारीकृत्य राजयोगं प्राप्तो महापुरुषः प्रकृतेस्तात्त्विकं स्वरूपं प्रकृतिपुरुषयोश्च दृश्यद्रष्टृत्वं सम्यग्विज्ञातुमर्हति, तदानीं तं किमपि प्राकृतिकं दृश्यं कापि वा प्रकृतिस्पन्दनस्वरूपिणी क्रिया स्ववशवर्त्तिनं विधातुं नार्हति। स्वरूपोपलब्धौ सत्यां परमविश्रान्तसच्चिदानन्दमयब्रह्मसद्भावतो नासावतिरिच्यते। सुतरामात्मज्ञानी महापुरुषो जीवन् एव मुक्तो जायते ॥ १६४ ॥

दशैषा स्पष्टीक्रियते—

क्षणस्था व्युत्थानवृत्तयस्तस्य ॥ १६५ ॥

तस्य जीवन्मुक्तमहात्मनो व्युत्थानस्य वृत्तयः क्षणस्थाः क्षण-स्थायिन्यो भवन्ति, अत्रात्मज्ञानपरिपूर्णदशायां स्वरूपोपलब्ध्या विश्रान्तौ सत्यां पूर्णा शान्तिर्विराजते, परन्तु शरीरस्य विद्यमानतया जागतिकस्य दृश्यप्रपञ्चस्य सर्वविधकर्मकलापस्य सद्भावेन द्रष्टृ-

दृश्यसम्बन्धस्थापनकारिणी व्युत्थानदशाऽपि सम्भवति, किन्तु भेदस्तावदियानेव यत् साधारणे मानवे व्युत्थानदशा सर्वदैव जागर्त्ति, किन्तु जीवन्मुक्तमहापुरुषे सा क्षणस्थायिनी भवति। ननु सहजकर्माधीनेषु पश्वादिजीवेषु जीवन्मुक्तेषु चापि यदि वृत्तयः क्षणस्थायिन्यस्तदानीमुभयत्र को भेद इति शङ्का चेत् समाधत्ते—पश्वादिचतुर्विधभूतसंघेषु पूर्णरूपेण तमोगुणस्तिष्ठति, जीवन्मुक्तेषु तु पूर्णस्य सत्त्वगुणस्याधिष्ठानम्। पश्वादिवृत्तीनां क्षणस्थायित्वेऽपि तद्विलयस्तमोगुणे जडभावापन्नदशायां सम्पद्यते; परन्तु जीवन्मुक्तमहापुरुषस्य क्षणस्थायिवृत्तीनां सत्त्वगुणे विलयो जायते, तदानीं तत्र पूर्णं चैतन्यमवशिष्यते। विज्ञानमिदं प्रकारान्तरेणापि बोध्यम्। वृत्तीनां पूर्णस्वरूपेण कार्यानुष्ठानं रजोगुणस्य कार्यं समाम्नायते। रजोगुणस्य स्वभावात् रजसो दशेयं क्षणानन्तरमेव प्रणश्यति, पश्वादिप्राकृतिकजीवेषु रजोगुणस्तमःस्वरूपजाड्यभावं धृत्वा विलीयते। परन्तु जीवन्मुक्तमहात्मनि रजोगुणोऽसौ सत्त्वगुणस्वरूपेण परिणमन् स्वस्वरूपे विलयं गच्छति, यतस्तदीया विश्रान्तिः सदैव स्वस्वरूपे विराजते, इदं तु सर्वतो विशिष्यावधेयं यत् व्युत्थानदशायाः क्षणस्थायित्वं केवलं जीवन्मुक्तावस्थायामेव घटते, नान्यत्र। यतो बद्धमानस्यान्यस्य जीवस्य वा वृत्तयः स्वपूर्णस्वरूपे तिष्ठन्ति, किं वाऽज्ञानप्रमादसुषुप्त्यादिषु विलयं प्रपद्यन्ते। तन्मूलनाशो न जायते। परन्तु जीवन्मुक्ते तद्वैपरीत्यं निभाल्यते। यतस्तदीयान्तःकरणे सहजकर्मानुसारेण व्युत्थाने सत्यपि तद्वेगः समाप्यते। तदानीं स्वस्वरूपावस्थानमवशिष्यते। लोकातीतदशेयं जीवन्मुक्ते महात्मन्येव सम्भवति॥ १६५॥

वृत्तिसम्बन्धेन प्रकृतविषयमवगमयति—

षड्जीववृत्तयस्त्रिगुणभेदात्॥ १६६॥

त्रिगुणानां भेदेन जीवानां वृत्तयः षट्प्रकारा विज्ञेयाः। सर्वेष्वपि जीवेषु षड्वृत्तयः स्वाभाविक्यः सहजाश्च। आहारो, निद्रा, भयं, मैथुनं, ज्ञानं सुखेच्छेति षड्वृत्तयः, तेषु आद्यद्वयी तमोगुणस्य मध्यद्वयी रजोगुणस्य. अन्तद्वयी च सत्त्वगुणस्य वृत्तयोऽवधेयाः। निद्राहारयोः स्थूलशरीरेण घनिष्ठः सम्बन्धः। अतो जड़वस्तुसम्बन्धोपेतत्वाद् द्वावप्येतौ तामसिकश्रेण्यन्तर्भवतः, भयं मैथुनं चेति-वृत्तिद्वयं परिणामशीलम् नच नित्यं न वा समानरूपेण सर्वत्रैव देशे काले पात्रे वा तिष्ठति, अतस्तद् राजसिकश्रेण्यन्तर्भवितुमर्हति। द्रष्टृदृश्ययोस्तटस्थज्ञानं सुखेच्छेत्यानन्दमूलकत्वाद् द्वितयमेतत् सत्त्वगुणसम्बन्धनिबन्धनमवधेयम् ॥ १६६ ॥

तत्समानाधिकारो निरूप्यते—

सर्वत्र समाः ॥ १६७ ॥

आहारो निद्रा भयं मैथुनं ज्ञानं सुखेच्छेति षड्वृत्तयः सर्वत्र सर्वेष्वपि जीवेषु समानास्तिष्ठन्ति। उद्भिज्जस्वेदजाण्डजजरायुजाख्येषु चतुर्विधभूतसंघेषु मानवादिमृत्युलोकजीवेषु देवलोकजीवेषु च सर्वेष्वपि वृत्तय इमाः परिव्याप्नुवन्ति। उद्भिज्जा अपि जलमृत्तिकादिखादपदार्थादिना परिपोषतां प्राप्नुवन्ति तेऽपि रात्रौ निद्रान्ति, अतो रात्रौ पुष्पपत्रफलचयनं निषिद्धम्। वज्रपातादिभयेन वृक्षा म्रियन्ते। उद्भिज्जादिषु मैथुनक्रिया प्रत्यक्षसिद्धा। तेषु इन्द्रियज्ञानजनिततटस्थज्ञानस्य प्रमाणं तु प्रागेव प्रदत्तम्। सुखेच्छाऽपि ऋतुभेदेन तेषु प्रत्यक्षसिद्धा। विवेकतो विचार्यमाणे समुन्नतजीवेषु वृत्तयस्ता सौकर्येणोपलभ्यन्ते। सहजकर्मसम्भूतत्वादासां षड्वृत्तीनां सर्वत्रैव समानाधिकारो विद्यते॥ १६७ ॥

इदानीं जीवन्मुक्तदशा निरूप्यते—

जीवन्मुक्ते राजसी भ्रष्टबीजवत् ॥ १६८ ॥

जीवन्मुक्ते महात्मनि राजसीवृत्तिर्दग्धबीजवत् परिबोध्या। जीवन्मुक्तदशायाम् आहारनिद्राज्ञानसुखेच्छावृत्तयो रूपान्तरेण सन्तिष्ठन्ते। परन्तु भयं मैथुनं चेति वृत्तिद्वयं दग्धबीजवज्जायते। जीवन्मुक्तमहात्मनि प्रकृतिस्थे जाते तत्र स्वस्वरूपस्य पूर्णविकासत्वात् केवलं शरीररक्षार्थमेव आहारादिक्रियाः सम्पद्यन्ते न भोगजनिताः। निद्रावृत्तिसन्धिकाले पूर्णाधिपत्यं तत्र तिष्ठतीति पूर्वमेव सुनिरूपितम्। तस्य सुखेच्छा, तटस्थज्ञानञ्च जगन्मङ्गलविधायकं परार्थमेव सम्भवति। अत इदं सिद्ध्यति यच्चतस्रोऽपि वृत्तयस्तत्र रूपान्तरेण विलसन्ति किंतु भयं मैथुनं चेतिवृत्तिद्वयं दग्धबीजवत् क्रियारहितं जायते। सृष्टेरिच्छाया मूलोच्छेदात् कामनाया विलयेन च कामवृत्तिः, आत्मज्ञानप्राप्त्या भयवृत्तिश्च दग्धबीजवत् समूलं प्रणश्यतः। शंकते ननु दग्धबीजोदाहरणं रजोजनितवृत्तावेव कथं प्रदत्तम्? अन्यासु वृत्तिषु कथं न दत्तम्? समाधत्ते—नवीनप्रतिक्रियारूपाङ्कुरजनने दग्धबीजस्यासामर्थ्यात् तदुदाहरणं रजोगुणवृत्तावेव घटते, नान्यवृत्तिचतुष्टयेषु। यतो जीवन्मुक्ते निद्राऽहारजनिता तृप्तिः पुष्टिश्च भवतः। अन्यच्च जगद्ब्रह्मस्वरूपमिति ज्ञानेन ज्ञानं सुखेच्छा च तिष्ठत एव ॥ १६८ ॥

मोक्षप्रसङ्गादुच्यते—

सप्तावस्थाः कर्मिणां सप्तभेदवत् ॥ १६९ ॥

कर्मिणां कार्यकर्त्तॄणां सप्तभेद इव सप्तप्रकारा दशाः सम्भवन्ति। सृष्टिसम्बन्धिनः सप्तभेदाः स्वाभाविकाः। यथा कालस्य सप्तदिनानि, स्थूलशरीरस्य सप्तधातवः, प्रकाशस्य सप्तवर्णाः, अन्धकारस्य सप्तच्छायाः, देवलोकस्य सप्तस्तराः, असुरलोकस्य च सप्तभेदा इत्यादि।

एतन्नियमानुसारेणैव कर्मिणामपि दशाः सप्तभिः श्रेणिभिर्विभक्तुं शक्यन्ते। आसां सविस्तरवर्णनमग्रिमेषु सूत्रेषु समायास्यति ॥१६९॥

प्रथमां वर्णयति—

शुभेच्छा ॥ १७० ॥

कर्मिणां सप्तस्ववस्थासु प्रथमा शुभेच्छा विज्ञेया। तथाहि स्मृतौः—

स्थितं किं मूढ एवास्मि प्रेक्ष्येऽहं साधु सज्जनैः।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः॥

एतस्या योगभूमेस्तात्पर्यमिदं यत् आवागमनचक्रे बम्भ्रम्यमाणेऽभ्युदयं प्राप्नुवन् प्रवृत्तिमार्गसीमतो निवृत्तिसीमनि समागतो जीवः साधकः कर्माधिकारममुमधिगच्छति। सच भाग्यवान् अशुभकर्मतो विरक्तिं शुभे कर्मणि चानुरक्तिं प्राप्नोति ॥ १७० ॥

द्वितीयां वर्णयति—

विचारणा ॥ १७१ ॥

स्मर्यते चाऽत्र—

शास्त्रसज्जनसम्पर्कवैराग्याभ्यासपूर्वकम्।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा॥

प्रथमभूमेः प्राप्तौ शुभाशुभकर्मविवेकपूर्वकमशुभदोषदर्शनाधिक्यं तिष्ठति। द्वितीयायां भूमौ तु शुभे कर्मणि यथार्थतः प्रवृत्तिर्जायते पुरुषोऽसौ पुण्यात्मतां प्रतिपद्यते ॥ १७१ ॥

तृतीयां व्याकरोति—

तनुमानसा ॥ १७२ ॥

तनु क्षीणं मनो यस्यां सा तनुमानसा प्रोच्यते। तथा हि स्मृतौ—

विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वसक्तता।

यत्र सा तनुताभावात् प्रोच्यते तनुमानसा॥

पूर्वोक्तं भूमिद्वयं समतिक्रम्य साधको यदिन्द्रियभोगवस्तुन्यनासक्तिमधिगच्छति तदानीमशुद्धस्य मनसो वेगः प्रक्षीयते। तस्मिन् काले स्वकीयामशुद्धतां प्रक्षीणयन् मनो शुद्धं भावप्रणोदितं जायते, वस्तुत आसक्तेः क्षीणत्वात् हीनत्वाच्च दृशेयं 'तनुमानसा' प्रोक्ता॥ १७२॥

चतुर्थीं कथ्यते—

सत्त्वापत्तिः॥ १७३॥

'सत्त्वे शुद्धे आत्मनि आपत्तिरवस्थितिर्हि' सत्त्वापत्तिः प्रोक्ता। एतत्सम्बन्धे स्मृतौ चापि दृश्यते—

भूमिकात्रितयाऽभ्यासाच्चित्तेऽर्थे विरतेर्वशात्।

सत्त्वात्मनि स्थितिः शुद्धे सत्त्वापत्तिरुदाहृता॥

योगभूमावत्र साधक आसक्तिशून्यः सद्भावस्थानं कुर्वन् सत्स्मरणपूर्वकं सर्वाण्यपि कर्माणि भावशुद्ध्या विदधाति॥ १७३॥

पञ्चमीमुपवर्णयति—

असंसक्तिः॥ १७४॥

पूर्वोक्तदशाचतुष्टयाभ्यासात् फलासक्तिपरित्यागपुरस्सरं सत्त्वरूढतैव असंसक्तिरुच्यते। तथा हि स्मृतौ—

दशाचतुष्टयाभ्यासादसंसङ्गफलेन च।

रूढसत्त्वचमत्कारात् प्रोक्ताऽसंसक्तिनामिका॥

अशुद्धमासक्त्या शुद्धं च मनो भावद्वारा परिचाल्यते। पूर्वोक्ते भूमिद्वये आसक्तिसम्बन्धस्तिष्ठति, तृतीयायां चतुर्थ्यामवस्थायां च साधकस्यान्तःकरणे यथाक्रमं भावसम्बन्धो राजते। पञ्चमयोगभूमावत्र भाग्यवान् साधको निष्कामव्रतधारी भवन् जगद्ब्रह्मस्वरूपमवधाय सत्त्वारूढो भूत्वा कर्मविधानयोग्यतामधिगच्छति ॥ १७४ ॥

षष्ठी प्रोच्यते—

## तद्भाविनी ॥ १७५ ॥

विषयेऽत्र स्मृतौ प्रोक्तं यथा—

भूमिकापञ्चकाभ्यासात् स्वात्मारामतया दृढम्।
तथैवाभ्यन्तराणां हि बाह्यानामप्यभावनात् ॥

परप्रयुक्तेन चिरं प्रयत्नेनार्थभावनात्।
पदार्थाभावनानाम्नी षष्ठी संजायते गतिः ॥

तात्पर्यमिदं यत् षष्ठ्यां योगभूमावत्र भावविचारतश्चित्तं दूरीभवति, आत्मविचारे स्थिरता प्राप्यते तदानीं तस्य सौभाग्यवतः कर्मिणो गतिः सर्वप्रकारेण कर्मण्यकुण्ठतां प्रतिपद्यते ॥ १७५ ॥

सप्तमी प्रणिगद्यते—

## तुरीया ॥ १७६ ॥

अस्या भूमेर्विषये स्मृतौ प्रोक्तं तथाहि—

भूमिषट्कचिराभ्यासात् भेदस्यानुपलम्भतः।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥

योगो हि कर्म नैपुण्यं कर्मयोगेन तेन वै।
अतिक्रमन् सप्तयोग-भूमिकामधिगम्यते ॥

तात्पर्यमेतद् यत् सप्तम्यां ज्ञानभूमौ महापुरुषोऽद्वैतभावं धारयन्

सदैव युक्तोभूत्वा कर्मणोऽकर्मणश्चावस्थायामेकरूपतां प्रतिपद्यते ॥ १७६ ॥

भेदकारणमुदीरयति—

**अधिकारभेदात् ताः ॥ १७७ ॥**

अधिकारस्य भेदेन ता अवस्थाः सम्भवन्ति। संस्कारशुद्धेः क्रियाशुद्धेश्च विभिन्नदशासु ये यथाक्रममधिकारमासादयन्ति तदधिकारभूमीनामनुसारेणैव कर्मिणामपि सप्तावस्थाः कर्मगतिवेत्तृभिर्महात्मभिर्निर्णीताः सन्ति। ताश्च नैव काल्पनिकस्वरूपाः किञ्च तात्त्विकरूपा वेदितव्याः। क्रमश एकस्या अनन्तरमधिगम्यन्ते। यदि काश्चन पूर्वजन्मनि जन्मान्तरेषु वाऽधिकृतास्तर्हि सहसैव समुन्नतावस्था प्राप्तुं शक्यते ॥ १७७ ॥

अवस्थास्ताः सुस्पष्टयति—

**पार्वत्यक्षेत्रवत् ॥ १७८ ॥**

एता अवस्थाः पर्वतीयक्षेत्रवत् परिज्ञातव्याः। पर्वतेषु भ्रमणकारिणां पथिकानां विदितमिदं यत् उच्चतरपर्वतेषु यत्र कृषिजीविनो मानवा निवसन्ति, तत्रान्नानि समुत्पादयितुं यानि क्षेत्राणि निर्मीयन्ते तेषां स्तरा विभिन्ना भवन्ति, तानि च परापेक्षया समुन्नतानि भवन्ति। अन्यथा तानि कर्षणोचितानि जननिवासयोग्यानि न स्युर्न वा तेषु अन्नानि समुत्पद्येरन्। अतः पर्वतेषु स्वतन्त्रस्तरमयक्षेत्राणि निर्मीयन्ते, तथैव संस्कारशुद्धिं क्रियाशुद्धिं च समधिगत्यान्ते च मुक्तिपदमासादयितुं सप्तकर्माधिकारा एते निर्णीताः सन्ति ॥ १७८ ॥

पुनर्मोक्षप्रसङ्गाद् व्याहरति—

**चतुर्दशविधो ज्ञानाज्ञानाधिकारो लोकवत् ॥ १७९ ॥**

चतुर्दशलोकवत् ज्ञानाज्ञानयोरधिकारोऽपि चतुर्दशविधो विज्ञेयः।

यथा भूः भुवः, स्वः, महः, जनः, तपः सत्यं चेति सप्तलोकाः क्रमशः ऊर्द्ध्वस्थिताः सन्ति, यथा च अतलं वितलं सुतलं तलातलं रसातलं महातलं पातालश्चेति सप्तक्रमशो निम्नश्रेणिलोकाश्चेतिउभये मिलित्वा चतुर्दशलोका एकत्र ब्रह्माण्डे भवन्ति, तथैव आध्यात्मिकं राज्यमपि चतुर्दशभेदभिन्नमवगन्तव्यम् । एतद्भेदानां सविस्तरं वर्णनमग्रिमेषु सूत्रेषु निभालनीयम् ॥ १७९ ॥

प्रथमाश्चतस्रोऽज्ञानभूमयः प्रोच्यन्ते—

**चिदाकाशे चत्वारो भूतसंघस्य ॥ १८० ॥**

भूतानां चतुर्विधानां संघस्य समुदायस्य चिदाकाशे चतस्रोऽज्ञानभूमयः क्रमशो विकसन्ति । उद्भिज्जानां समष्टिचिदाकाशे प्रथमा-स्वेदजानां द्वितीया, अण्डजानां, तृतीया जरायुजपशूनां च समष्टि-चिदाकाशे चतुर्थीति क्रमशश्चतस्रोऽज्ञानभूमयो विकासमायान्ति । यद्यप्यज्ञानावस्था तमोगुणविचारानुसारं तासूत्तरोत्तरं ह्रसन्ति, किन्तु ता अज्ञानाच्छादिता इत्यज्ञानभूमयः प्रणिगद्यन्ते ॥ १८० ॥

पञ्चम्या अज्ञानभूमेः स्वरूपं निर्णयति—

**पञ्चमो देहात्मवादे ॥ १८१ ॥**

देहात्मवादे देह एव आत्मा यत्र स वादो देहात्मवादस्तत्र पञ्चमोऽज्ञानस्तरो वेद्यः । जीवो यदा चतुर्विधभूतसंघयोनिषु परिभ्रमन् मानवशरीरमासादयति, तदानीमसौ पाशवप्रवृत्तेराधिक्येन देहात्मवादी जायते । परलोकादिष्वविश्वसन् शरीरे पूर्णाध्यासं कुर्वन् पशुरिव देहमेव आत्मानं मन्यते । किञ्चैतदपि वक्तुं शक्यते यद् ये मानवा देहात्मवादे निरता नास्तिक्यहेतुना देहभिन्नस्यात्मनोऽस्तित्वं नाभ्युपगच्छन्ति, ते पञ्चमाज्ञानभूमेरन्तर्गता अवगन्तव्याः । संसारे बहूनि नास्तिकदर्शनानि देहात्मवादमतपोषकाणि सन्ति, तानि सर्वाणि चैतत्पञ्चमाज्ञानभूमिसम्भूतानि ज्ञातव्यानि ॥ १८१ ॥

षष्ठीमज्ञानभूमिं वर्णयति—

**देहातिरिक्तात्मवादे षष्ठः ॥ १८२ ॥**

देहादतिरिक्तः आत्मा यत्र स वादो देहातिरिक्तात्मवादस्तत्र अज्ञानभूमेः षष्ठस्तरो विज्ञेयः। यदा देहात्मवादभूमेस्तरमतिक्रामन् आध्यात्मिकविचारेऽग्रेसरन् मानवो देहातिरिक्तमात्मानमनुभवति, तदा नूनमसौ पञ्चमस्तरात् समुन्नतो विज्ञायते। दशायामस्यां मनुष्येण देहाद् विभिन्नः कश्चित्स्वतन्त्र आत्मानुभूयते स चात्मा देहे मृते न म्रियते। एतदधिकारवान् व्यक्तिविशेषो दार्शनिको धार्मिको वा मतसमूहः स्वर्गनरकसत्तामङ्गीकुरुते। परन्तु जन्मान्तरवादं सृष्टिसम्बन्धियथार्थरहस्यं नावधारयति। इयमवस्था यदीयान्तःकरणसम्बन्धिनी सा किल षष्ठी अज्ञानभूमिरुदीर्यते ॥ १८२ ॥

सप्तमं वर्णयति—

**आत्मातिरिक्तशक्तिवादे सप्तमः ॥ १८३ ॥**

आत्मातिरिक्तो यः शक्तिवादस्तत्र सप्तमोऽज्ञानभूमेः स्तरो वेद्यः। इयं सर्वतोऽन्तिमाऽज्ञानभूमिः। एतदनन्तरमेव ज्ञानभूमय आरभ्यन्ते। अस्यां दशायां दार्शनिकी बुद्धिरिषदुन्नता भवति। परन्तु बुद्ध्यैतया परमेश्वरस्य प्रकृतेर्वा यथार्थं स्वरूपं नावधारयितुं पार्य्यते। तदधिकारवन्तो मानवाः केवलं दार्शनिकदृष्ट्या एतावदेवावधारयन्ति यदात्मातिरिक्ता सर्वव्यापिका काचन शक्तिरपि विद्यते, यया सृष्टि-स्थिति-प्रलयक्रियाः सम्पाद्यन्ते। यद्यपीयमज्ञानभूमिरेव, परन्तु मानवाध्यात्मिकस्थितेरियं समुन्नतदशा विज्ञायते ॥ १८३ ॥

प्रकृतविज्ञानं विशेषतः सुस्पष्टयति—

**सप्तैता अज्ञानभूमयः ॥ १८४ ॥**

अन्यच्चापि—

तदीयावस्था जीवन्मुक्तिः ॥ १५३ ॥

जीवन्मुक्तिः किल तस्यान्तिमा दशा वेद्या। सहजगतिः प्रागेव निर्दिष्टा। सा चास्यामवस्थायां लभ्यते। पूर्णरीत्या शुद्धकर्मानुष्ठानेन अस्वाभाविकसंस्कारविनाशपूर्वकं स्वाभाविकाः संस्काराः पूर्णरूपेण समुद्यन्ति। तदानीमसौ भाग्यवान् महापुरुषः प्रकृतिचेष्टयैव सर्वं विदधाति, न च स्वेच्छया। नवीनं क्रियमाणं कर्म तत्र नोत्पद्यते स्वाभाविकसंस्कारोदयेनास्वाभाविकसंस्कारजनितानि सञ्चितकर्माणि पावकदग्धबीजवन्नाङ्कुराय प्रभवन्ति। केवलं प्रारब्धवेगेनैव कुलालचक्रवदसौ स्वीयां जीवनयात्रां निर्वहति। इयमेव सर्वोत्तमा जीवन्मुक्तदशा ॥ १५३ ॥

तत्प्राप्तये कालं निर्णयति—

तत्प्राप्तिस्तुरीयायाम् ॥ १५४ ॥

तुरीयायामन्तिमायामवस्थायां तस्या जीवन्मुक्तेः प्राप्तिर्जायते। जीवश्चतुर्विधभूतसंघयोनिषु क्रमशः समुन्नमन् मानवीं योनिमधिगत्य जैवकर्माधिकारवान् जायते। दशायामस्यामसावावागमनचक्रे वम्भ्रम्यमाणो यदाऽशुद्धं कर्म परित्यजति शुद्धं च संगृह्णाति, तदानीं यथाक्रममर्थकामवासनां विहाय धर्ममोक्षवासनां परिवर्धयति, प्रवृत्तिमार्गं परित्यज्य निवृत्तिमार्गमाश्रयति। अनन्तरमसौ जन्मजन्मान्तरे क्रमशः आत्मज्ञानं संचिन्वन् शास्त्रज्ञो वेदज्ञस्तत्त्वज्ञो भवन् अन्ते चात्मज्ञानी संभूय तुरीयामवस्थामधिगच्छति, अत्रैव ज्ञानोन्नतेरन्तिमायामवस्थायां महापुरुषा जीवन्मुक्तदशां प्राप्नुवन्ति ॥ १५४ ॥

प्रसङ्गादुच्यते—

जाग्रत्-स्वप्नसुषुप्तयः क्रमात् सत्त्वरजस्तमोरूपाः ॥ १५५ ॥

जाग्रत्स्वप्नसुषुप्तयश्चेति तिस्रोऽवस्थाः क्रमशः सत्त्वरजस्तमो-

रूपा भवन्ति । ताश्च मानवेष्वेव स्वाभाविकाः । मानवान्निम्नश्रेणिजीवेषु जाग्रत् सुषुप्तिश्चेत्यवस्थाद्वयो हि सम्भवति । आवागमनचक्रे प्रवेशमलभमाने जीवेऽस्वाभाविकसंस्कारोदयाभावात् स्वप्नावस्थासम्भावना भवितुं नार्हति । अन्यजीवेषु स्मृतिलक्षणस्य विद्यमानत्वात्चित्तस्यास्तित्ता विद्यते । बुद्धेर्मनसोऽहंकारस्य च लक्षणं तेषु निभाल्यते । किन्तु निम्नश्रेणिजीवेषु बुद्धेश्चित्तस्य च परिपुष्टता नैवास्ति । बुद्धेश्चित्तस्य च साहाय्येन तेनैव स्वप्रकृतिष्वाधिपत्यं संस्थापयन्ति । सुतरां बुद्धेरौन्नत्याभावात् चित्तस्य च बलशालित्वराहित्यात् अस्वाभाविकसंस्काराधिकारशून्यत्वाच्च जाग्रत्सुषुप्तिरित्यवस्थाद्वयमेव तेषु सम्भवतीत्यभ्युपगन्तव्यमेव । जाग्रदवस्था सत्त्वरूपा, स्वप्नदशा तु रजःस्वरूपा, सुषुप्तिश्च तमोगुणमयी विज्ञेया । जाग्रदवस्थायां ते जागर्तिमासाद्य चेतनसहायतया स्वप्रकृतिमनुसृत्य कार्यमनुतिष्ठन्ति । सुषुप्तेर्दशायां तु पूर्णतमोभावापन्ना जड़वत् प्रतीयन्ते । जाग्रत्सुषुप्तिश्चेति दशाद्वयं निम्नश्रेणिजीवेषु स्वाभाविकम् । यदा च जीवो मानवयोनौ पूर्णावयवायां प्रविशति, तदा स्वीयान् भोगलोकानिव जाग्रत्सुषुप्तिमध्यस्थां स्वप्नावस्थामेकामपूर्वामधिगच्छति । स्वप्नमयसृष्टेरेव तद्वैलक्षण्यं विज्ञेयम् । त्रिगुणभेदमनुसृत्य स्वप्नस्तज्जन्या सृष्टिरपि त्रिविधा । स्वप्नो हि सात्त्विको राजसिकस्तामसिकश्च, असम्बद्धा भावा यत्रोपलभ्यन्ते, स हि तामसिकः, स्वप्नः, स्मृतिसाहाय्यसम्प्राप्तो राजसिकः, भूतभविष्यद्वर्तमानदशाज्ञापको दैवशक्तिपरिपूर्णश्च सात्त्विकोऽवगन्तव्यः । सात्त्विकः स्वप्नो मानवान्तःकरणे कदाचिदुदेति न सर्वदा । जाग्रद्दशातः सुषुप्तिदशायां सुषुप्तेश्च जाग्रद्दशायां प्रवेशकाले स्वप्नः परिदृश्यते । सात्त्विकः स्वप्नस्तु तद्भिन्नदशायामनुभूयते । यतस्तत्काले सात्त्विकः परिणामः । एतत् त्रिविधदशासन्धिकाले स्वीयान्तःकरणेष्वाधिपत्यं ये रक्षन्ति त एव महापुरुषा विज्ञेयाः, समुन्नता योगिन एव एवं भवितुमर्हन्ति ॥ १५५ ॥

विज्ञानं स्पष्टीकुरुते—

## गुणातीता तुरीया ॥ १५६ ॥

तुरीया दशा किल गुणातीता गुणेभ्योऽतीता वेद्या। अन्येषु जीवेषु जाग्रत्सुषुप्तिसंज्ञकमवस्थाद्वयं तथैव मनुष्येषु जाग्रत्स्वप्नसुषुप्तिनामकमवस्थात्रयं स्वाभाविकम्। परमेतदवस्थात्रयव्यतिरिक्ता चैका चतुर्थी तुरीया दशाऽपि भवति। सत्त्वरजस्तमसां त्रयाणां गुणानां स्वाभाविकपरिणामानुसारं मनुष्येषु दशात्रयमुत्पद्यते। यदा तत्त्वज्ञानी महापुरुषः स्वस्याः सात्त्विकाया धृतेः सात्त्विकज्ञानयोगादिशक्तीनां च बलेनोपर्युक्तदशात्रयसन्धिकाले योगयुक्ततालाभसामर्थ्यमधिगच्छति, तदानीं तदीयान्तःकरणदशा विलक्षणरूपमेकं प्राप्नोति। अवस्थामेतां सूत्रकारो महर्षिस्तुरीयां प्रोवाच। निर्विकल्पसमाधेरवस्थायामेतस्याम् जीवन्मुक्तदशा समुदयति। यद्यपि तदानीं जाग्रत्स्वप्नसुषुप्तिदशास्त्रिगुणपरिणामस्यानुसारेण तिष्ठन्ति, परन्तु तस्य योगिराजस्यान्तःकरणं सदैव निर्विकल्पसमाधौ तिष्ठति, तेन च स्वस्वरूपमुपलब्धम् अतोऽसौ दशात्रयेण न ग्रस्यते, तत्सन्धावुपस्थितेऽपि योगयुक्त एव तिष्ठति। इयमेव गुणातीता तुरीयादशा प्रोच्यते। दशायामत्र योगिराजस्त्रिगुणग्रस्तो न जायते अतो दशेयं गुणातीता प्रोक्ता ॥ १५६ ॥

पुनरपि विज्ञानं तत् स्पष्टीकुरुते—

## आत्मना सम्बन्धोऽस्याः ॥ १५७ ॥

एतस्यास्तुरीयावस्थाया आत्मना सह सदैव सम्बन्धस्तिष्ठति, व्युत्थानदशायां द्रष्टृदृश्यसम्बन्धे सत्यपि तुरीयदशायामत्र योगिराजो नैवात्मधृतिपरिच्युतो जायते। यथा सूत्रनिबद्धः खग आकाशे सर्वत उड्डयमानोऽपि पुनरपि सूत्रग्राहकस्य स्वप्रभोर्हस्ते समागत्यो-

पविशति, तथैव तुरीयायामवस्थायां प्राप्तौ सत्यां योगिराजस्यान्तःकरणं जाग्रत्स्वप्नसुषुप्तिनामकं दशात्रयं प्राप्तमपि द्रष्टृदृश्यसम्बन्धे स्थापितेऽपि व्युत्थानदशामधिगत्यापि नैवात्मधृतिपरिच्युतं जायते॥१५७॥

अवस्थामिमां पुनः स्पष्टयति—

**तत्र प्रभुत्वम् ॥ १५८ ॥**

तत्र तुरीयावस्थायां सर्वविधमपि प्रभुत्वमधिगम्यते । यथा क्लैशीं शुक्लां च गतिं प्राप्तो महापुरुषः प्रकृतेरधीश्वरः सन् प्रभुत्वमवाप्नोति लोकपार्थक्ये सति जीवन्मुक्ते महात्मनि तादृशदैवशक्तिप्रादुर्भावासम्भवेऽपि तुरीयावस्थायां प्रभुत्वमवाप्यते। दशायामत्र संस्काराणां कर्मणां च बन्धनानि प्रणश्यन्ति । तेन क्रियमाणानि कर्माणि सत्स्वरूपं दधते सर्वथा शुद्धानि च भवन्ति। कश्चिदपि संस्कारस्तस्य बाधां नैव जनयति। ईश्वर इवासौ गुणसंस्कारकर्मसु प्रभुत्वस्थापने समर्थो जायते। तेन विधीयमानं सर्वमपि कर्म धर्मस्वरूपतां प्रतिपद्यते ॥ १५८ ॥

मुक्तिभेदं व्याचष्टे—

**मुक्तिस्त्रिविधा कर्मभिस्त्रिभिः ॥ १५९ ॥**

कर्मभिस्त्रिभिर्हेतुभिर्मुक्तिरपि तुरीयदशा प्राप्ता, त्रिप्रकारा ज्ञेया। तिसृष्वप्येतासु दशासु यद्यपि देशकालपार्थक्यं निभाल्यते, परन्तु ताः पूर्वोक्ततुरीयावस्थायामेवाधिगम्यन्ते। आसां वर्णनमागामिसूत्रेषु समागमिष्यति ॥ १५९ ॥

प्रथमो भेदो निरूप्यते—

**त्रिमूर्त्तिपदम् ॥ १६० ॥**

त्रिमूर्त्तिपदं ब्रह्मविष्णुरुद्रपदं त्रिविधमुक्तिषु प्रथमं विज्ञेयम्।

एवं कर्म द्वरीकृत्य देवलोकेषु समुन्नतानि देवपदानि लभमानाः किं वा देवयोनिषु समुन्नतानि तपांसि समनुतिष्ठन्तो देवेषु केचन महात्मानो ब्रह्मविष्णुरुद्रस्वरूपत्रिमूर्त्तिपदेषु किमप्येकपदं प्राप्य सगुणब्रह्माधिकारमासाद्य ब्रह्माण्डस्याधीश्वरतां प्रपद्यन्ते, तेषामियं ब्रह्मीभूतावस्था विशिष्टगुणानां पूर्णां शक्तिं धारयन्ती पूर्वोक्तभेदेषु प्रथमा मुक्तदशा वेद्या ॥ १६० ॥

द्वितीयभेदं निरूपयति—

## सूर्यभेदिपदम् ॥ १६१ ॥

सूर्यमण्डलभेदिनां पदं मुक्तद्वितीयो भेदः । पदमिदं जैवेन कर्मणा प्राप्यते । ऐशेन कर्मणा त्रिमूर्त्तिपदप्राप्तिस्तु शक्तिविचारतो जीवकोटिमतिशेते । त्रिमूर्त्तिपदं तु वस्तुतः सगुणब्रह्मस्वरूपमेव । द्वितीयास्ववस्थासु पूर्णशक्तिविकासो न जायते । परन्तु सूर्यमण्डलभेदिनां महात्मपदवाच्यतायां नास्ति सन्देहः । जैवकर्मबलेनैव ते गमागमचक्रं भेदयन्तः शुक्लगतिसाहाय्येन मृत्युलोकमिमं परित्यज्य समुन्नततमूर्द्ध्वलोकमधिकुर्वन्ति । शक्तिसमीहां विमुच्य तपांसि साधयन्तः सप्तममूर्द्ध्वलोकमासाद्य ब्रह्मीभावमापद्यन्ते ॥ १६१ ॥

तृतीयं भेदं प्रतिपादयति—

## जीवन्मुक्तिपदम् ॥ १६२ ॥

त्रिविधाया मुक्तेस्तृतीयो भेदो जीवन्मुक्तिपदम् । ऐशं कर्मानुसृत्य त्रिमूर्त्तिपदं प्राप्तस्य मुक्तिर्जायते, जैवकर्मानुसारेण तु सप्तममूर्द्ध्वलोकमधिगम्यान्तिमो मुक्तिपदसमुदयः । एतत्सूत्रानुमोदितजीवन्मुक्तिपदं तु सहजेनैव कर्मणा प्राप्यते, सहजकर्मद्वाराऽत्रैव मृत्युलोके स्थूले शरीरे विद्यमानेऽपि तत्कर्मपरिणामे या मुक्तिः प्राप्यते, सा जीवन्मुक्तिपदेनाभिधीयते । जीवन्मुक्तिपदस्य सविस्तरं वर्णनं

प्रागेव समुदीरितम् । जीवः सहजकर्मबलेन क्रमशः समुन्नमन् मानवयोनिमासाद्य जैवकर्माधिकारी भवन् आवागमनचक्रे यन्निपतति, तदेव तस्य कृष्णा गतिर्बोध्या । किन्तु स एवोग्रकर्मा तपस्वी जीवो दैवीं शक्तिमधिगन्तुमिच्छया विशिष्टां देवयोनिं प्रविशति, तदा कालान्तरे ऐशकर्मणोऽन्तिमशुभपरिणामं प्राप्नोति । किं वा यदि कश्चिदुग्रकर्मा तपस्वी स्वकीयोग्रपुण्यकर्मवेगेन सहसैव शुक्लगतिमाश्रयन् सप्तममूर्द्ध्वलोकमासादयेत, तदानीमसौ महापुरुषः पूर्वोक्तजैवकर्मणोऽन्तिमां शुभप्रतिष्ठामवाप्नोति । परन्तु यदि कश्चिन्महात्माऽत्रैव मृत्युलोके वसन् अनेनैव मानवशरीरेण कर्मयोगीभवन् जैवकर्माधिकारं परित्यजन् आवागमनचक्रं भेदयन् पुनः सहजकर्मणोऽलौकिकीं दशां प्राप्तः सहजकर्मणो यदन्तिमं परिणाममधिगच्छति, तदेव तस्य जीवन्मुक्तिपदस्य रहस्यमवधेयम् ॥ १६ ॥

प्रसङ्गोपात्तशङ्कां समाधत्ते—

**तदा नैसर्गिकत्वं वृत्तीनाम् ॥ १६२ ॥**

तदा जीवन्मुक्तदशायां वृत्तीनां नैसर्गिकत्वं स्वाभाविकत्वं निगद्यते । जिज्ञासुरत्र शङ्कते—ननु यदि जीवन्मुक्तिदशाप्राप्तिः स्थूलशरीरविद्यमानत्व एव सम्भवति चेत्तदानीमाहारनिद्रादिभावानाम्, जाग्रत्स्वप्नसुषुप्तिदशानाम्, सुखदुःखादिमनोवृत्तीनां सत्यनुभवे मुक्तावस्थाप्राप्तिः कथं संगच्छेत? सत्यम् । पूज्यपादः सूत्रकारो महर्षिः सूत्रमेतदाविष्कुर्वन् एतादृशीं शंकां समाधत्ते—जैवकर्मपरिचालितगमागमचक्रभेदनपूर्वकं महापुरुषो जीवन्मुक्तपदं यदा प्रतिष्ठते तदानीं जैवकर्मणोऽवान्तरभेदास्ततो विनश्यन्ति, स्वस्वरूपोपलब्ध्या सञ्चितानि कर्माणि तं विमुञ्चन्ति । तदीयान्तःकरणस्य कामनाशून्यत्वात् क्रियमाणानि कर्माण्यपि तत्सम्बन्धं परित्यजन्ति, शरीररूपदृश्यस्य द्रष्टृत्वं स्थूलसूक्ष्मकारणशरीरस्य पार्थक्यमात्मनोऽनुभवन्तं महा-

पुरुषमेतं प्रारब्धकर्माण्यपि नैव स्ववप्रभाववशवर्त्तिनं कर्त्तुमर्हन्ति, वस्तुतो जीवन्मुक्तदशायां महापुरुषस्य तस्य मानसिक्यो वृत्तयः स्वाभाविकतां प्रतिपद्यन्ते। प्रकृतिप्रेरणानुसारमेवासौ जीवनयात्रां स्वकीयां निर्वहति। कुलालचक्रभ्रमणवन्नैजं शरीरं परिचालयति, अज्ञानिनस्तु तं सदसत्कर्मकर्त्तारं मन्यन्ते, परं ज्ञानिना तु निष्क्रियः प्रकृतिमातृपरिचालितोऽवगम्यते ॥ १६३ ॥

तत्कारणमुदीरयति—

ज्ञानापेक्षं तत् ॥ १६४ ॥

तत् जीवन्मुक्तिप्राप्तित्वं, ज्ञानापेक्षं, ज्ञानस्यापेक्षा यत्र तथाऽवगन्तव्यम्। विलक्षणलोकोत्तरदशाया एतस्याः प्राप्तिः कथमिति शङ्कां निराकरोति। तादृशी दशाऽऽत्मज्ञानद्वारेणाधिगन्तुं शक्यत इत्यत्र नास्ति सन्देहलेशः। यदा तत्त्वज्ञानं द्वारीकृत्य राजयोगं प्राप्तो महापुरुषः प्रकृतेस्तात्त्विकं स्वरूपं प्रकृतिपुरुषयोश्च दृश्यद्रष्टृत्वं सम्यग्विज्ञातुमर्हति, तदानीं तं किमपि प्राकृतिकं दृश्यं कापि वा प्रकृतिस्पन्दनस्वरूपिणी क्रिया स्ववशवर्त्तिनं विधातुं नार्हति। स्वरूपोपलब्धौ सत्यां परमविश्रान्तसच्चिदानन्दमयब्रह्मसद्भावतो नासावतिरिच्यते। सुतरामात्मज्ञानी महापुरुषो जीवन् एव मुक्तो जायते ॥ १६४ ॥

दशैषा स्पष्टीक्रियते—

क्षणस्था व्युत्थानवृत्तयस्तस्य ॥ १६५ ॥

तस्य जीवन्मुक्तमहात्मनो व्युत्थानस्य वृत्तयः क्षणस्थाः क्षणस्थायिन्यो भवन्ति, अत्रात्मज्ञानपरिपूर्णदशायां स्वरूपोपलब्ध्या विश्रान्तौ सत्यां पूर्णा शान्तिर्विराजते, परन्तु शरीरस्य विद्यमानतया जागतिकस्य दृश्यप्रपञ्चस्य सर्वविधकर्मकलापस्य सद्भावेन द्रष्टृ-

दृश्यसम्बन्धस्थापनकारिणी व्युत्थानदशाऽपि सम्भवति, किन्तु भेदस्तावदियानेव यत् साधारणे मानवे व्युत्थानदशा सर्वदैव जागर्त्ति, किन्तु जीवन्मुक्तमहापुरुषे सा क्षणस्थायिनी भवति। ननु सहजकर्माधीनेषु पश्वादिजीवेषु जीवन्मुक्तेषु चापि यदि वृत्तयः क्षणस्थायिन्यस्तदानीमुभयत्र को भेद इति शङ्का चेत् समाधत्ते—पश्वादिचतुर्विधभूतसंघेषु पूर्णरूपेण तमोगुणस्तिष्ठति, जीवन्मुक्तेषु तु पूर्णस्य सत्त्वगुणस्याधिष्ठानम्। पश्वादिवृत्तीनां क्षणस्थायित्वेऽपि तद्विलयस्तमोगुणे जडभावापन्नदशायां सम्पद्यते; परन्तु जीवन्मुक्तमहापुरुषस्य क्षणस्थायिवृत्तीनां सत्त्वगुणे विलयो जायते, तदानीं तत्र पूर्णं चैतन्यमवशिष्यते। विज्ञानमिदं प्रकारान्तरेणापि बोध्यम्। वृत्तीनां पूर्णस्वरूपेण कार्यानुष्ठानं रजोगुणस्य कार्यं समाम्नायते। रजोगुणस्य स्वभावात् रजसो दशेयं क्षणानन्तरमेव प्रणश्यति, पश्वादिप्राकृतिकजीवेषु रजोगुणस्तमःस्वरूपजाड्यभावं धृत्वा विलीयते। परन्तु जीवन्मुक्तमहात्मनि रजोगुणोऽसौ सत्त्वगुणस्वरूपेण परिणमन् स्वस्वरूपे विलयं गच्छति, यतस्तदीया विश्रान्तिः सदैव स्वस्वरूपे विराजते, इदं तु सर्वतो विशिष्यावधेयं यत् व्युत्थानदशायाः क्षणस्थायित्वं केवलं जीवन्मुक्तावस्थायामेव घटते, नान्यत्र। यतो बद्धमानस्यान्यस्य जीवस्य वा वृत्तयः स्वपूर्णस्वरूपे तिष्ठन्ति, किं वाऽज्ञानप्रमादसुषुप्त्यादिषु विलयं प्रपद्यन्ते। तन्मूलनाशो न जायते। परन्तु जीवन्मुक्ते तद्वैपरीत्यं निभाल्यते। यतस्तदीयान्तःकरणे सहजकर्मानुसारेण व्युत्थाने सत्यपि तद्वेगः समाप्यते। तदानीं स्वस्वरूपावस्थानमवशिष्यते। लोकातीतदशेयं जीवन्मुक्ते महात्मन्येव सम्भवति॥ १६५॥

वृत्तिसम्बन्धेन प्रकृतविषयमवगमयति—

**षड्जीववृत्तयस्त्रिगुणभेदात्॥ १६६॥**

त्रिगुणानां भेदेन जीवानां वृत्तयः षट्प्रकारा विज्ञेयाः। सर्वेष्वपि जीवेषु षड्वृत्तयः स्वाभाविक्यः सहजाश्च। आहारो, निद्रा, भयं, मैथुनं, ज्ञानं सुखेच्छेति षड्वृत्तयः, तेषु आद्यद्वयी तमोगुणस्य मध्यद्वयी रजोगुणस्य. अन्तद्वयी च सत्त्वगुणस्य वृत्तयोऽवधेयाः। निद्राहारयोः स्थूलशरीरेण घनिष्ठः सम्बन्धः। अतो जड़वस्तुसम्बन्धोपेतत्वाद् द्वावप्येतौ तामसिकश्रेणिष्वन्तर्भवतः, भयं मैथुनं चेति-वृत्तिद्वयं परिणामशीलम् नच नित्यं न वा समानरूपेण सर्वत्रैव देशे काले पात्रे वा तिष्ठति, अतस्तद् राजसिकश्रेणावन्तर्भवितुमर्हति। द्रष्टृदृश्ययोस्तटस्थज्ञानं सुखेच्छेत्यानन्दमूलकत्वाद् द्वितयमेतत् सत्त्वगुणसम्बन्धनिबन्धनमवधेयम् ॥ १६६ ॥

तत्समानाधिकारो निरूप्यते—

सर्वत्र समाः ॥ १६७ ॥

आहारो निद्रा भयं मैथुनं ज्ञानं सुखेच्छेति षड्वृत्तयः सर्वत्र सर्वेष्वपि जीवेषु समानास्तिष्ठन्ति। उद्भिज्जस्वेदजाण्डजजरायुजाख्येषु चतुर्विधभूतसंघेषु मानवादिमृत्युलोकजीवेषु देवलोकजीवेषु च सर्वेष्वपि वृत्तय इमाः परिव्याप्नुवन्ति। उद्भिज्जा अपि जलमृत्तिकादिखादपदार्थादिना परिपोषतां प्राप्नुवन्ति तेऽपि रात्रौ निद्रान्ति, अतो रात्रौ पुष्पपत्रफलचयनं निषिद्धम्। वज्रपातादिभयेन वृक्षा म्रियन्ते। उद्भिज्जादिषु मैथुनक्रिया प्रत्यक्षसिद्धा। तेषु इन्द्रियज्ञानजनितटस्थज्ञानस्य प्रमाणं तु प्रागेव प्रदत्तम्। सुखेच्छाऽपि ऋतुभेदेन तेषु प्रत्यक्षसिद्धा। विवेकतो विचार्यमाणे समुन्नतजीवेषु वृत्तयस्ता सौकर्येणोपलभ्यन्ते। सहजकर्मसम्भूतत्वादासां एतद्वृत्तीनां सर्वत्रैव समानाधिकारो विद्यते ॥ १६७ ॥

इदानीं जीवन्मुक्तदशा निरूप्यते—

जीवन्मुक्ते राजसी भ्रष्टबीजवत् ॥ १६८ ॥

जीवन्मुक्ते महात्मनि राजसीवृत्तिर्दग्धबीजवत् परिबोध्या। जीवन्मुक्तदशायाम् आहारनिद्राज्ञानसुखेच्छावृत्तयो रूपान्तरेण सन्तिष्ठन्ते। परन्तु भयं मैथुनं चेति वृत्तिद्वयं दग्धबीजवज्जायते। जीवन्मुक्तमहात्मनि प्रकृतिस्थे जाते तत्र स्वस्वरूपस्य पूर्णविकासत्वात केवलं शरीररक्षार्थमेव आहारादिक्रियाः सम्पद्यन्ते न भोगजनिताः। निद्रावृत्तिसन्धिकाले पूर्णाधिपत्यं तत्र तिष्ठतीति पूर्वमेव सुनिरूपितम्। तस्य सुखेच्छा, तटस्थज्ञानञ्च जगन्मङ्गलविधायकं परार्थमेव सम्भवति। अत इदं सिद्धयति यच्चतस्रोऽपि वृत्तयस्तत्र रूपान्तरेण विलसन्ति किंतु भयं मैथुनं चेतिवृत्तिद्वयं दग्धबीजवत् क्रियारहितं जायते। सृष्टेरिच्छाया मूलोच्छेदात् कामनाया विलयेन च कामवृत्तिः, आत्मज्ञानप्राप्त्या भयवृत्तिश्च दग्धबीजवत् समूलं प्रणश्यतः। शंकते ननु दग्धबीजोदाहरणं रजोजनितवृत्तावेव कथं प्रदत्तम्? अन्यासु वृत्तिषु कथं न दत्तम्? समाधत्ते—नवीनप्रतिक्रियारूपाङ्कुरजनने दग्धबीजस्यासामर्थ्यात् तदुदाहरणं रजोगुणवृत्तावेव घटते, नान्यवृत्तिचतुष्टयेषु। यतो जीवन्मुक्ते निद्राऽहारजनिता तृप्तिः पुष्टिश्च भवतः। अन्यच्च जगद्ब्रह्मस्वरूपमिति ज्ञानेन ज्ञानं सुखेच्छा च तिष्ठत एव ॥ १६८ ॥

मोक्षप्रसङ्गादुच्यते—

सप्तावस्थाः कर्मिणां सप्तभेदवत् ॥ १६९ ॥

कर्मिणां कार्यकर्तृणां सप्तभेद इव सप्तप्रकारा दशाः सम्भवन्ति। सृष्टिसम्बन्धिनः सप्तभेदाः स्वाभाविकाः। यथा कालस्य सप्तदिनानि, स्थूलशरीरस्य सप्तधातवः, प्रकाशस्य सप्तवर्णाः, अन्धकारस्य सप्तच्छायाः, देवलोकस्य सप्तस्तराः, असुरलोकस्य च सप्तभेदा इत्यादि।

एतन्नियमानुसारेणैव कर्मिणामपि दशाः सप्तभिः श्रेणिभिर्विभक्तुं शक्यन्ते। आसां सविस्तरवर्णनमग्रिमेषु सूत्रेषु समायास्यति ॥१६९॥

प्रथमां वर्णयति—

शुभेच्छा ॥ १७० ॥

कर्मिणां सप्तस्ववस्थासु प्रथमा शुभेच्छा विज्ञेया। तथाहि स्मृतौ:—

स्थितं किं मूढ एवास्मि प्रेक्ष्येऽहं साधु सज्जनैः।
वैराग्यपूर्णमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥

एतस्या योगभूमेस्तात्पर्यमिदं यत् आवागमनचक्रे बम्भ्रम्यमाणेऽभ्युदयं प्राप्नुवन् प्रवृत्तिमार्गसीमतो निवृत्तिसीमनि समागतो जीवः साधकः कर्माधिकारममुमधिगच्छति। स च भाग्यवान् अशुभकर्मतो विरक्तिं शुभे कर्मणि चानुरक्तिं प्राप्नोति ॥ १७० ॥

द्वितीयां वर्णयति—

विचारणा ॥ १७१ ॥

स्मर्यते चाऽत्र—

शास्त्रसज्जनसम्पर्कवैराग्याभ्यासपूर्वकम्।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥

प्रथमभूमेः प्राप्तौ शुभाशुभकर्मविवेकपूर्वकमशुभदोषदर्शनाधिक्यं तिष्ठति। द्वितीयायां भूमौ तु शुभे कर्मणि यथार्थतः प्रवृत्तिर्जायते पुरुषोऽसौ पुण्यात्मतां प्रतिपद्यते ॥ १७१ ॥

तृतीयां व्याकरोति—

तनुमानसा ॥ १७२ ॥

तनु क्षीणं मनो यस्यां सा तनुमानसा प्रोच्यते। तथा हि स्मृतौ—

विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वसक्तता।

यत्र सा तनुताभावात् प्रोच्यते तनुमानसा॥

पूर्वोक्तं भूमिद्वयं समतिक्रम्य साधको यदिन्द्रियभोगवस्तुन्यनासक्तिमधिगच्छति तदानीमशुद्धस्य मनसो वेगः प्रक्षीयते। तस्मिन् काले स्वकीयामशुद्धतां प्रक्षीणयन् मनो शुद्धं भावप्रणोदितं जायते, वस्तुत आसक्तेः क्षीणत्वात् हीनत्वाच्च दशेयं 'तनुमानसा' प्रोक्ता॥ १७२॥

चतुर्थीं कथ्यते—

## सत्त्वापत्तिः॥ १७३॥

सत्त्वे शुद्धे आत्मनि आपत्तिरवस्थितिर्हि सत्त्वापत्तिः प्रोक्ता। एतत्सम्बन्धे स्मृतौ चापि दृश्यते—

भूमिकात्रितयाऽभ्यासाच्चित्तेऽर्थे विरतेर्वशात्।

सत्त्वात्मनि स्थितिः शुद्धे सत्त्वापत्तिरुदाहृता॥

योगभूमावत्र साधक आसक्तिशून्यः सद्भावस्थानं कुर्वन् सत्स्मरणपूर्वकं सर्वाण्यपि कर्माणि भावशुद्ध्या विदधाति॥ १७३॥

पञ्चमीमुपवर्णयति—

## असंसक्तिः॥ १७४॥

पूर्वोक्तदशाचतुष्टयाभ्यासात् फलासक्तिपरित्यागपुरस्सरं सत्त्वरूढतैव असंसक्तिरुच्यते। तथा हि स्मृतौ—

दशाचतुष्टयाभ्यासादसंसङ्गफलेन च।

रूढसत्त्वचमत्कारात् प्रोक्ताऽसंसक्तिनामिका॥

अशुद्धमासक्त्या शुद्धं च मनो भावद्वारा परिचाल्यते। पूर्वोक्ते भूमिद्वये आसक्तिसम्बन्धस्तिष्ठति, तृतीयायां चतुर्थ्यामवस्थायां च साधकस्यान्तःकरणे यथाक्रमं भावसम्बन्धो राजते। पञ्चमयोगभूमावत्र भाग्यवान् साधको निष्कामव्रतधारी भवन् जगद्ब्रह्मस्वरूपमवधाय सत्त्वारूढो भूत्वा कर्मविधानयोग्यतामधिगच्छति ॥ १७४ ॥

षष्ठी प्रोच्यते—

तद्भाविनी ॥ १७५ ॥

विषयेऽत्र स्मृतौ प्रोक्तं यथा—

भूमिकापञ्चकाभ्यासात् स्वात्मारामतया दृढम्।
तथैवाभ्यन्तराणां हि बाह्यानामप्यभावनात् ॥
परप्रयुक्तेन चिरं प्रयत्नेनार्थभावनात्।
पदार्थभावनानाम्नी षष्ठी संजायते गतिः ॥

तात्पर्यमिदं यत् षष्ठ्यां योगभूमावत्र भावविचारतश्चित्तं दूरीभवति, आत्मविचारे स्थिरता प्राप्यते तदानीं तस्य सौभाग्यवतः कर्मिणो गतिः सर्वप्रकारेण कर्मण्यकुण्ठतां प्रतिपद्यते ॥ १७५ ॥

सप्तमी प्रणिगद्यते—

तुरीया ॥ १७६ ॥

अस्या भूमेर्विषये स्मृतौ प्रोक्तं तथाहि—

भूमिषट्कचिराभ्यासात् भेदस्यानुपलम्भतः।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥
योगो हि कर्म नैपुण्यं कर्मयोगेन तेन वै।
अतिक्रमन् सप्तयोग-भूमिकामधिगम्यते ॥

तात्पर्यमेतद् यत् सप्तम्यां ज्ञानभूमौ महापुरुषोऽद्वैतभावं धारयन्

सदैव युक्तोभूत्वा कर्मणोऽकर्मणश्चावस्थायामेकरूपतां प्रतिपद्यते ॥ १७६ ॥

भेदकारणमुदीरयति—

**अधिकारभेदात् ताः ॥ १७७ ॥**

अधिकारस्य भेदेन ता अवस्थाः सम्भवन्ति। संस्कारशुद्धेः क्रियाशुद्धेश्च विभिन्नदशासु ये यथाक्रममधिकारमासादयन्ति तदधिकारभूमीनामनुसारेणैव कर्मणामपि सप्तावस्थाः कर्मगतिवेत्तृभिर्महात्मभिर्निर्णीताः सन्ति। ताश्च नैव काल्पनिकस्वरूपाः किन्तु तात्त्विकरूपा वेदितव्याः। क्रमश एकस्या अनन्तरमाधिगम्यन्ते। यदि काश्चन पूर्वजन्मनि जन्मान्तरेषु वाऽधिकृतास्तर्हि सहसैव समुन्नतावस्था प्राप्तुं शक्यते ॥ १७७ ॥

अवस्थास्ताः सुस्पष्टयति—

**पार्वत्यक्षेत्रवत् ॥ १७८ ॥**

एता अवस्थाः पर्वतीयक्षेत्रवत् परिज्ञातव्याः। पर्वतेषु भ्रमणकारिणां पथिकानां विदितमिदं यत् उच्चतरपर्वतेषु यत्र कृषिजीविनो मानवा निवसन्ति, तत्रान्नानि समुत्पादयितुं यानि क्षेत्राणि निर्मीयन्ते तेषां स्तरा विभिन्ना भवन्ति, तानि च परापेक्षया समुन्नतानि भवन्ति। अन्यथा तानि कर्षणोचितानि जलनिवासयोग्यानि न स्युर्न वा तेषु अन्नानि समुत्पद्येरन्। अतः पर्वतेषु स्वतन्त्रस्तरमयक्षेत्राणि निर्मीयन्ते, तथैव संस्कारशुद्धिं क्रियाशुद्धिं च समधिगत्यान्ते च मुक्तिपदमासादयितुं सप्तकर्माधिकारा एते निर्णीताः सन्ति ॥ १७८ ॥

पुनर्मोक्षप्रसङ्गाद् व्याहरति—

**चतुर्दशविधो ज्ञानाज्ञानाधिकारो लोकवत् ॥ १७९ ॥**

चतुर्दशलोकवत् ज्ञानाज्ञानयोरधिकारोऽपि चतुर्दशविधो विज्ञेयः।

यथा भूः भुवः, स्वः, महः, जनः, तपः सत्यं चेति सप्तलोकाः क्रमशः ऊर्ध्वस्थिताः सन्ति, यथा च अतलं वितलं सुतलं तलातलं रसातलं महातलं पातालश्चेति सप्तक्रमशो निम्नश्रेणिलोकाश्चेतिउभये मिलित्वा चतुर्दशलोका एकत्र ब्रह्माण्डे भवन्ति, तथैव आध्यात्मिकं राज्यमपि चतुर्दशभेदभिन्नमवगन्तव्यम् । एतद्भेदानां सविस्तरं वर्णनमग्रिमेषु सूत्रेषु निभालनीयम् ॥ १७९ ॥

प्रथमाश्चतस्रोऽज्ञानभूमयः प्रोच्यन्ते—

**चिदाकाशे चत्वारो भूतसंघस्य ॥ १८० ॥**

भूतानां चतुर्विधानां संघस्य समुदायस्य चिदाकाशे चतस्रोऽज्ञानभूमयः क्रमशो विकसन्ति । उद्भिज्जानां समष्टिचिदाकाशे प्रथमा स्वेदजानां द्वितीया, अण्डजानां, तृतीया जरायुजपशूनां च समष्टिचिदाकाशे चतुर्थीति क्रमशश्चतस्रोऽज्ञानभूमयो विकासमायान्ति । यद्यप्यज्ञानावस्था तमोगुणविचारानुसारं तासूत्तरोत्तरं ह्रसन्ति, किन्तु ता अज्ञानाच्छादिता इत्यज्ञानभूमयः प्रणिगद्यन्ते ॥ १८० ॥

पञ्चम्या अज्ञानभूमेः स्वरूपं निर्णयति—

**पञ्चमो देहात्मवादे ॥ १८१ ॥**

देहात्मवादे देह एव आत्मा यत्र स वादो देहात्मवादस्तत्र पञ्चमोऽज्ञानस्तरो वेद्यः । जीवो यदा चतुर्विधभूतसंघयोनिषु परिभ्रमन् मानवशरीरमासादयति, तदानीमसौ पाशवप्रवृत्तेराधिक्येन देहात्मवादी जायते । परलोकादिष्वविश्वसन् शरीरे पूर्णाध्यासं कुर्वन् पशुरिव देहमेव आत्मानं मन्यते । किञ्चैतदपि वक्तुं शक्यते यद् ये मानवा देहात्मवादे निरता नास्तिक्यहेतुना देहभिन्नस्यात्मनोऽस्तित्वं नाभ्युपगच्छन्ति, ते पञ्चमाज्ञानभूमेरन्तर्गता अवगन्तव्याः । संसारे बहूनि नास्तिकदर्शनानि देहात्मवादमतपोषकाणि सन्ति, तानि सर्वाणि चैतत्पञ्चमाज्ञानभूमिसम्भूतानि ज्ञातव्यानि ॥ १८१ ॥

षष्ठीमज्ञानभूमिं वर्णयति—

**देहातिरिक्तात्मवादे षष्ठः ॥ १८२ ॥**

देहादतिरिक्तः आत्मा यत्र स वादो देहातिरिक्तात्मवादस्तत्र अज्ञानभूमेः षष्ठस्तरो विज्ञेयः। यदा देहात्मवादभूमेस्तरमतिक्रामन् आध्यात्मिकविचारेऽग्रेसरन् मानवो देहातिरिक्तमात्मानमनुभवति, तदा नूनमसौ पञ्चमस्तरात् समुन्नतो विज्ञायते। दशायामस्यां मनुष्येण देहाद् विभिन्नः कश्चित्स्वतन्त्र आत्मानुभूयते स चात्मा देहे मृते न म्रियते। एतदधिकारवान व्यक्तिविशेषो दार्शनिको धार्मिको वा मतसमूहः स्वर्गनरकसत्तामङ्गीकुरुते। परन्तु जन्मान्तरवादं सृष्टिसम्बन्धियथार्थरहस्यं नावधारयति। इयमवस्था यदीयान्तःकरणसम्बन्धिनी सा किल षष्ठी अज्ञानभूमिरुदीर्यते ॥ १८२ ॥

सप्तमं वर्णयति—

**आत्मातिरिक्तशक्तिवादे सप्तमः ॥ १८३ ॥**

आत्मातिरिक्तो यः शक्तिवादस्तत्र सप्तमोऽज्ञानभूमेः स्तरो वेद्यः। इयं सर्वतोऽन्तिमाऽज्ञानभूमिः। एतदनन्तरमेव ज्ञानभूमय आरभ्यन्ते। अस्यां दशायां दार्शनिकी बुद्धिरीषदुन्नता भवति। परन्तु बुद्ध्यै तया परमेश्वरस्य प्रकृतेर्वा यथार्थं स्वरूपं नावधारयितुं पार्य्यते। तदधिकारवन्तो मानवाः केवलं दार्शनिकदृष्ट्या एतावदेवावधारयन्ति यदात्मातिरिक्ता सर्वव्यापिका काचन शक्तिरपि विद्यते, यया सृष्टि-स्थिति-प्रलयक्रियाः सम्पाद्यन्ते। यद्यपीयमज्ञानभूमिरेव, परन्तु मानवाध्यात्मिकस्थितेरियं समुन्नतदशा विज्ञायते ॥ १८३ ॥

प्रकृतविज्ञानं विशेषतः सुस्पष्टयति—

**सप्तैता अज्ञानभूमयः ॥ १८४ ॥**

एताः पूर्वोक्ताः सप्त अज्ञानभूमयः समाख्यायन्ते । दार्शनिके जगति दृशाः प्रागुक्ता अज्ञानभूमिसम्बन्धिन्यः । यतो लोकातीतं तत्त्वज्ञानम् आत्मज्ञानस्य विकासो वा नासु दशासु जायते । सप्तानामप्यज्ञान-भूमीनां विषये स्मृतौ चापि विवेचितं निमाल्यतं, तथाहि—

उद्भिज्जानां चिदाकाशे प्रथमाऽज्ञानभूमिका ।
स्वेदजानां चिदाकाशे सा द्वितीया प्रकीर्त्तिता ॥

तृतीयाऽण्डजजातेश्चाज्ञानभूमिश्चिदाश्रिता ।
जरायुजपशूनां च चिदाकाशे चतुर्थ्यसौ ॥

पञ्चकोषप्रपूर्णत्वाधिकारिष्वेव वै नृषु ।
सन्ति शेषा अधिकृतास्तिस्रस्त्वज्ञानभूमयः ॥

तिस्रस्ता एव कथ्यन्त उत्तमाधममध्यमाः ।
विशदं ताः प्रचक्षेऽहं श्रूयतां विप्रपुङ्गवाः ॥

एता अज्ञानभूमीर्हि तिस्र एव समूहतः ।
मूर्त्तिमन्तः स्वयं वेदा निराकर्त्तुं समुद्यताः ॥

अधमाऽज्ञानभूमौ हि यावन्मर्त्यः प्रसज्जते ।
कृतेऽपराधे दण्ड्यः स्यात् तिर्यग्योनौ तदुद्भवः ॥

मध्यमाज्ञानभूमेश्च मानवैरधिकारिभिः ।
पितृलोकास्तथा विप्राः! नारकाश्च पुनः पुनः ॥

प्राप्यन्ते मृत्युलोकश्च सुखदुःखादिपूरितः ।
ददात्यूर्द्ध्वञ्च स्वर्लोकमुत्तमाऽज्ञानभूमिका ॥

अधमाज्ञानभूमिं च प्राप्ता मर्त्या भवन्त्यहो ।
देहात्मवादिनोऽनार्या नास्तिकाः शौचवर्जिताः ॥

मध्यमाज्ञानभूमेस्तु मानवा अधिकारिणः ।
आस्तिकत्वेन भो विप्राः! सद्विचारपरायणाः ॥

देहात्मनो हि पार्थक्यं विश्वसन्तोऽपि सर्वथा ।
इन्द्रियाणां सुखे मग्ना नितरामैहलौकिके ॥
विस्मरन्ति महामूढाः सुखं ते पारलौकिकम् ।
उत्तमाज्ञानभूमेर्वै पुण्यवन्तोऽधिकारिणः ॥
आत्मातिरिक्तं मे शक्तेर्मत्वाऽस्तित्वं द्विजर्षभाः ।
स्वर्गीयस्य सुखस्यैव जायन्ते तेऽधिकारिणः ॥
अधमाज्ञानभूमिर्वै तमोमुख्या विजृम्भते ।
तमोरजःप्रधाना च मध्यमास्ते प्रकीर्तिता ॥
उत्तमाज्ञानभूमिश्च रजःसत्त्वप्रधानिका ।
शुद्धसत्त्वविकाशस्य स्थले नूनं यथाक्रमम् ॥
पुण्यभाजां मनुष्याणां चिदाकाशे ततो द्विजाः ।
सप्तानां ज्ञानभूमीनामधिकाराः क्रमेण हि ॥
समुद्यन्ति ध्रुवं देव-दुर्लभानां स्वभावतः ॥ इति ॥ १८४ ॥

विषयमिमं परिपोषयति—

**अविद्यानिलयाः ॥ १८५ ॥**

पूर्वोक्ताः सप्ताप्यज्ञानभूमयोऽविद्या निलया अविद्याया आलया विद्यन्ते । अज्ञानजननी अविद्या सप्तस्वेतासु विराजते । देहेन्द्रियासक्तिनास्तिकत्व-तत्त्वज्ञानात्मज्ञानाविरोधिनः संस्कारसमूहास्तासु सन्निविष्टन्ते । आद्याश्चतस्रस्तत्त्वज्ञानाच्छादिताः सन्त्येव, किन्तु परवर्त्तिन्योऽपि तिस्रोऽज्ञानादिदोषावहाः । अत एतदभ्युपगन्तव्यमेव यत् पूर्वोक्ताः सप्ताज्ञानभूमयोऽविद्याया विद्यन्त आश्रयस्थानानीति ॥१८५॥

मोक्षपथं सरलीकुर्वन् आह—

**विद्याक्षेत्रं सप्तज्ञानभूमयः ॥ १८६ ॥**

सप्तज्ञानभूमयोऽग्रिमसूत्रेषु प्रतिपादयिष्यमाणा विद्यायाः क्षेत्रम्। यथा सप्त पूर्वोक्ता अज्ञानभूमयोऽविद्याया आश्रयस्थानानि तथैव सप्तज्ञानभूमयो विद्याया विहारक्षेत्रम्। अज्ञानभूमीनामनन्तरं सप्तसु ज्ञानभूमिषु आध्यात्मिकया समुन्नत्यैव सह जीवेषु सृष्टितत्त्वरहस्यम् ईश्वरशक्तित्वं परमात्मतत्त्वं तत्रज्ञानमात्मज्ञानं विशेषतो मुक्तितत्त्वं च क्रमशो विकासमायान्ति। उक्तं च स्मृतिशास्त्रे—

हे विज्ञानविदो विप्राः! नन्वज्ञानस्य सप्तभिः।
प्रपूर्णं सप्तभिः सम्यक् तथा ज्ञानस्य भूमिभिः॥

नूनमास्ते महाकाशगोलकं परमाद्भुतम्।
तस्य निम्नस्तराः सप्त सप्तच्छायाः प्रपूरिताः॥

उच्चैः सप्तस्तरा सप्त ज्योतिभिश्चैव पूरिताः।
अधःच्छायास्तराः सन्ति चत्वारो हि समाष्ठतः॥

चतुर्धाभूतसंघानां चिदाकाशेन पूरिताः।
स्तरा अज्ञानभूमीनां तत ऊर्द्ध्वं गतास्त्रयः॥

ज्ञानभूमिस्तराः सप्त तथा दशविधानमून्।
धृत्वाऽधिकारान् सम्पूर्णान् पिण्डान् दैवांश्च मानवान्॥

व्याप्नुवन्ति न सन्देहस्तस्माद्विज्ञानवित्तमाः।
एतादृशविधेष्वेवाधिकारेष्वखिला हि ताः॥

निम्नान्निम्नतरा एवमुच्चैरुच्चतमास्तथा।
दार्शनिकाधिकारा हि सन्ति सम्मिलिता ध्रुवम्॥

अघट्यघटनायां सा प्रकृतिर्मे पटीयसी।
मत्तो व्यक्ता महाकाश-गोलकेऽत्र प्रकाशते॥

ऊर्द्ध्वंगाः सप्तभूमिर्वै सा विद्यारूपतोऽश्नुते।
अविद्यारूपतो विप्राः सप्तभूमिश्च निम्नगाः॥

सप्तच्छायाभिरेताभिर्ज्योतिर्भिः सप्तभिस्तथा ।
परिपूर्णं महाकाश-गोलकं मे जड़ात्मिका ॥
बिभर्त्ति प्रकृतिर्नित्यं नूनमाधाररूपतः ।
अहं तस्योपरिष्ठाच्च सन्तिष्ठे शुद्धचिन्मयः ॥
ज्ञानिनः स्याद्धि यस्यादोऽध्यात्मगोलकदर्शनम् ।
मद्दर्शनं ध्रुवं कर्त्तुं शक्नुयात् सर्वथैव सः ॥ इति ॥

उपर्य्युक्तज्ञानगोलकरूपस्यौपनिषदिकदृश्यस्य मननेन ज्ञानाज्ञानभूमीनां विस्तारं तथा तासां पृथक् पृथक् विद्याऽविद्याविलक्षणरहस्यं ज्ञानवान् पुरुषोऽनायासेनावगन्तुं शक्नुयात् ॥ १८६ ॥

प्रथमां ज्ञानभूमिं वर्णयति—

## ज्ञानदा ॥ १८७ ॥

प्रथमा ज्ञानभूर्दिज्ञानदा नाम्नी प्रोच्यते । स्मर्यते चात्र—

आद्यायां ज्ञानदानाम्न्यां ज्ञानभूम्यां मुमुक्षवः ।
अन्तर्दृष्टिं लभेरंस्ते तत्त्वजिज्ञासवो द्विजाः ॥
तदा जिज्ञासवो नूनं परमाणुस्वरूपतः ।
स्थूलान्येव ममाङ्गानि ज्ञात्वा नित्यानि सर्वथा ॥
षोड़षधा विभक्तानि दृष्ट्वा तान्येव मे पुनः ।
वादसाहाय्यतो वारि पर्यालोचनलोचनैः ॥
सृष्टिं निरीक्ष्य तस्याश्च कर्त्तारं केवलं हि माम् ।
शक्नुवन्ति बुधा विप्राः ! अनुमातुं कुलालवत् ॥
अस्यां च ज्ञानभूमौ हि क्षेत्रे तत्त्वज्ञमानसे ।
आत्मज्ञानीयबीजस्य प्ररोहो जायते ध्रुवम् ॥
एतां वदन्ति भूमिं वै ज्ञानदां ज्ञानिनो जनाः ।
ददात्येषा यतो भूमिर्ज्ञानं नित्यं मुमुक्षवे ॥

आरूढानां ज्ञानभूमावेतस्यां नियमेन च ।
ममोपास्तौ प्रवृत्तानां येन केन प्रकारतः ॥
मुमुक्षूणां ध्रुवं चित्ते ज्ञानवायुप्रकम्पितम् ।
मूलमज्ञानवृक्षस्य सर्वथा शिथिलायते ॥ इति ॥

ज्ञानभूमौ यदनुभूयते, तद्विषये स्मृतावित्थमुपलभ्यते—

यत्किञ्चिदासीज्ज्ञातव्यं ज्ञातं सर्वं मयेति धीः ।
आद्याया भूमिकायाश्चानुभवः परिकीर्तितः ॥
प्रथमायां एतद्भूम्युपयोगि न्यायदर्शनमवगन्तव्यम् । इति॥१८७॥

द्वितीयां वर्णयति--

सन्न्यासदा ॥ १८८ ॥

सन्न्यासम् अधर्मत्यागं ददातीति सन्न्यासदा । अत्र विषये स्मृतौ यथा—

संन्यासदाभिधायां हि ज्ञानभूम्यां प्रतिष्ठिताः ।
मुमुक्षवः शरीरं मे स्थूलमल्पशरीरतः ॥
सम्पश्यन्तो ममाङ्गेषु स्थूलेष्वेव महर्षयः ।
कुर्वन्तः सूक्ष्मशक्तीनामनुभूतिं निरन्तरम् ॥
धर्माधर्मौ च निर्णीय ह्यधर्मं त्यक्तुमीशते ।
ज्ञानभूमिर्द्वितीयाऽत एषा संन्यासदोच्यते ॥

द्वितीयज्ञानभूमेरनुभवो यथा स्मृतौ—

"त्याज्यं त्यक्तं मयेत्येवं द्वितीयोऽनुभवो मतः ।" इति ।

पदार्थविद्यासाहाय्येन स्थूलप्रकृतिरहस्यमवगत्य धर्मप्राप्तावधर्मपरित्यागे यत्नशीलस्तत्त्वज्ञानी भूमावत्र कार्यकारणस्वरूपमवधारयन् इन्द्रियप्रवृत्तिं परित्यजतीत्येव तस्याः संक्षेपतो रहस्यम् । एतद्भूमेरुपयोगि वैशेषिकं दर्शनं विज्ञेयम् ॥ १८८ ॥

तृतीया निरूप्यते—

## योगदा ॥ १८६ ॥

योगं चित्तवृत्तिनिरोधं ददातीति योगदा । एतद्विषये स्मृतौ यथा—

योगदायां तृतीयायां ज्ञानभूम्यां मुमुक्षवः ।
चित्तवृत्तिनिरोधस्य कुर्वतोऽभ्यासमुत्तमम् ॥
मच्छक्तिं संयमेनैतां मां पुनर्ब्राह्मणोत्तमाः ।
अभ्यासेनैकतत्त्वस्य पृथक्त्वेन निरीक्षितुम् ॥
यस्मिन् काले प्रवर्त्तन्ते सूक्ष्मदृष्टिस्वरूपकम् ।
साधकेषु तदोदेति प्रत्यक्षं नन्वलौकिकम् ॥
ज्ञानभूमिमिमां विज्ञा योगदां च वदन्त्यतः ।
चित्तवृत्तिनिरोधं यद्योगमेषा ददात्यलम् ॥

तृतीयाया एतस्या ज्ञानभूमेरनुभवविषये स्मृतौ यथा—

प्राप्या शक्तिर्मया लब्धाऽनुभवो हि तृतीयकः, इति ।

एतद्भूमिपथप्रदर्शकं योगदर्शनमवधेयम् ॥ १८६ ॥

चतुर्थी कथ्यते—

## लीलोन्मुक्तिः ॥ १६० ॥

लीलायाः प्रकृतिलीलातो मुक्तिर्मोक्ष इत्यर्थः । स्मृतौ यथा—

लीलोन्मुक्तिं चतुर्थीं वै ज्ञानभूमिं प्रपद्य च ।
अघटयघटनायां हि पटीयस्या मुमुक्षवः ॥
त्रैगुण्यलीलामय्या हि तत्त्वं मे प्रकृतेर्विदुः ।
तदा लीलामयी स्वस्यां लीलायां प्रकृतिः पुनः ॥

नासञ्जयितुमीष्टे तान् साधकान् विश्वविभ्रमाः ।
लीलोन्मुक्तिं बुधाः प्रोचुर्ज्ञानभूमिमिमामतः ॥

चतुर्थज्ञानभूमेरनुभवविषये स्मृतौ प्रोक्तम् , यथा—

मायाविलसितं चैतद्दृश्यते सर्वमेव हि ।
न तत्र मेऽभिलाषोऽस्ति चतुर्थोऽनुभवो मतः ॥

यद्दर्शनप्राप्तज्ञाननेत्रद्वारा तत्त्वज्ञानिनश्चिदाकाशे तटद्वयमनुभूयते, एकत्रतटे प्रकृतिरपरत्र च पुरुष उभावप्येतावनाद्यनन्तस्वरूपं धारयन्तौ तिष्ठतः । सांख्यदर्शनस्यैषोऽनुभयो विज्ञेयः ॥ १६० ॥

पञ्चमी प्रोच्यते—

## सत्पदा ॥ १६१ ॥

सत् जगदेव पदं परमात्मरूपं यत्र सा भूमिः सत्पदा । तथा हि स्मृतौ—

पञ्चमीं ज्ञानभूमिं ते यदा सम्प्राप्य सत्पदाम् ।
अभेदज्ञानमाप्तुं वै चित्ते स्वस्मिन् मुमुक्षवः ॥

आरभन्ते तदा तेषामनुभूतेर्हि शक्तयः ।
विशेषेण विवर्धन्ते नात्र कार्या विचारणा ॥

अस्त्येकत्वादभेदो यो मन्मत्प्रकृतिगोचरः ।
यो वा भेदोऽस्ति मे विप्राः कार्यकारणरूपयोः ॥

तं वैज्ञानिकनेत्रेण विस्पष्टं ज्ञातुमीशते ।
ज्ञात्वा सम्यग् रहस्यं च विश्वोत्पादककर्मणः ॥

जगदेवास्म्यहमिति मां निरीक्ष्य विचारतः ।
कार्यब्रह्मण एतस्य विबुध्यन्ते स्म सत्यताम् ॥

एनां वदन्ति विद्वांसो भूमिं वै सत्पदामतः।
सद्भावस्य यतोऽमुष्या ज्ञानं लोकैरवाप्यते॥

पञ्चमज्ञानभूमेरनुभवविषये स्मृतौ यथा—

जगद्ब्रह्मेत्यनुभवः पञ्चमः परिकीर्तितः।

महर्षिभरद्वाजकृतं महर्षिजैमिनिकृतं चेतिभागद्वयविभक्तकर्म-मीमांसादर्शनमननेनैतस्या ज्ञानभूमेरधिकारः प्राप्यते॥ १६१॥

षष्ठीं भूमिं वर्णयति—

आनन्दपदा॥ १६२॥

आनन्दः परमेश्वर एव पदं यत्र सा भूमिः आनन्दपदा बोध्या। स्मृतौ यथा—

नन्वानन्दपदां षष्ठीं ज्ञानभूमिं प्रपद्य वै।
एकाधारे तु मय्येव मम भक्ता मुमुक्षवः॥
कर्मराज्यं जडं विप्राः! दैवराज्यं च चेतनम्।
शक्नुवन्ति यदा द्रष्टुं तदा मे रससागरे॥
उन्मज्जन्तो निमज्जन्तो जगदित्यहमेव माम्।
समीक्षमाणा अद्वैतमानन्दमुपभुञ्जते॥
बुधाः सम्प्रोचुरानन्दपदां भूमिमिमामतः।
आनन्दः साधकैर्यस्मादस्यां भूमाववाप्यते॥

एतद्भूमेरनुभवविषये स्मृतौ यथा—

"ब्रह्मैवेदं जगत् षष्ठोऽनुभवः किल कथ्यते।"

अस्याः षष्ठ्या ज्ञानभूमेर्विशेषपरिचायकं भक्तिमार्गमित्ति-रूपम् उपासनारहस्यमीमांसकं दैवीमीमांसानामकं दर्शनमेवावलम्ब-नीयम्। अलौकिकबुद्धिगम्यसूक्ष्मदैवराज्यस्य दर्शकमिदं दर्शनं वेदस्योपासनाकाण्डमीमांसकं विज्ञेयम्॥ १६२॥

सप्तमीभूमिरुच्यते—

परात्परा ॥ १६३ ॥

विषयेऽत्र स्मृतौ यथा—

अन्तिमां ज्ञानभूमिं मे सप्तमीं च परात्पराम् ।
सम्प्राप्य ज्ञानिनो भक्ताः कार्यकारणयोर्द्विजाः ॥
भेददृष्टिलयं कृत्वा स्वरूपे यान्ति मे लयम् ।
भेदज्ञानलयेनैव तेषां शुद्धान्तरात्मनि ॥
सर्वेषु प्राणिवृन्देषु किलैकत्वप्रदर्शकम् ।
तदा मे ज्ञानिभक्तेषु मयि भेदश्च नश्यति ॥
लीयन्ते मत्स्वरूपे ते स्वरूपज्ञानसंश्रयात् ।
अतो वदन्ति विद्वांस इमां भूमिं परात्पराम् ॥

एतस्याः सप्तम्या ज्ञानभूमेरनुभवसम्बन्धे स्मृतिशास्त्रे प्रतिपादितम्, यथा—

अद्वितीयं निर्विकारं सच्चिदानन्दरूपकम् ।
ब्रह्माहमस्मीति मतिः सप्तमोऽनुभवो मतः ॥
इमां भूमिं प्रपद्यैव ब्रह्मसारूप्यमाप्यते ।
नात्र कश्चन सन्देहो विद्यते मुनिपुङ्गवाः ॥

वेदान्तदर्शनापरनामकं ब्रह्ममीमांसादर्शनं सर्वोपनिषदश्चैतस्या अन्तिमज्ञानभूमेरधिकारं प्रापयितुं परमं साहाय्यमाचरन्ति । यथा किलोच्चप्रासादपृष्ठमधिरोढुं सोपानान्येव सहायकानि, तथैव सोपानश्रेणिस्वरूपाः सप्तज्ञानभूमीरतिक्रम्य जीवः परमानन्दमयस्वस्वरूपपारावारे विलीयते । उभाभ्यां प्रारब्धपुरुषार्थाभ्यां हि तत्त्वज्ञानिना ज्ञानभूमिष्वेतासु यथाक्रमगतिरवाप्यते । एतासु सप्तसु ज्ञानभूमिषु वैदिकानि सप्तदर्शनानि यथाक्रमं पथप्रदर्शकानि विज्ञातव्यानि ॥ १६३ ॥

विचारभेदं प्रदर्शयति—

**तत्र ज्ञानशून्याश्चतस्रो वैज्ञानिक्योऽन्याः ॥ १६४ ॥**

अज्ञानभूमयः सप्त, ज्ञानभूमयश्च सप्त मिलित्वा चतुर्दशभूमयोऽभूवन्। तासु प्रथमाश्चतस्रो विज्ञानशून्याः। अन्या दश विज्ञानसमन्विता विज्ञातव्याः। समष्टिभूतानाम् उद्भिज्ज-स्वेदजाण्डजजरायुज-पशूनां चिदाकाशसम्बन्धिन्यो याश्चतस्रोऽज्ञानभूमयः सन्ति तासु जडराज्यजीवसम्बन्धोपेतत्वान्न कथमपि विज्ञानविकाशो भवितुमर्हति। अतस्तद्विषये कस्यचिदपि दार्शनिकविचारस्य स्थापनावसर एव नास्ति। एतासां चतसृणामनन्तरं यास्तिस्रोऽज्ञानभूमयः, क्रमिकात्मज्ञानपरिपूर्णायाश्च सप्तवैदिक्यो दार्शनिकभूमयः सन्ति, एतासु दशस्वपि यथाधिकारं वरीवर्त्ति किल वैज्ञानिकः सम्बन्धः। एता अनुसृत्य अधिकारानुरूपा दार्शनिका अधिकाराः प्राप्यन्ते। सप्तज्ञानभूमीनामनुसारेण सप्तवैदिकानि दर्शनानि जगत्प्रसिद्धानि सन्ति। अवशिष्टानां तिसृणां भूमीनां सम्बन्धनिबन्धनान्यनेकानि अवैदिकदर्शनानि जगति लभ्यन्ते ॥ १६४ ॥

ताभिः कर्मसम्बन्धं निदर्शयति—

**अतो बुद्धिवैचित्र्यमियत्पापपुण्ययोः ॥१६५॥**

अतः कारणादेव पापपुण्ययोरेतावद्बुद्धिवैचित्र्यं निभाल्यते। नराणां नारीणां चानेकेऽधिकाराः सन्ति। तिसृणामज्ञानभूमीनां सप्तानां च वैदिकज्ञानभूमीनां प्रकारभेदेन मानवा दशाधिकारवन्तो भवन्ति। पुनरपि ते त्रिगुणमनुसृत्य त्रिविधा दृश्यन्ते। तेषु चापि प्रकृतिप्रवृत्तिविभिन्नता। अतः संसारे पापपुण्ययोः समधिकं वैचित्र्यं परिदृश्यते, एतत्कारणं किन्न मनुष्यलोके पापबुद्धेः पुण्यबुद्धेश्चानेकप्रकारकत्वमेव समवधेयम् ॥ १६५ ॥

अन्यदपि—

## न सर्वादानक्षमत्वमस्याः ॥ १६६ ॥

अस्या मानवबुद्धेः सर्वादानस्य सर्वपदार्थग्रहणस्य क्षमत्वं सामर्थ्यं न विद्यते । यथा हि पापपुण्ययोरनेकेऽधिकारास्तथैव ज्ञानाज्ञानभूमिभेदानुसारं मानवबुद्धीनां नानात्वं सिध्यति । अत एका बुद्धिर्नैव किल भवितुमर्हति सर्वविषयग्रहणसमर्था ॥ १६६ ॥

अन्यच्चापि—

## न वा सर्ववेदित्वं सर्वेषाम् ॥ १६७ ॥

सर्वेषां मानवानां सर्ववेदित्वं सर्वज्ञत्वं न विद्यते । सर्वः सर्वं न जानातीत्यर्थः । बुद्धिवैचित्र्यादेव कारणात् पुमांसः स्त्रियो वा सर्वानपि विषयान् समानरूपेण ग्रहीतुं नैव शक्नुवन्ति । पूर्वजन्मार्जितसंस्कारबलेनाज्ञानज्ञानाधिकारवती बुद्धिर्मानवैरधिगम्यते । केनापि कामप्रधानः केनचिदर्थप्रधानः केनापि वा धर्मप्रधानो मोक्षप्रधानो वा विषय आधिक्येनावधारयितुं शक्यते । कोऽपि स्थूलविषयं कश्चिच्च सूक्ष्मविषयमधिकं वेत्ति । अतः सर्वेषां सर्ववेदिता न सम्भवति ॥ १६७ ॥

निष्कर्षमभिधत्ते—

## अतोऽधिकारोऽपेक्ष्यः ॥ १६८ ॥

अतः कारणादेव अधिकारस्यापेक्षा विद्यते । श्रुतिस्मृतिप्रतिपादितानां वर्णाश्रमाध्ययनाध्यापनाचारविचारविशेषधर्मादीनां सर्वेऽप्यधिकारभेदाः पूर्वोक्तमकाट्यं दार्शनिकसिद्धान्तं निर्दिशन्ति । यो वा मानवः सम्प्रदायो धर्ममतं वाऽऽचाराद्यधिकारभेदं नाङ्गीकरोति स नूनं प्रमादग्रस्तो जायत इत्यत्र नास्ति सन्देहलेशः ॥ १६८ ॥

मुक्तिप्रसंगात् पुनरुच्यते—

**जीवन्मुक्तानुभवस्त्रिविधस्त्रिभाववत् ॥ १९९ ॥**

त्रिभाव इव जीवन्मुक्तस्यानुभवस्त्रिविधो विज्ञेयः। सच्चिदानन्दरूपं त्रिभावमनुसृत्य यदि भगवद्भावदर्शनं त्रिभावात्मकं सिद्धम्, तर्हि तदनुसारेणैव जीवन्मुक्तावस्थायां तदीयान्तःकरणस्य स्वतन्त्रां स्थितिमनुसृत्य तदन्तःकरणसम्बन्धिनीमलौकिकीं धारणामपि त्रिप्रकारां विजानीयात्। लोकातीतस्य बुद्धेरप्यगोचरस्य रहस्यस्यैतस्य विषये स्मृतावपि प्रोक्तम्। तथाहि—

मनसा मनसि च्छिन्ने स्वेन्द्रियावयवात्मनि।
सत्यालोकाज्जगज्जाले प्रच्छन्ने विलयं गते॥

छिद्यते क्षीर्णसंसारकलना कल्पनात्मिका।
भ्रष्टबीजोपमा सत्ता जीवस्य इति नामिका॥

पश्यन्तीनाम कलितोत्सृजन्ती चेत्यचर्वणाम्।
मनोमोहाभ्रनिर्मुक्ता शारदाकाशकोशवत्॥

शुद्धा चिद्भावमात्रस्था चेत्यचिन्त्यापलं गता।
समस्तसामान्यवती भवतीर्ण - भवार्णवा॥

अपुनर्भव - सौषुप्तपद - पाण्डित्यपीवरी।
परमासाद्य विश्रान्ता विश्रान्ता वितते पदे॥

एतत्ते मनसि क्षीणे कथितं परमं पदम्।
द्वितीयं शृणु विप्रेन्द्र! शक्तेरस्याः सुपावनम्॥

एषैव मनसोन्मुक्ता चिच्छक्तिः शान्तिशालिनी।
सर्वज्योतिस्तमोमुक्ता वितताकाशसुन्दरी॥

घनसौषुप्तलेखावत् च्छिलान्तः सन्निवेशवत्।
सैन्धवान्तःस्थरसवत् वातान्तः स्पन्दशक्तिवत्॥

कालेन यत्र तत्रैव परां परिणतिं यदा ।
शून्यशक्तिरिवाकाशे परमाकाशगा तदा ॥

चेरशांशोन्मुखतां नूनं त्यजन्तीव चापलम् ।
वातलेखेव चलनं पुष्पलेखेव सौरभम् ॥

कालताकाशते त्यक्त्वा सकले सकलाकला ।
न जड़ा नाऽजड़ास्फारा धत्ते सत्तामनाभिकाम् ॥

दिक्कालाद्यनवच्छिन्न - महासत्तापदं गताम् ।
तूर्यं तूर्यांशकलितामकलङ्कामनामयाम् ॥

काञ्चिदेव विशालाञ्च साक्षिवत्समवस्थिताम् ।
सर्वतः सर्वदा सर्वप्रकाशस्त्वाद्भुततत्पराम् ॥

एषा द्वितीया कथिता पदवा तव सुव्रत ।
तृतीयं शृणु वक्ष्यामि पदं पदविदांवर ॥

एषा दृकचेतश्वलनादनामार्थी पदं गता ।
ब्रह्मात्मेत्यादि शब्दार्थां अतीतोदेति केवला ॥

स्थैर्येण कालतः स्वस्था निष्कलंका परात्मना ।
तूर्यातीतादिनामत्त्वादपि याति पदं पदम् ॥

सा परा परमाकाष्ठा प्रधानं शिवभावतः ।
चित्स्येका निरवच्छेदा तृतीया पावनीस्थितिः ॥

चिरमस्यां प्रतिष्ठायां सर्वाध्वध्वगदूरगाः ।
सा ममाप्यङ्ग वचसां न समायाति गोचरम् ॥ इति ॥१९९॥

विज्ञानं तत् सुस्पष्टयति—

**तद्गतेः स्वाभाविकत्वात् ॥ २०० ॥**

तस्य जीवन्मुक्तस्य गतेः स्वाभाविकत्वात् पूर्वोक्तोनुभवः प्राप्यते । सहजकर्मप्रभावे सर्वथा निपतितस्य जीवन्मुक्तमहापुरु-

षस्य जैवादिकर्मबाधां निराकुर्वतः सरलप्रवाहपतितवस्तुवत् अन्तः-करणं क्रमप्राप्तामवस्थामतिक्रामत् दृढतया स्वस्वरूपे विलयं गन्तुमग्रेसरति। यथा नदी समुद्रसमागमकाले समुद्रेण सह तादात्म्य-भावधारणसमये समुद्रान्तगर्मं प्राप्ता अन्ते सामुद्रिकाद्वैतसत्तायां परिणमति, तथैवात्मज्ञानिनो जीवन्मुक्तस्यान्तःकरणं सहजकर्मणः स्वाभाविकमन्तिमं वेगं दधानं पूर्वोक्तमनुभवं प्राप्नोति। अन्यथा स्वस्वरूपानुभव एकरसोऽद्वैतभावापन्न एव। नन्ववस्थायामस्यां किमस्ति काचिन्न्यूनता, यया विभिन्नभावा अनुभूयन्ते एतज्जिज्ञासु-शंकां समाधत्ते—सहजकर्मणोऽन्तिमवेगेन हेतुना न तत् सम्भवति; किन्तु यदा पुरुषात् प्रकृतेर्व्यक्तता, त्रिगुणमय्याः प्रकृतेः स्पन्दनेन सह कर्मसम्बन्धोऽवस्थान्तरं धत्ते, तदानीं सहजकर्मणोऽन्तिमवेग-सत्त्वेऽपि भेदाभेदयोरचिन्त्या गम्भीरविज्ञानपरिपूर्णा दशैतादृशी तिष्ठतीत्यभ्युपगन्तव्यमेव। तस्मिन् समये स्वरूपोपलब्धौ सत्यां पूर्वोक्तावस्थानामुत्तरोत्तरं परिणामेनान्तकाले स्वस्वरूपप्रतिष्ठा निश्च-प्रचेति ॥ २०० ॥

प्रसंगतः कर्ममहत्त्वं विविनक्ति—

**कर्मनिष्पादकत्वं ज्ञानिनामपि ॥ २०१ ॥**

ज्ञानिनां तत्त्वज्ञानिनां जीवन्मुक्तानामात्मज्ञानिनामपि कर्म-निष्पादकत्वं कर्मणः कर्तृत्वमास्ते। एतत् किल कर्मणः सर्वातिशायि महत्त्वं विद्यते। ऋते कर्मणः शरीरमेव ना स्थास्यति। समुन्नत-ज्ञानशालिनामपि कर्माधीनत्वात् कर्मणो महिमा सर्वोपरिवर्त्तत इत्यत्र कः सन्देहः ॥ २०१ ॥

अन्यदपि—

**भक्तानामपि ॥ २०२ ॥**

भक्तानामपि कर्माधीनत्वमित्यर्थः। यथा हि ज्ञानार्जनदशाया-मारुरुक्षुणा मुनिना श्रवणमनननिदिध्यासरूपं कर्मावश्यं क्रियते, जीवन्मुक्तदशायां वर्त्तमानेन योगारूढेनापि सहजं कर्म विधीयत एव, तथैव भक्तेनापि समुन्नततमावस्थायामपि कर्म परित्यक्तुं न शक्यते, कर्मसम्बन्धे पूर्वमपि बहुप्रपञ्चितम्। भक्तिशास्त्रस्य केषाञ्चिदाचार्याणां मतसम्बन्धीयशंकासमाहितये पूज्यपादो महर्षिः सूत्रमेतदाविर्भावयामास। केवलमात्मनिवेदनेनैव भक्तेः पराकाष्ठायाः प्राप्तिरिति कैश्चिद् भक्तिशास्त्राचार्यैः स्वीक्रियते। भक्तिप्राप्तये तत्तदाचार्यैरनेके विभिन्ना उपाया उपवर्णिताः, परन्तु मतस्यैतस्य प्राशस्त्यमत्रगन्तव्यम्। आत्मनिवेदनं मानसिकं कर्म। सहजातं शारीरिकं कर्म भक्तेनापि समनुष्ठेयमेव। अतः कस्यापि भक्त-शिरोमणेः कर्मत्यागोऽसम्भव एव ॥२०२॥

विज्ञानमिदं पुनरपि सुस्पष्टयति—

## आशरीरं तज्ज्ञानाभावात् ॥ २०३ ॥

आशरीरं शरीरस्थितिपर्यन्तं तस्य ज्ञानस्य शारीरिककर्मपरि-त्यागरूपज्ञानस्याभावादभावदर्शनादित्यर्थः। कर्म शरीरसहजातम्। प्रकृतिस्पन्दनेन कर्मोत्पत्तिः शरीरं हि प्राकृतिकमेव। अतःशरीरे विद्यमाने कर्माभावोऽसम्भवः। अतः कारणादेव कर्मगतिवेत्तृभि-राचार्य्यैः कर्मणो महत्त्वं सर्वाभ्यर्हितमुक्तम् ॥ २०३ ॥

निःश्रेयसप्रसङ्गादुच्यते—

## मिथः कर्माकर्मेक्षणं कर्मयोगविज्ञानम् ॥ २०४ ॥

मिथः परस्परं कर्माकर्मेक्षणं, कर्मण्यकर्मणः अकर्मणि च कर्मणो दर्शनं कर्मयोगविज्ञानम्। शरीरे वर्त्तमाने कर्मपरित्यागो न सम्भवतीति पूर्वमेव निर्णीतम्। कर्मत्यागस्य प्रयत्ने क्रियमाणेऽपि

शारीरिकस्य कर्मणोऽनिवार्यता स्वतः सिद्धा । इन्द्रियेषु हठान्निरुद्धेष्वपि मानसिकं कर्म भवत्येव मनसोदुर्निग्रहत्वाच्चञ्चलस्वभावत्वाच्च । संकल्पविकल्पाभ्यामृते मनसोऽस्तित्वमसम्भवम् । अतोऽप्यज्ञातकर्मनिरोधावस्थायां ये कर्मा[illegible]मनुभवन्ति, ये च कामनाराहित्येन कर्मानुष्ठानेन कर्माभावमनुभवन्ति त एव कर्मयोगिनः । यतो निष्कामं कर्म दग्धबीजवन्मन्यते ॥ २०४ ॥

तत्परिणामं निर्दिशति—

## मुक्तिहेतु ॥ २०५ ॥

निष्कामं कर्म मुक्तेः कारणं भवति । कर्मानुष्ठानं विना मानवो न स्थातुमर्हति । कर्मयोगेन कर्म दग्धबीजवच्चेत्तर्हि कर्मयोग एव मुक्तेः कारणम् । कर्मकाण्डस्यान्तिमः सिद्धान्तः कर्मयोग एव, स हि निःश्रेयसप्रदः ॥ २०५ ॥

कर्मयोगिनं सावधानं विधातुमुच्यते—

## अभिनिवेसादा कर्म न दुःखदम् ॥ २०६ ॥

अभिनिवेशादा अभिनिवेशपर्यन्तं कर्म न दुःखप्रदम् । कर्मणोऽनुष्ठानादभिनिवेशसम्भावना । यद्यप्यभिनिवेशमन्तरेणापि समुन्नताधिकारपरायणः कर्मयोगी स्वभावसिद्धरूपेण । कर्मानुष्ठातुं शक्नोति । परन्तु प्रकृतेः स्वाभाविकं नियममनुसृत्य कर्मानुष्ठानेनाभिनिवेशः सम्भवति । दीर्घकालिकनिरन्तरकर्मविधानेनाभिनिवेशो नाऽसम्भवः । अभिनिवेशात् कर्म समीचीनं जायते । सुतरां कर्मयोगपथपथिकहितायेदमुच्यते यत् जातेऽप्यभिनिवेशे तत्त्वज्ञानिनः कर्मयोगनिरतस्य महापुरुषस्य कृते तत्कर्म दुःखप्रदं भवितुं नार्हति ॥२०६॥

वा साधारणे जीवे यादृशी चञ्चलता समुत्पद्यते, जीवन्मुक्ते तथा न भवति। विषयभोगेनापि तदीयान्तःकरणसमता तिष्ठत्येव ॥ २३८ ॥

मोक्षप्रसङ्गादभिधीयते—

## स्वाभाविकक्रियावेगदर्शनं ज्ञानतत्त्वम् ॥ २३९ ॥

स्वाभाविक्याः क्रियाया यो वेगस्तस्य दर्शनं ज्ञानतत्त्वमवधेयम्। कर्मयोगे दृढत्वसम्पादनाय कर्मण्यकर्मणः, अकर्मणि च कर्मणः प्रदर्शनाय तथा च तत्त्वज्ञानपरिपूर्णतासम्पादनहेतवे प्रोच्यते यत्कर्मप्रवाहस्वाभाविकदशावेगस्य यथार्थस्वरूपतस्तृतीयनेत्रापरनामकज्ञाननेत्रद्वारा द्रष्टृत्वमेव ज्ञानरहस्यम्। जीवन्मुक्तो यदा प्राचीनसंगृहीतस्वरूपसञ्चितेन नवीनेन क्रियमाणेन च कर्मणा न बध्यते तदानीं प्रारब्धवेगवशादेव तदीयं शरीरं तिष्ठति। तत्समयं प्रारब्धवेगास्तितता, तया च शरीरावस्थितिः केवलया प्रकृतिस्वाभाविकक्रिययैव सम्पद्यते। तदा जीवन्मुक्तस्यान्तःकरणं संस्कारवासनाभ्यां विहीनं स्वच्छतां प्रपद्यते। अवस्थायामस्यां द्रष्टृदृश्यदर्शनरूपत्रिपुटिस्तिष्ठति, यतोऽसौ स्वाभाविकी। अतः समुन्नततमायामस्यां स्थितौ कर्मणस्तत्फलस्य च वैशिष्ट्ये दृष्टिर्न निपतति। केवलं कर्मणः स्वाभाविकगतावेव दृष्टिस्तिष्ठति ॥ २३९ ॥

विज्ञानमिदं पुनर्द्रढयति—

## कुलालचक्रवद्वेगः ॥ २४० ॥

कुलालस्य कुम्भकारस्य चक्र इव प्रारब्धजनितशरीरवेगो जीवन्मुक्ते तिष्ठति। स्वाभाविकक्रियावेगस्वरूपं सुस्पष्टयितुं पूज्यचरणसूत्रकारो महर्षिः सूत्रमेतदाविश्चक्रे। कुलालः स्वचक्रं दण्डेनैकेन भ्रामयित्वा दण्डमपसारयति, तदानीं कुम्भकारहस्तशक्तिर्दण्डद्वारा तच्चक्रे

यावती प्रायुज्यत, तच्छक्तिसमाप्तिकालपर्यन्तं चक्रोऽसौ परिभ्राम्यति, ततः शाम्यति तथैव जीवन्मुक्ते सञ्चितक्रियमाणकर्माणि पूर्वत एव शक्तिहीनत्वात् शान्तिमापद्यन्ते । परन्तु यस्य प्रारब्धकर्मणो वेगेनैतज्जन्मशरीरं समुदपद्यत, तद्वेगसमाप्तिं यावत् कुलालचक्रवत् जीवन्मुक्तशरीरं तिष्ठति । शरीरभोगस्तेन भुज्यत एव । योगिराजः स्वकर्मयोगप्रभावात् समभावापन्नान्तःकरणेनात्मज्ञानमनुभवन् सदैव कर्मणः स्वाभाविकीं गतिमवलोकमानः स्वस्वरूपेऽधिष्ठानं विधत्ते ॥ २४० ॥

एतदवस्थाया दिग्दर्शनं कारयति—

## कार्यकारणयोरैक्यं तद्भावरूपम् ॥ २४१ ॥

कार्यस्य कारणस्य चैक्यमेव तद्भावरूपं तत्स्वरूपमित्यर्थः । तत्त्वज्ञानपरिपूर्णताप्रभावात् तत्त्वज्ञो महात्मा कार्यब्रह्म कारणब्रह्म-चैकेनाद्वितीयस्वरूपेण द्रष्टुं सामर्थ्यं लभते । एतदवस्थायां तृतीयं नेत्रं समुन्मिलति, येन योगिराजोऽसौ नैजं शरीरं तज्जनितभोगं च कुलालचक्रवदनुभवितुं समर्थो जायते ॥ २४१ ॥

प्रसङ्गतः शंका समाधीयते—

## तत्कार्यं भगवतोभेदाभावात् ॥ २४२ ॥

भेदस्य अभावात् भेदराहित्यात् तत्कार्यं तस्य जीवन्मुक्तस्य कार्यं भगवत ईश्वरस्यैवावधेयम् । जिज्ञासुरत्र शङ्कते जीवन्मुक्तेन कर्मयोगिना लोकदृष्ट्या शुभमशुभं च कार्यमनुष्ठीयते, तस्य किं कारणम् ? लौकिकदृष्ट्या भक्ते रागः अभक्ते च विद्वेषः कर्त्तव्यकर्मणि चाभिनिवेशः प्रदृश्यंते, किमत्र कारणम् ? ज्ञानस्य परिपूर्णतायां सत्यामपि जीवन्मुक्ते भ्रमप्रमादसदृशकार्यकलापः कथं परिदृश्यते ? समाधत्ते— अविद्योपहितचेतनो जीवः । मायोपहितश्चेश्वरः । जीवोऽविद्याधीनः ।

ईश्वरस्तु मायामधिकृत्य तिष्ठति। एकस्या एव महामायाया एतद्-वस्थाद्वयभेदसत्त्वेऽपि अधिष्ठातृद्वयस्वरूपे दिनरात्रिवदन्तरम्। जीवः स्वार्थी, अज्ञानाच्छन्नः, अहंकारवान् देशकालपरिच्छिन्नश्च। ईश्वरस्तु परार्थी ज्ञानपरिपूर्णः अहंतत्त्वातीतः सर्वव्यापको देशकाल-मतिशेते। वस्तुतोऽविद्याजनितमज्ञानमेव जीवे भेदबुद्धिमुत्पाद-यति। अन्यथा चित्स्वरूपविचारत उभयोर्जीवेश्वरयोरभेद एव। अहं-तत्त्वनाशाद् अविद्याप्रभावविलयेन च अद्वैतस्थितेरुदयाद् भेदबुद्धेर-भावः। तदानीं कुलालचक्रवत् भ्रमणशीलः पिण्डधारी जीवन्मुक्तो महापुरुषो यत् कार्यं विधत्ते तत्सर्वं भगवत्केन्द्रपरिचालितं मन्तव्यम्। अत एव भगवति भागवते चाभेदः। अतो जीवन्मुक्तेन महात्मना विधीयमानः कार्यकलापः लौकिकदृष्ट्या शुभोऽशुभश्च प्रतीयमानोऽपि देशकालपात्रानुकूलो हितकरश्चेत्यत्र न सन्देहलेशः॥ २४२॥

प्रसंगात् कर्ममहत्त्वमुच्यते—

## तस्मादविरुद्धः कर्मयोगः॥ २४३॥

तस्मात् कारणात् कर्मयोगपरायणजीवन्मुक्तकर्मणो भगवत्कार्य-सत्त्वात् कर्मयोगोऽविरुद्धः। जीवन्मुक्तमहापुरुषकार्यं देशकालपात्र-प्रकृत्यविरुद्धम्। अतः पूर्वप्रतिपादितशंकाया अवसर एव नास्ति। तत्परिपूर्णतायां उपकारित्वे वा न कोऽपि संशयः। देशकालयोः समष्टिकर्मणा पात्रस्य च व्यष्टिकर्मणा विशिष्टः सम्बन्धः। जीवन्मुक्तस्य कर्मयोगिनो महात्मनः क्रियमाणकार्येषु अहंकारराहित्यं निभाल्यते। यतस्तदन्तःकरणं व्यापकमुदारं च सद् भगवद्भावतां प्रपद्यते। तदानीं भगवतः प्रेरणयैव धर्मसंस्थापनार्थं सृष्टेरनुकूलचेष्टासद्भाव-हेतुना तदीयानि सर्वाण्यपि कर्माणि देशकालाविरुद्धानीत्यत्र न सन्देहलेशः। जीवन्मुक्तान्तःकरणे स्वीयपरकीयभावशून्यत्वात् सांसा-रिकजीवमात्रस्वकर्त्तव्यावधारणसामर्थ्य [illegible]

वनाऽपि नास्ति। अन्यच्च भगवत्प्रेरणयैव कार्यानुष्ठानत्वात् तदीयः कर्मकलापो नूनमेव पात्राविरुद्धः। परमेश्वरस्तु केवलं द्रष्टा, निर्लिप्तो निरीहश्चातस्तद्द्वारा भागवतचित्ते तत्प्रेरणायाः कुतः सम्भावनेति शंका समाधीयते। यद्यपि परमेश्वरः प्रकृतेर्द्रष्टा क्लेशकर्मविपाकादिभिरपरामृष्टः। परन्तु कर्मणः प्रकृतिसम्भूतत्वात् स्वाभाविककर्माणि तदधीनान्येव। अन्यच्च-अध्यात्माधिदैवाधिभूतप्राकृतिककार्यसञ्चालका ऋषयो देवाः पितरश्च तद्विभूतय एव। अतः स्वाभाविकं कर्म तत्प्रेरितमेवावधेयम्। अन्यथा धर्मसंस्थापनाय तस्य तद्विभूतेश्च प्रेरणमसंगतं स्यात्। अतोऽत्र न शंकावसरः। जीवन्मुक्तकर्माणि प्रकृतेरनुकूलानीति सुस्पष्टमेव। यतः स्वस्वरूपस्थितत्वात् सहजकर्माधीनत्वाच्च तदीयाः सर्वा अपि चेष्टाः प्राकृतिक्य एव भवन्ति। किं जीवन्मुक्तेऽविरुद्धदशासम्भावना नास्ति, किं वा सर्वेष्वपि कर्मयोगिष्वेतत् किं सम्भवतीत्यादिशंकानां समाधानमिदं यत्-आरुरुक्षु-योगारूढ-जीवन्मुक्तसाधकप्रभृतिषु कर्मयोगिषु कर्मयोगस्य यावानधिकारः सर्वोऽपि बाधारहित एव। आरुरुक्षुर्योगी यावत्कालपर्यन्तं युक्तस्तिष्ठति, तावत्समयपर्यन्तं तदनुष्ठितकर्मणः कामनाहंकारशून्यत्वात् तात्कालिकं तदीयं कर्म मुक्तात्मसमानमेव। निष्कर्षोऽयं यदविरुद्धकर्मानुष्ठायिनी शक्तिर्व्यक्तिविशेषस्य न भवति, सा तु कर्मयोगसुकौशलपूर्णाधिकारस्यैव मन्यते॥ २४३॥

अन्यद् वैशिष्ट्यमुच्यते—

## तत्र प्रत्यवायाभावः॥ २४४॥

तत्र कर्मयोगिनि प्रत्यवायस्य पापस्याभावो मन्यते। जीवन्मुक्तस्य का कथा सामान्यानां कर्मयोगिनामपि कर्माणि प्रत्यवायरहितानि जायन्ते। सकामकर्मणि बहुविधप्रत्यवायसम्भावना तिष्ठति।

यतः कर्मणि कामनासम्बन्धत्वात् देशकालसमष्टिकर्माणि बाधां जनयन्ति । कर्त्तुः प्रारब्धकर्माणि, सदसत्कर्मनियन्तारो देवासुराः द्वेषिणो निन्दका मानवाश्च बाधामुपस्थापयितुमर्हन्ति, एवमादयो बहुविधा बाधाः सकामकर्मर्थि प्राप्ता भवितुं शक्नुवन्ति । परन्तु निष्कामकर्मयोगेऽपरिपक्वदशायामपि बाधा सम्भावना नास्ति । आरुरुक्षुदशामारूढावस्थां वा प्राप्तस्य वा कर्मयोगिनो धृतिशालित्वे स्वकर्त्तव्यकर्मणि दृढत्वे च कापि बाधा तद्गतिरोधेन प्रभवति । यतः सर्वा अपि बाधाः कामनाश्रयेणैव प्रतिद्वन्द्विरूपेण साफल्यमधिगच्छन्ति । अन्यच्च मूले वासनाया अभावात् कार्यफलसिद्ध्य-सिद्धिजनितचित्तचाञ्चल्यराहित्यात् योगयुक्तावस्थायां दैवसाहाय्य-प्राप्तिसम्भावना तिष्ठति । कर्मयोगे केवलकर्त्तव्यबुद्धिसत्वात् कर्त्तुरुत्साहावरोधस्य नैव सम्भावना, न चापि दैवसाहाय्याधिगमे किञ्चिदप्यसौविध्यमवाप्यते । अतस्तन्मार्गः प्रत्यावायशून्यतां प्रपद्यते ।। २४४ ।।

द्वितीयं वैशिष्ट्यमुच्यते—

अनवपातः ।। २४५ ।।

तत्र अनवपातः पतनस्याऽभावो भवति । मुमुक्षुर्यावत् कर्मयोगपरिपूर्णतां न प्रतिपद्यते, तावत्तस्यारुरुक्षुदशायां वर्त्तमानस्य पतनसम्भावना तिष्ठति । यतस्तदानीं मलविक्षेपावरणानां न्यूनत्वेऽपि नैव पूर्णरूपेण नाशः । परन्तु यदि धैर्यमाश्रित्य कर्मयोगमनुसरन् तिष्ठेत् तर्हि पतनसम्भावना न स्यात् उत्तरोत्तरं क्रमोन्नतिरेव सम्भवेत् । सुकौशलपूर्णकर्मणा मलमपसरति । वासनाविरहितं भगवत्प्रीत्यर्थं क्रियमाणं कर्म उपासनारूपेण परिणतं सद् विक्षेपं निराकरोति । कर्त्तव्यबुद्ध्या विधीयमानं कर्म समत्वमुपेत्यावरणं विनाशयति । एवं हि यद्येकमात्रकर्मयोगस्यैव धैर्यमनुसृत्य नियमपूर्वकपरिपालनेन मुक्तिपथपथिकस्य पतनसम्भावना न तिष्ठति ।। २४५ ।।

तृतीयं वैशिष्ट्यमुच्यते—

स्वार्थहानम् ॥ २४६ ॥

तत्र कर्मयोगे स्वार्थस्य हानिर्जायते । जीवेश्वरयोरन्तरमुक्तपूर्वम् । ईश्वरः सर्वज्ञो जीवोऽल्पज्ञः । जीवसम्मुखे सर्वजीवहितकारितया परार्थितया चेश्वरस्य महत्त्वं यथा विद्यते तथैव जीवस्य महत्त्वं तदीयस्वार्थितायामेव प्रतिष्ठितम् । यथा यथा जीवः स्वार्थं विजहाति तथा तथैवासावीश्वरसान्निध्यमासादयति । वस्तुतः स्वार्थस्य सम्पूर्णहानिरेव मुक्तिपदप्राप्तिनिदानम् । यथा किलाहङ्कारहानेनैव मुक्तिरिति उपासनाकाण्डसिद्धान्तस्तथैव स्वार्थहानेन मोक्ष इति कर्मकाण्डसिद्धान्तः । कर्मयोगक्रमोन्नत्या यथा यथा वासनाक्षयो जायते, तथा तथा तत्रारुरुक्षुमुनौ स्वार्थहानिरित्यत्र न संदेहः ॥२४६॥

चतुर्थं विशेषत्वं प्रतिपादयति—

भगवत्कार्यसिद्धिः ॥ २४७ ॥

निष्कामकर्मयोगेन भगवत ईश्वरस्य यत् कार्यं तस्य सिद्धिर्भवति । पूर्वमेव निर्णीतमिदं यत् कर्मयोगनिष्णातजीवन्मुक्तमहापुरुषस्य व्यक्तिगतं जीवकेन्द्रं प्रणश्यति, ईश्वरप्रेरणयैव कुलालचक्रवद् भ्रमणशीलो यदि महात्माऽसौ कार्यकलापमनुतिष्ठति, तदेदमभ्युपगन्तव्यमेव यत् तस्य द्वारा भगवत्कार्यसिद्धिर्जायते । भगवति भागवते च भेदाभावात् भागवतस्य कार्यमपि भगवत एव । प्रकृतिस्पन्दनेन कर्मोत्पत्तिरिति पूर्वमेव निर्णीतम् । कर्म प्रकृत्या संजायते । परमेश्वरस्येक्षणमन्तरेण प्रकृतिः कार्यकारिणी न भवति । अप्राकृतकं कर्म जीवकेन्द्रात् प्राकृतिकं चेश्वरकेन्द्रादुद्भवति । अतो जीवन्मुक्तमहात्मनि या क्रियाः समुत्पद्यते, सा ब्रह्मप्रकृतिसमुद्भूतैव मन्तव्या न जीवप्रकृतिसमुद्भवेति ॥ २४७ ॥

मोक्षप्रसंगादुच्यते—

सदसन्नाशः ॥ २४८ ॥

कर्मयोगस्य पूर्णावस्थायां सतोऽसतश्च नाशो जायते। विद्या अविद्या चोभे एव ब्रह्मप्रकृतिभेदस्वरूपे। परिणामिनोऽसद्भावा अपरिणामिनः सद्भावाश्च ब्रह्मण्येव तिष्ठन्ति। जगतस्तत्रैव स्थितत्वात्तद्विराट्स्वरूपस्यैतदेव वैशिष्ट्यं विद्यते। एवमेव भगवद्भावापन्नस्य परमभागवतस्य जीवन्मुक्तमहापुरुषस्य कर्मयोगस्वरूपक्रियाकलापाः सदसद्भावभेदविरहिता इति वैज्ञानिकं सत्यम्॥२४८॥

अन्यदपि—

## साहजिकोऽसौ ॥ २४९ ॥

असौ कर्मयोगी जीवन्मुक्तमहापुरुषः साहजिकः सहजकर्माधीनो जायते। पूर्वसूत्रेषु कर्मयोगस्य महत्त्वं विशिष्टत्वं च सार्वभौमरूपेण प्रदर्शितम्। आरुरुक्षौ योगारूढे वा महात्मनि कर्मयोगस्यालौकिकापरिमेया शक्तिः यथाधिकारं सर्वत्रैव कार्यमनुतिष्ठति। आरुरुक्षुर्योगिराजो बाधाप्रत्यवायरहितः पतनभयशून्यः, जीवसहजातस्वार्थविरहितो भाग्यशाली तत्त्वज्ञानमाश्रयन्नन्ते नूतमेव जीवन्मुक्तपदवीमधिकरोति। ततश्च योगारूढदशायामसौ योगिराजो लोकातीतजीवन्मुक्तपदं प्राप्नोति। ब्रह्मभूतदशायामत्र भगवत्कार्यं सम्पादयन् जीवकोटित उन्मुक्तो भेदभावविरहितः, प्रकृतिसहजातकर्मयोगस्यान्तिमं फलमधिगच्छन् सहजकर्माधिकृत्य प्रवाहपतिततृणवत् कर्मप्रवाहे प्रवहन् प्रकृतिक्रोडशायी जायते। यथा सद्यः प्रसूतो बालकः सर्वतो निजशक्तिरहितः केवलं मातृशक्त्यैव जीवति, सर्वथा मातृस्नेहमाश्रयन् स्वीयेनासामर्थ्येन किञ्चिदपि कर्त्तुमसमर्थो मातृद्वारैवोत्तमरूपेण जीवनयात्रां निर्वहति नैजमस्तित्वं विस्मृत्य मातर्यैवानन्यलक्ष्यं विधत्ते; तथैव सर्वकर्मविमुक्तो मुक्तात्मा सहजकर्माश्रयेण कुलालचक्रवत् शरीरं परिचालयन् प्रारब्धवेगक्षयं यावत् लौकिकदृष्ट्या शरीरधारी भवन् प्रतीयते॥ २४९ ॥

सर्वाभ्यर्हितमहत्त्वं प्रतिपादयति—

**अत्र काम्यफलं निःश्रेयसं च ॥ २५० ॥**

अत्र दशायां काम्यफलं निःश्रेयसं चाधिगम्यते। लोकातीतदशायामत्र यदा कर्मयोगपूर्णताफलस्वरूपं जीवन्मुक्तिपदमुदेति, तदानीं महात्मना तेन निःश्रेयसं काम्यफलसमानभोगश्च प्राप्यते। साधनदशायां वैराग्यपरिपोषणार्थं योगी साधको विषयान् परित्यजन् मोक्षमार्गेऽग्रेसरति, तदा तस्य त्यागग्रहणभेदज्ञानमवश्यमेवतिष्ठति। दशेयं भेदाभेदरहितसमदशाप्राप्तयोगारूढावस्थायां न जायते। अलौकिकदशायामत्र मुक्तात्मा सिद्ध्यसिद्ध्योः समतामुपैति। योगयुक्तावस्थां प्राप्तोऽसौ इन्द्रियार्थमिन्द्रियकर्माणि कुर्वन् पद्मपत्रवन्निर्लिप्तस्तिष्ठति। कर्माणि कुर्वन्नपि ब्रह्मस्वरूपो महापुरुषोऽसौ परमात्मवत् कर्मातीतः केवलं कर्मद्रष्टा जायते। परन्तु शरीरसद्भावात् तेन सह प्रारब्धकर्मसत्त्वात् भोगसम्बन्धस्तिष्ठत्येव। अतः प्रकारान्तरेण निःश्रेयसमधिगतोऽसौ योगिराजः कामनारहितोऽपि कामनासंजातभोगादीन् प्राप्नोति। विशेषतश्च भगवति भागवते च भेदराहित्याद् आत्मपूजाप्रसादाधिकारितां प्रपद्यते। एतेनापि कारणेन दिव्यभोगानां तत्संमुखोपस्थानं सम्भवति। ब्रह्मप्रकृतिसहजातत्वात् कर्मब्रह्मस्वरूपम्। जीवकेन्द्रपरिचालितं तत् अविद्याग्रस्तजीवसंस्पर्शदोषेण दूषितं जायते। परन्तु तदेव कर्म यदि परमेश्वरकेन्द्रसञ्चालितं स्यात् तर्हि दोषरहितं ब्रह्मस्वरूपमेवावधेयम्। एतादृशकर्मयोगयुक्तो मुक्तात्मा मुक्तेर्मुक्तेश्चाधिकारी वेद्यः। अत्र सूत्रे वचनद्विरुक्तिः सिद्धान्तदृढतायै, तत्त्वजिज्ञासुशंकापनोदनार्थमवधेया। ब्रह्मणे ब्रह्मप्रकृतये, कर्मयोगाय जीवन्मुक्तमहापुरुषाय च भूयोभूयोनमोनमः ॥ २५० ॥

इतिश्रीकर्ममीमांसादर्शने भगवत्पूज्यपाद-महर्षि-स्वामि-ज्ञानानन्दविरचितभाष्ये चतुर्थोमोक्षपादः समाप्तः

समाप्तश्चायं ग्रन्थः।

———

श्रीभारतधर्म-महामण्डलके शास्त्रप्रकाश-विभागद्वारा प्रकाशित

## धार्मिक ग्रन्थ—

| | | |
|---|---|---|
| १—धर्मविज्ञान | ( प्रथम खण्ड ) | ५) |
| २—धर्मविज्ञान | ( द्वितीय खण्ड ) | ४) |
| ३—धर्मविज्ञान | ( तृतीय खण्ड ) | ४) |
| ४—धर्मकल्पद्रुम | ( प्रथम खण्ड ) | २) |
| ५—धर्मकल्पद्रुम | ( द्वितीय खण्ड ) | १॥) |
| ६—धर्मकल्पद्रुम | ( तृतीय खण्ड ) | २) |
| ७—धर्मकल्पद्रुम | ( चतुर्थ खण्ड ) | ३॥) |
| ८—धर्मकल्पद्रुम | ( पञ्चम खण्ड ) | २) |
| ९—धर्मकल्पद्रुम | ( षष्ठ खण्ड ) | ३॥) |
| १०—धर्मकल्पद्रुम | ( सप्तम खण्ड ) | २) |
| ११—धर्मकल्पद्रुम | ( अष्टम खण्ड ) | ३॥) |

अन्यान्य धर्मग्रन्थोंकी विशेष जानकारीके लिये बड़ा सूचीपत्र मगावें

प्राप्तिस्थान—व्यवस्थापक,
श्रीभारतधर्म-महामण्डल
शास्त्र-प्रकाश-विभाग
जगतगंज, वाराणसी कैंट।



मुद्रकः—सरला प्रेस, बाँसफाटक, वाराणसी–१.